THE

# CHOWKHAMBÂ SANSKRIT SERIES.

458-459.

THE

# CHANDRĀLOKA

OF

SHRI JAYADEVA

WITH THE RĀKĀGAMA COMMENTARY





BY

S'RĪ GĀGĀ BHATTA

*With a Foreword by*

Pandit Batuk Nath Sharma, M. A.,

SAHITYACHARYA,

Professor of Sanskrit, Benares Hindu University.

*Edited with Introduction etc., by*

PANDIT ANANTA RAM SHASTRI VETAL

SAHITYACHARYA

Sanskrit Teacher, U. P. College, Benares.



PUBLISHED BY

JAYA KRISHNA DAS HARIDAS GUPTA

*The Chowkhamba Sanskrit Series Office.*

BENÂRES.

1938



श्रीः

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥
स्तबकाः ४५८-४५९.

*Printed by Jai Krishna Das Gupta*
*at the Vidya Vilas Press, Benares.*
1938.

॥ श्रीः ॥

चौखम्बा-संस्कृत-ग्रन्थमाला

ग्रन्थ-संख्या ८३

नम्बर ४५८-४५९

# चन्द्रालोकः

श्रीजयदेवप्रणीतः

श्रीगागाभट्टकृतराकागमव्याख्यासहितः

श्रीकाशीहिन्दूविश्वविद्यालयाध्यापक—

साहित्याचार्य-श्रीबटुकनाथशर्म एम्. ए. महोदयैः

प्राक्कथनेन सनाथीकृतः

वाराणसेयोदयप्रतापविद्यालयाध्यापकेन

साहित्याचार्येण

अनन्तरामशास्त्रिवेतालेन

भूमिकादिभिः सम्भूष्य सम्पादितः ।

प्रकाशकः—

जयकृष्णदास हरिदास गुप्त

चौखम्बा संस्कृत सीरीज़ आफिस,

बनारस सिटी ।

वि० सं० १९९५



॥ श्रीः ॥

# सूचीपत्रम् ।


| विषयाः | पृष्ठानि |
| --- | --- |
| प्रास्ताविकं किञ्चित् | १–५ |
| पीयूषवर्षो जयदेवः | १–१३ |
| विषयानुक्रमणिका | १–१६ |
| चन्द्रालोकः | १–१७० |
| चन्द्रालोकस्य पाठभेदाः | १–२ |
| ग्रन्थेऽस्मिन्नुपलब्धानि ग्रन्थग्रन्थकाराणां नामानि | १ |
| कारिकासूची | १–४ |
| श्लोकसूची | ५–१२ |
| शुद्धिपत्रम् | १–४ |




॥ श्रीः ॥

# प्रास्ताविकं किञ्चित् ।

अद्य किल कोऽपि वाचामगोचरः संमदोऽस्माकं मानसः सीमातिगत्वं गाहते यदिदं नूत्नप्रकाशितमनूत्नतमं ग्रन्थरत्नमुपनीयते श्रीमतां नयनपदवीम् । परिचित एव नूनं जगति जडेतरेषां सर्वेषां चन्द्रालोकः । को नु नाम स्यादेतादृशोऽभाग्यवान् साहित्यरसास्वादसौहित्यशालिनां समाजे ? यो हि सविशेषप्रशंसास्पदं न जानीयान्नाम्नापि चन्द्रालोकम् । तदीयमाशयं पुनराविर्भावयन्तो द्वित्राः शरदागमाद्या अपि विद्योतमानाः प्रायेण भवेयुः सम्प्राप्तविद्वत्परिचया एव । सम्प्रति प्रस्तुतोऽयं चकास्तितमां राकागमोऽप्यग्रगणेयस्पृहणीयरमणीयगुणगणस्तत्रैव गणनीयः ।

स्वभावादेव दिव्येन स्वीयेन तेजसा भ्राजमानमनर्घ्यं रत्नमन्येन केनापि तेजोविशेषेण विभ्राजितं पुनरसीमां कामपि सुषमां समुन्मीलयतीति तावत्प्रत्यक्षमेवास्ते । चन्द्रालोको हि नियतं कमनीयः, सति च राकागमे किन्नु नाम कथनीयं कामनीयकं तस्य ? नूनमयं रत्नकाञ्चनसंयोग इव महार्हः सर्वथा सर्वैरभ्यर्हणीयो दैवयोगादुपगतश्चारुतरो योगश्चन्द्रालोकराकागमयोरालोकनीय एव ।

प्रकृता हि प्रेक्षावतामनतिदुर्गमा श्रीमती **राकागम**नामिकेयं **चन्द्रालोक**टीका प्रकटयन्ती गूढार्थान् परमं प्रौढिमानमानीता नाद्यावधि कुत्रापि मुद्रिता । अद्य यावत् कमनीयमेतदीयं नामधेयमानीतमेव स्यात्कर्णाभ्यर्णतां प्रायः प्राज्ञैः । साम्प्रतं तु तामेतां प्रापय्य नेत्रयोः पात्रतां सविशेषमान्तरं तोषं जुषन्तां ते ।

एतस्याः प्रशस्याग्रणेयगुणायास्तत्तद्गुणानां वर्णनं तावन्मुधैवाधुना । दर्शनादेव ते नूनं तद्विदां प्रतीतेः पन्थानमवतरेयुरित्यमुष्मिन् विषये जोषमेव स्थीयते । अत्रत्यविषयाणां विवरणं पुनरग्रे विधीयेत विषयानुक्रमणिकायां विस्तरेणेति नैषोऽपि साम्प्रतं प्रस्तूयते विषयः ।

अस्य च व्याख्यारत्नस्य सङ्ख्यावत्सुखावगमस्य **राकागमस्य** निर्माता कविर्धर्मैकतत्त्वविन्मर्मज्ञो निगमागमानां शिरोमणिर्मीमांसकानां व्याकरणमहार्णवकर्णधारः साहित्यदर्शनादिषु नितरां निष्णातः प्रथमो मनीषिणां प्रथमसमानभूमिर्भट्टभट्टकुलाम्भोजभानु**र्विश्वेश्वरापराख्यो**ऽतिविख्यातिमन्नामधेयः श्रीमान् **गागाभट्टो** नाम । महानुभावः स एवायं मनस्वी, येन किल भुवो भूषणस्य **भूषण**कवीन्द्रोपवर्णितप्राज्यप्रतापसम्पदः प्रोद्यत्परतापकरप्रतापसारस्य वीरवराग्रेसरश्रीमत्सुगृहीतनामधेय**श्रीशिवाजी**महोदयस्य महोदयः श्रीमान् समपादि ससम्भारं राज्याभिषेकसंस्कारः । एतदुपज्ञोऽयं राकागम एव तत्तदनेकविषयावगाहवैशद्यहृद्यमनवद्यं वैदुषीविशेषमेतदीयं प्रतिपदमावेदयितुं नियतं प्रभूतं पर्याप्त इत्यतस्तस्यापि वर्णनमत्रोपेक्षणीयपक्ष एव निक्षिप्यते ।

अमू हि महिमोन्नतावतिमहनीयमहोदारकीर्तनीयकीर्ती श्रीमद्ग्रन्थकारव्याख्या-

कारश्रीजयदेवगागाभट्टपण्डितावुद्दिश्य तद्विषयानुरूपसमुचितालोचनीयतत्तद्विचारसारपरिष्कारेण सम्पादितमस्मन्मित्रवरैः श्रीवाराणसेयहिन्दूविश्वविद्यालयवराध्यापकैः प्राच्यप्रतीच्यविद्याभिधमहासिन्धुसंभेदतीर्थावगाहविशदीकृतशेमुषीकैः परितःप्रसर्पत्प्रशंसनीयप्रकटप्रभूतशास्त्रीयमहनीयपाटवोदयैः सहृदयकवीन्द्रवरश्रीमद्बटुकनाथशर्मसाहित्याचार्य एम्० ए० महोदयैः 'पीयूषवर्षो जयदेव' इत्येतच्छीर्षकं लेखमेतत्प्रास्ताविकलेखानन्तरदर्शनीयं दर्शनीयं पदवीं नयनयोरुपनीय विद्वांसो नियतमेव विदुषोरेतयोः समयस्वरूपादिपरिचयं समीचीनमनुरूपं पूर्णमधिगच्छेयुर्नचावशिष्टं ततो विशिष्टं किमपि लेखनीयमित्यतो न खलु तत्रापि लेखनीयमायास्यते ।

अद्य यावन्नामतः समुपलब्धासु चन्द्रालोकव्याख्यासु विद्योतते प्राचीनतमैका **प्रद्योतनभट्टाचार्येण** निर्मिता **शरदागम**नाम्नी, या हि समाम्नातसंक्षिप्तार्था प्रकटिताभिप्रायापि न तावच्छक्नोति विशेषमावेदयितुम् । तदनन्तरं च **रमा** नाम सा समभूत्, यया किल कृतविद्याद् **वैद्यनाथपायगुण्डे**पण्डितात्काशीस्थमहाराष्ट्रवंशाङ्कुराद्बीजादङ्कुर इव श्लाघ्यमानं जनुर्लेभे । इयं तु तं तं प्रसङ्गविशेषमनतिक्रम्य तत्र तत्र प्रतिपाद्यमानविषयानावेदयन्ती प्रकल्पितलोकोपकारा प्रचुरप्रचारा च । एतयोस्तावत्प्रथमा **शरदागमा**ख्यव्याख्या चरमसंमुद्रणा, चरमा च **रमा** प्रथमं मुद्रिता । तृतीयापि तत्र कथाभट्ट**नन्दकिशोरशर्म**निर्मितैका नचिरादेव प्रकाश्यमानाभूत् । प्रकाशवेश्मनोरुभयोष्टीकयोर्या समाविष्टा स्वस्यापि प्रकाशवत्तां सूचयति । **पौर्णमासी** हि सेहावतीर्णा प्रभूतं प्रयततेऽत्र चन्द्रालोकं प्रकाशयितुम् । चतुर्थी च **राकागम**नामिकेयं पुरस्तादेवास्ते । प्राचीनयाऽप्येनया यत्किल सर्वतोऽन्ते मुद्रितया भूयते साम्प्रतम्, तत्र तावत् हस्तलिखितैतत्पुस्तकस्यात्यल्पस्थानगत्वं समयमहिम्नैतत्समयपर्यन्तं च तस्यानुपलब्धिरित्युभयं कारणम् । अतिचिराद् गूढजन्मा गुणैर्ज्येष्ठापि कनिष्ठेयं प्रकाशजन्मना ज्येष्ठाः समस्तास्ता भगिनीर्निःसंशयमतिशेत इतीदं दर्शनतो विशदं भविता ।

टीकास्वेतासु वर्तमानायां **रमा**यामर्वाचीनायां प्राचीनस्य **राकागम**स्यैव शब्दार्थो अविकलं बहुत्र सङ्गृहीताः समुपलभ्यन्ते । किन्तात्पर्येण **वैद्यनाथ**स्तादृशं चेष्टितवान् ? नूनमेतत्तदितरासमानाधिकरणं ज्ञानं तेनैव सह लीनम् ।

श्रूयते, श्रीमद्**गागाभट्ट**निर्मितया **बाजचन्द्रचन्द्रिक**याप्येकया स्थानमधि**चन्द्रालोक**व्याख्यानं लभ्यते । एषा च कञ्चित्तात्कालिकं **बाजराजं** वर्णयन्ती वर्तते **राकागम**स्यैव सङ्क्षिप्तं रूपम् । सम्भाव्यते, श्री**गागाभट्टेन राकागमं** निर्माय तस्मात्किञ्चित्किञ्चिदुचितं सङ्गृह्य पुनर्बाजभूपालवर्णनपरेयं **बाजचन्द्रचन्द्रिका** नाम तन्नाम्नैव कल्पिता स्यात्, अथवा पूर्वं प्रकल्प्य **बाजचन्द्रचन्द्रिकां** तत्र तत्रोचितं चातुर्येण तत्तच्छास्त्रीयविषयांस्तदन्तः सन्निवेशयता प्रापितोऽयं बृहद्रूपतां तावदत्र प्रसिद्धिमानिन्ये ग्रन्थो **राकागम**नाम्ना ।

इतः पूर्वं प्रकाशिते स्वगुणैः प्रकाशमाने त्रिविधेऽपि **चन्द्रालोके** क्वचिदेकत्र कारिकायां गड्डलिकाप्रवाहेण सङ्गतमसङ्गतं च्युत 'स्कारं' पाठमेकमुपलभ्य मक्षिकास्थाने मक्षिकापातं कुर्वतां चक्षुष्मतामपि सम्पादकमहाशयानां तेषां तत्तादृशमविदूष्यं वैदुष्यमुद्दिश्य को नाम विस्मयं नादधीत चित्ते । दृश्यतां च तदिदं द्वादश्यां कारिकायां पञ्चमे मयूखे । अत्र किल पूर्वार्धे **'उपमानोपमेयत्वे यत्रैकस्यैव जाग्रतः'** इत्येष एव सर्वत्रोपलभ्यते पाठः । **'जाग्रत'** इत्येवं पण्डितवरो **जयदेवः** प्रयुञ्जीतेत्येवं तु केन कथं वा सम्भावनीयम् । सम्भाव्यते, मूलग्रन्थलेखकमहोदयप्रमादात्सोऽयमपपाठस्तत्र लब्धावकाशः स्यात् । मुद्रणावसरे च तत्रावधानं नादायि सम्पादकैः । एकेन कृतमन्येनाप्यनुसृतमित्येवं तदेवाद्यापि दृश्यते सर्वत्रानुस्यूतम् । चित्रं तु महदेतद्वर्तते, यदेतद्व्याख्यायामपि तदेव पदं पुनराम्रेडितं दृश्यते । अस्माभिस्तु तत्र **'जाग्रत'** इत्यत्र स्थाने **'जागृत'** इत्येवं पाठः सन्निवेशितः ।

अस्य च पुरो वर्तमानस्य **चन्द्रालोक**संस्करणस्य विषयानुक्रमणिकायाः सङ्कलनं मनसिकृत्य पूर्वप्रकाशितैतत्संस्करणेषु 'किन्नाम कीदृशं वैतदन्यैराचरित'मित्येवमन्तर्दिदृक्षोदयात्तत्राक्षिपातः कृतः । दर्शनानन्तरमेव च यस्य कस्यापि वैशिष्ट्यमवगन्तुं शक्यम् । अत्र तावत् सर्वप्रथमसंस्करणं कमपि विशेषमुल्लेखनीयं नोपातिष्ठिपत्, किन्तु तदनन्तरप्रकाशितैतत्संस्करणद्वय्यापि विषयसूच्यां तत्र तत्र वैचित्र्यं किञ्चिदुपदर्श्य दर्शकानां मनसि महान् सङ्करः समुपस्थापितः । अद्वितीयदर्शनाः पूर्वमेके ग्रन्थोक्तं नाम कुत्रचिन्नामान्तरेण सङ्केतयन्तो यथेच्छमन्तरान्तरा किञ्चित्किञ्चिदुत्सृज्य किमपि लेखनीयमन्यदेवान्यत्र लिखन्तः समन्ततो दर्शयन्ति स्वीयमद्वितीयं तत्कार्यसम्पादनकौशलम् । इतरे च तदनुयायिनस्तदीयमेव गृह्णन्ति । न हि तावत्तत्र किञ्चिद्वक्तुमिष्यतेऽस्माभिः । व्याख्यायां च कुत्रापि स्थाने किमप्येकमालिख्य विषयसूच्यां तदेव नामान्तरेण दर्शयन्तो नूनं ते दर्शनीयवैदुष्याः । कुत्रापि किञ्चिल्लिखितमस्माकमेवेषत्परिवर्तनपूर्वमनुकृतवतां तेषां तदिदं कार्यमभिनन्दनीयमेव । तदेतत्सकलमाकलय्य **'अहह महताम्'** इत्यर्धमेवोक्त्वा तूष्णीं भूयते । प्रसङ्गवशात्तदिदं यथालोचितमत्रोपदर्शितम् । दर्शनसञ्जातसहजभावप्रवाहेणैव तत्प्रकाशपदवीं नीता वयम् । नात्र किञ्चिद्भावान्तरमुन्नीय तैर्विमनायितव्यम् । एतेन खलु साङ्कर्येण दर्शकास्तावदतिविचित्रं दशान्तरमनुभविष्यन्तीति तैः सावधानं कुतोऽपि किं त्समीक्ष्यैव किञ्चिदुपादेयमित्येवमेवास्मिन्निवेदनमस्माकम् ।

अस्तु तावत्, प्रकृतमनुसरामः । दिनानि सुबहूनि वीतानि, कदापि केनापि कारणेन श्रीमतां श्रौतस्मार्तनिगमागमप्रपञ्चचुञ्चूनां परमोदारसरसस्वभावसम्भूतप्रभूतयशसां यशःशेषतां नीतानामकाल एव सहसा कालेन **श्रीबापूदीक्षितजडे**महोदयानां गृहं गतैरस्माभिः प्रसङ्गविशेषमनुसृत्य तैः प्रदर्शितं स्वीयकमनीयप्रशस्तपुस्तकालयीयपुस्तकानां सूचीपत्रमवलोक्य तत्रैकस्याकर्णितपूर्वस्यापूर्वस्य काशीस्थमहाराष्ट्रजातीयभट्टभट्टवंशावतंसश्री**गागाभट्ट**सञ्ज्ञयावत्प्रणीतस्यैतस्य **चन्द्रालोक**व्याख्यानरूपस्य

राकागमस्य रमणीयं नामधेयमुपलभ्य तद्विलोकनसञ्जातसहजकौतूहलैस्तदीयाधिकारिमहोदयानुग्रहातिरेकेण तदानीं तन्निभालनसौभाग्यमन्वभूयत। कालान्तरे च तेषामत्युदारचेतसामधिगत्यानुमतिं निर्माप्यापि तदीयां प्रतिलिपिं परितस्तत्प्रचारचिकीर्षयाऽतिचिराय तन्मुद्रणोपायपर्यालोचनयैव तस्थे। अत्रैव चान्तरे कदापि वार्ताप्रसङ्गेन प्राचीनार्वाचीनदुष्प्रापतमोपादेयग्रन्थरत्नप्रकाशनोद्धारबद्धादरैः श्रीमद्**विद्याविलास**मुद्रणालयस्वामिभिः श्रेष्ठिवर**श्रीजयकृष्णदासगुप्त**महोदयैः समुपलभ्यैतां तत्पुस्तकसम्बन्धिनीं प्रवृत्तिं तत्प्रकाशनोत्साहः स्वकीयः प्रादर्शि। यथासमयं प्रवृत्ते च तन्मुद्रणे सुमहतः सौभाग्योदयादित्थमेतां मनोरथस्य फलवत्तां नयनगोचरीकृत्य सोत्साहं ततः प्रवर्तितं तत्सम्पादनकार्यम्। अद्य तावत् परमकारुणिकश्रीमत्परमेश्वरकरुणापाङ्गभङ्गीभिरभिभूय भूयोऽन्तरायजातमन्तरान्तरापतितं तदिदमुपक्रान्तं पूर्णतां प्रापय्य कार्यं समुत्तीर्णमहार्णवा इव परतरप्रमोदस्य परां काष्ठां प्राप्ताः स्मो वयम्।

यदुपजीव्यैतन्मुद्रणं प्रवृत्तं, तदेतत्पुस्तकं कपुस्तकत्वेन सङ्केतितं विशिष्टतमाऽशुद्धीनां निकेतनं दृष्ट्वा परितः समारब्धे शुद्धतमैतत्पुस्तकान्तरानुसन्धानव्यतिकरे, श्रीमद्**नागाभट्ट**सन्तानसन्तानभूतानां भट्टभट्टकुलकमलदिवाकरश्री**वीरेश्वरभट्ट**महोदयानामेव केवलं गृहेषु तस्योपलब्धिर्जाता। ततोऽत्र सम्प्राप्तमशुद्धीनां निराकरणे सुमहत्साहाय्यम्। किन्तु ततोऽपि ताः सामस्त्यान्निर्गन्तुं नैहन्त। खपुस्तकत्वेन गृहीतमेतत्पुस्तकमशुद्धीनामनास्पदं यद्यपि नासीत्तथापि प्रायः शुद्धमेवासीत् कपुस्तकात्। अस्मदभ्यर्थनानुसारमशुद्धिबहुलपाठसंशोधनाय तदिदमौदार्येण समर्पयतां तदधिकारिणां तेषामुपकारजातमेतत्प्रशंसनीयं नूनमविस्मरणीयमेव। अत्र च पुस्तकद्वयपाठसम्मेलनसाहाय्यमाचरतां केषाञ्चित्सहृदयसौहार्दशालिनां तेषां सहजस्नेहविशेषोऽप्ययमभिनन्दनीय एव।

इत्थमिदं पुस्तकद्वयमालम्ब्य विधीयमाने मुद्रणकार्ये मध्ये च पुनः समुपस्थिते तत्तदुपलब्धाऽपपाठसंशोधनप्रस्तावे, श्रीमदनवद्यहृद्यतमसाहित्यविद्याविलासैकनिकेतनकमनीयसरसगुणालङ्कारसारोदयविद्योतमानगद्यपद्यमयमधुरसारसूक्तिसुधारसप्रवाहसरणिसम्भेदभूमिहोदयाभूमिभूषणायमानमानोन्नतश्रीमत्पूजनीयगुरुवरचरणानुग्रहाद्बहुषु दूरीक्रियमाणेषु सन्देहपदेषु दीयमाने च सस्नेहमुदारैः सहृदयसूरिवरैस्तत्तदपपाठशोधनौपयिकविचारोचितसाहाय्ये, स्वयमपि तत्तद्ग्रन्थविशेषपर्यालोचनेन तत्र तत्रोचितविचारपुरःसरं पुस्तकाक्षरसमुदायानुकूलपाठकल्पनया च कार्यविशेषव्यतिकरोऽयं परिश्रमातिरेकात्कथञ्चित्पूरयाञ्चक्रे। अन्ते च गत्यन्तराभावादक्रियन्ताऽस्माभिः प्रश्नचिह्नैरङ्कितानि विचारावशिष्टानि विशिष्टानि तानि तानि स्थलानि।

मुद्रणोत्तरं च 'तत्तद्विचारणीयविषयानुद्दिश्य किञ्चिद्विचारणीयं पुनरपी'त्येवमन्तर्विचारेण समुचितविचारसाहायकसमवाप्तिसम्भावनयाऽस्माभिरभ्यर्थितास्तदर्थं केचिदुच्चावचप्रौढपाण्डित्यलीलाविलासालयाः सहृदयास्तदिदमङ्गीकृत्यापि सहजसौजन्य-

गुणेन कार्यान्तरव्यापृतिवशादनवाप्तपर्याप्तावकाशाच्चिरादपि दुर्दैवोदयादस्माकं किमपि तत्रोचितमालोचयितुं कथञ्चिदपि नाशक्नुवन्नित्येष आशाविशेषोऽस्माकमकस्मान्मोघ एवाजनिष्ट। ततश्च कियच्चिरं तूष्णीमेव नैराश्यादवस्थाय भूयोऽनुसन्धानपरैः, सहज-सौजन्यशालिनां धीमतामधिगत्य केषाञ्चित्किञ्चित्समुचितं विचारसाहाय्यं भूयस्तरामत्रो-पकृतैः सञ्जातमितीदं तेषां न कुतोऽभिनन्दनीयमनन्यसामान्यं सौजन्यम्।

अत्र किल तार्तीयीकस्य पुस्तकस्यानुपलब्धेरुपलब्धस्य पुस्तकद्वयस्य चाशुद्धि-बहुलत्वेन तदवलम्बादेतद्ग्रन्थसम्पादनव्यतिकरे स्वसंवेदनगोचरमायासमनुभूय महत्तरमुपक्रान्तमिदं कार्यं कथमप्यवसायितम्। सौभाग्यात्सम्भविष्यति द्वितीये संस्करणे पुनरप्यत्र दत्तपदेषु विचारः सन्देहेषु विधास्यते। हस्तलिखितमेतत्पुस्तकं कदाचित्कैश्चित्कुत्राप्युपलब्धं चेत्कृपया सूचनीयं तैः।

टीकाकृता हि चित्रकाव्यलक्षणप्रदर्शनप्रसङ्गादत्र गोमूत्रिकादयो बन्धविशेषाः केचिदुदाहृताः पञ्चमे मयूखे। अस्माभिश्च तदाकारचित्राण्युद्धारानुसारीणि सम्पाद्य सपरिश्रमं तत्रैतानि सन्निवेशितानि। ग्रन्थान्ते च—पूर्वमुद्रितपुस्तकपाठान्, ग्रन्थेऽत्र प्रसङ्गादापतितानां ग्रन्थग्रन्थकाराणां नामानि, कारिकाश्लोकसूच्यौ शुद्धिपत्रं चेत्येवं सकलमावश्यकं संयोज्य परमेश्वरानुग्रहेण श्रीमद्गुरुवरप्रसादेन च ग्रन्थोऽयं प्रापितस्तावद् यथासम्भवं सर्वाङ्गीणसौन्दर्यम्।

चरमे च सम्भाव्यते, यथाबुद्धि सावधानमुचितमित्थमाचरितेऽपि संशोधने क्वचिदत्र मुद्रणालयदोषेण मदीयमतिमान्द्येन वा समुपलब्धा अशुद्धीः संशोध्य सुधियो ग्रन्थमेनमादितोऽन्तं यावन्नयनयोः पन्थानमुपनेष्यन्ति सन्दिग्धस्थलेषु यथोचितं विचारानात्मनः प्रकटय्य परिश्रमं ग्रन्थकर्तुर्मम च साफल्यमवश्यं नेष्यन्तीत्यलं पल्लवितेन।

वर्षप्रतिपत्,
संवत् १९९५.

विदुषां विधेयः—
**अनन्तरामशास्त्री वेतालः**

॥ श्रीः ॥

# पीयूषवर्षो जयदेवः ।

चक्षुष्मानपि लोकोऽयं यं विना नाऽवलोकयेत् ।
सोऽयं हृताशेषशोकश्चन्द्रालोकः प्रकाशताम् ॥
यदालोकाल्लोकः सकलमपि लोकायतमयं
दुरालोकं लोकं कलयति खलाखेटकपटम् ।
सतां सद्यः पद्यां दिशतु सुदृशां हृद्यदयितो
दयातोऽयं चन्द्रो हृतहृदयतन्द्रोऽद्य महितः ॥
सखे पाण्डित्य ! त्वं किमसि कलिविद्वानिव तथा
यथा मे नाद्याऽपि प्रकटयसि सर्वं स्वहृदयम् ।
प्रतीक्षाऽपेक्षातः स सुहृदनुरोधोऽद्य बलवान्
अतोऽयं लेखन्यां प्रणय इति मां मृष्यत बुधाः ! ॥
पीयूषवर्षजयदेवमनु प्रवक्तुं यस्याग्रहादभवदत्र मम प्रवृत्तिः ।
सोऽनन्तरामकविरेष ममेति बुद्ध्या दोषैरपि श्रयतु तोषमशेषतो मे ॥

अनिवेदितमेवेदं विदितचरं विशदशेमुषीजुषां विदुषां यदयं लोको न खलु विलोचनाभ्यां वस्तुतो विलोकयति वस्तुजातानि। विजयते किञ्चिच्चिन्मयं नामाभ्यन्तरं चक्षुर्येनैव चक्षुष्मतां चक्षुष्मत्ता परमार्थतः प्रसिद्ध्यति । विना तेन विलोचनवन्तोऽपि सम्यगर्थदर्शने नितान्तं तान्ता एव । तदिदं यद्यपि सर्वस्यैव परमकारुणिकेन परमपुरुषेण प्रसादीकृतमेवाऽऽस्ते, तथापि प्राक्तनपुण्यापुण्यसंस्कारानुगुणमेव न्यूनान्यूनं विद्योतते जीवजातस्य प्रातिभं चक्षुः। यत् किञ्चिद् विवर्तते वाङ्मयविग्रहेण जगत्सु जागरितं तेजो भगवतो महाविष्णोस्तत्तस्यैव चितिविचितिचयस्य स्थूलतामुपगतं बहिश्चरं रूपम् । इदमेवोद्दिश्य पुरा प्रोक्तवानाचार्यदण्डी स्वकीये काव्यादर्शे—

'इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम् ।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते' ॥

तदिदं वाङ्मयं द्विधा विवर्तते शास्त्ररूपेण काव्यरूपेण च । तदुक्तं काव्यमीमांसायां कविराजराजशेखरेण—"इदं हि वाङ्मयं द्विधा शास्त्रं काव्यं च" । एतदनुरूपं च भवति विपश्चितां द्विविधा प्रकृतिः। केषांचिन्मनीषा निसर्गत एव शास्त्रे धावति, तदन्येषां स्वभाव एवोद्भावयति काव्यभावनासद्भावम् । यद्यपि यथा कवयो व्युत्पत्तिनिमित्तं शास्त्राभ्यासमपि बहु मन्यन्ते तथैव केचन पण्डिता अपि कथंचन कवयन्तो दृग्गोचरीक्रियन्ते, तथाप्यत्र प्रकृतिमधिकृत्य प्रवृत्तिप्राधान्यमवधृत्य च वस्तुस्थितिर्यथायथं कथ्यते । परस्परपरोपकारपरम्परापरायणा अपि केचन मतिमन्तो हृदयतः पण्डिता एव भवन्ति तथैवाऽन्ये प्रतिभावन्तः कवय एव हृदा भवन्ति । एतमेव व्यतिकरमाश्रित्य प्रायः प्रवर्तते प्रायोवादो यद् विभिद्यते मूलत एव पन्था एतयोरुभयोः । वाचां प्रयोगश्चैतयोः प्रकृतिविजृम्भितां भिन्नामेव चमत्कृतिमादधाति सहृदयधुरीणानां हृदये । कवयः

प्रायो बकुलमञ्जरीगलदलीनमाध्वीझरीधुरीणतरीतिभिरेव भजन्ते परमं प्रमोदम् । पण्डितास्तु खफछठथेति घटपट इत्यपि च विकटां वर्णच्छटां पटु रटन्त एव स्वान्तसन्तोषमुद्घोषयन्ति । तयोर्व्याहृतान्येव परस्परपार्थक्यं सर्वप्रथमं प्रथयन्ति । तदिदं व्यक्तमेवावभाति यत् सत्यमेव वर्वर्ति सर्गक्रमसंक्रान्त एष कोऽपि निसर्गः प्रतिभावताम् । किन्तु विधेर्विधानमिवेदमपि प्रत्यक्षं प्रेक्ष्यते यत् सर्वस्यैवोत्सर्गविधेर्भवन्ति सत्यमेव काऽपि केचनापवादाः । कविपण्डितयोः प्रकृतिपृथक्त्वेऽपि ते बहुशोऽनुभूयन्ते । बभूवुरेव पुरा कतिपये महानुभावा येषां धिषणा धिषणस्यापि धियमतिशयाना नैव प्रतिबन्धायाऽभूत् कीर्तिमुशनसोऽप्यपहरन्त्याः काव्यप्रतिभायाः । सममेव धावति स्म मतिस्तेषां शास्त्रे काव्ये च । को न माद्यति ससन्तोषमाचामन् काव्यामृतं शारीरकभाष्यरचनाश्चर्यचर्याणामाचार्यचरणानाम् ? षट्प्रबन्धनिबन्धनोद्धुरस्य काव्यमीमांसादिविलक्षणग्रन्थनिर्मातुः को न शृणोति सानन्दं सुधास्यन्दिनीः सूक्तीः कविराजराजशेखरस्य ? किमन्यैः प्रत्नतरैः पुरुषरत्नैः? किं न खलु यवनगणसाम्राज्यविस्रंसितसकलसमयेऽपि समये पण्डितराजो जगन्नाथः प्रादुर्बभूव ? यद्यप्येवं तथापि न खलु तादृशाः पुरुषविशेषाः डित्थडवित्थादिवत् प्रतिरथ्यं नेत्रातिथ्यं नीयन्ते । साधूक्तं केनापि—

"बहवः सन्ति कवयो बहवः सन्ति पण्डिताः ।
किन्तु सारस्वताकारो विरलः कविपण्डितः ॥"

देशविशेषस्य यदा समष्टिरूपं पुण्यं परिपाकं प्राप्नोति तदैवैतादृशाः पुरुषाः भगवतो विभूतिरूपा मानवस्वरूपमास्थाय पुनन्ति जगतीतलम् ।

अथाऽहमासाद्य तादृशमेकं पुरुषविशेषं प्रवृत्तोऽहमात्मानं पवित्रीकर्तुम् । तदीयेतिवृत्तालोचनमपि तीर्थावगाहनवत् पापप्रमोचनाय भविष्यतीति मे बलीयान् विश्वासः । न खलु स्वल्पसुकृतकृतमेतत् संभवति यत् 'विलासो यद्वाचामसमरसनिष्यन्दमधुरः कुरङ्गाक्षीबिम्बाधरमधरभावं गमयति' स सकलशास्त्रपारदृश्वा प्रमाणप्रवीणोऽपि भवेत् । अहो अनुग्रहविशेषः कश्चिदस्मिन् वाग्देव्याः । अस्मिन् 'चन्द्रिकाचण्डातपयोरिव कवितार्किकत्वयोरेकाधिकरणतामालोक्य' को न विस्मितो भवेत् ? किमत्र विचित्रं चित्रं यद्यात्मानमुद्दिश्य स एवं निर्दिशेत्—

"येषां कोमलकाव्यकौशलकलालीलावती भारती
तेषां कर्कशतर्कवक्रवचनोद्गारेऽपि किं हीयते ॥"

नेदं वृथाऽहङ्कारोत्थं विकत्थनं, किन्तु यथार्थकथनमात्रम् । कियन्तः किन्तु कथयितुमित्थं सन्ति सन्तः समर्थाः ?

कोऽयं य एवमुच्चैरुद्दिश्यते ? सोऽयं पीयूषवर्षो जयदेवः ।

## कोऽयं पीयूषवर्षो जयदेवः ?

कोऽयं पीयूषवर्षो जयदेव इत्यनुयोग एव कञ्चिदुत्तरयोगं स्वतोऽवतारयति । जयदेवाभिधानं दधतां मध्ये यः पीयूषवर्ष इत्युपाधिमिव नामान्तरं च दधाति स्म, स

एवायं भवेदस्य प्रबन्धस्य विषयः। नैवेदं कथनं प्रकृतविषयनिर्मथननिभम्। सत्यमेव बहवो बभूवुरस्मिन् सुरभारतीरते भारते कवयः कोविदाश्च, ये जयदेवाख्यया ख्यापयामासुः सर्वतोऽद्भुततरं स्वकीयं यशः। शर्मण्यपण्डित औफ्रेक्टः स्वकीये 'सूचीपत्राणां सूचीपत्रे'(१) तत्तद्ग्रन्थनामनिर्देशपुरस्सरं पञ्चदशानां जयदेवानां नामान्युल्लिखति। बहूनि हायनानि व्यतीतानि लिखितस्य तस्य सूचीपत्रस्य। एतदन्तरे मन्ये केचिदन्येऽपि जयदेवा विचयन्थग्रैर्गृहीता भवेयुः। नाऽस्ति नाम्नां परिमितिः। तदलं जयदेवाभिधाधारिणां सुधियामभिधानगणनाव्यासङ्गैः। परिजिहीर्ष्यमाणमपि नामुं व्यापारमन्तरा सेत्स्यति नः कार्यम्। न खलु यावन्तो जयदेवा बभूवुस्ते सर्वे ग्रन्थमेकमेव लिखित्वा विगतशक्तयो बभूवुः। तन्नैव संभाव्यते यत् सर्व एवैते परस्परभिन्ना एवाऽभूवन्। एतेषां मध्ये कतिपयैरेतादृशैर्भवितव्यं येषां नामानि बहुग्रन्थविरचनयाऽनेकशो गृहीतानि भवेयुः। भवतु, प्रवर्ततामेषां नामायत्नु सूक्ष्मा परीक्षा। पीयूषवर्षापरनामधेयमेव जयदेवमादौ तावदन्विष्यामः।

अस्ति चन्द्रालोकनामाऽलङ्कारग्रन्थो यस्य प्रणेता जयदेव आत्मानं पीयूषवर्षाभिधया प्रथयति। यथोक्तमनेन चन्द्रालोकस्यादावेव—

हंहो! चिन्मयचित्तचन्द्रमणयः संवर्द्धयध्वं रसान्
रे रे स्वैरिणि निर्विचारकविते! मा स्म प्रकाशीभवः।
उल्लासाय विचारवीचिनिचयालङ्कारवारांनिधे-
श्चन्द्रालोकमयं स्वयं वितनुते **पीयूषवर्षः** कृती॥ (१. २)

पीयूषवर्ष इति नाम जयदेवस्यैवेति स्फुटीभवति प्रथममयूखान्तस्थपद्यात्। तथाहि—

"महादेवः सत्रप्रमुखमखविद्यैकचतुरः
सुमित्रा तद्भक्तिप्रणिहितमतिर्यस्य पितरौ।
अनेनासावाद्यः **सुकविजयदेवेन** रचिते
चिरं चन्द्रालोके सुखयतु मयूखः सुमनसः॥" (१. १६)

चन्द्रालोकस्यान्तेऽपि च तदेव गदितमनेन। यथा—

"पीयूषवर्षप्रभवं चन्द्रालोकं मनोहरम्।
सुधानिधानमासाद्य श्रयध्वं विबुधा मुदम्॥
जयन्ति याज्ञिकश्रीमन्महादेवाङ्गजन्मनः।
सूक्तपीयूषवर्षस्य जयदेवकवेर्गिरः॥" (१०. ५-६).

चन्द्रालोकटीकाकारान्यतमेन गागाभट्टेनाप्युक्तम्-'पीयूषवर्ष इति जयदेवस्यैव नामान्तरम्' इति।

एतस्मादिदमप्युपलब्धं यदस्य पिता महादेवनामा माता च सुमित्राभिधा

(१) Aufrects Catalogorus Catalogorum.

बभूवतुः। इदमपि परमं साधनमयं जयदेवोऽस्माकमभिप्रेतो जयदेवो नवेति निर्णये भृशं भविष्यति।

वर्तते प्रसन्नराघवं नाम 'वितृकपणहाटकं' नाटकं किमपि केनापि जयदेवेन विनिर्मितम्। पीयूषवर्ष इति जयदेवविनिगमकोपपदमत्र नैवोपलभ्यते, किन्तु पित्रोर्नामनी तु समाने एव। तथाहि—

"कवीन्द्रः कौण्डिन्यः स तव जयदेवः श्रवणयो-
रयासीदातिथ्यं न किमिह महादेवतनयः।"
"लक्ष्मणस्येव यस्याऽस्य सुमित्राकुक्षिजन्मनः।
रामचन्द्रपदाम्भोजभ्रमद्भृङ्गायते मनः॥" ( प्रस्तावनायाम् १४–१५ )

अतः सुमित्रामहादेवतनयत्वसाधर्म्यात् चन्द्रालोककर्तुर्जयदेवस्य प्रसन्नराघवकवेर्जयदेवस्य चैकत्वं निःसंशयमवसीयते। तदन्येषां जयदेवानामुपलब्धमितिवृत्तमितस्तत आवर्तयन्तोऽपि न वयं पारयामः प्राप्तुं कस्यापि पित्रोर्नामनी सुमित्रामहादेवाविति। यद्यपि नैतेनानुमीयते यदयं ग्रन्थानन्यान् नो प्रणिनाय; तथापीदं तु सुविशदमेव निष्पद्यते यदयं नान्येन केनाऽपि जयदेवेन नामसामान्यसंभावनामात्रबलादैकीभावं नेतुं शक्यते। तदलं दुरासादासादनायासेन। यत्तु कैश्चिद् विपश्चिद्भिरितरजयदेवत्वेनायं गृहीतस्तत् सर्वं भ्रान्तिविजृम्भितमित्यचिरादेव निवेदयिष्यामः। साम्प्रतं तावदस्य समयो विनिश्चेतुमेव साम्प्रतम्।

## जयदेवस्याविर्भावकालः।

इदमिदानीं विचारयामः कस्मिन् कालेऽयं समुत्पन्न इति। कोऽयं नामास्माकं संस्कृतसाहित्येतिहाससमयप्रविभागो यस्मिन्नयं पीयूषवर्षो जयदेवः पाञ्चभौतिकं कायमधिष्ठाय कवितामृतोत्सारितजरामृतिभयं यशःकायं समाससाद। एतदकथितमेव सर्वतः प्रथितमास्ते यत् सुरभारतीसेवासिद्धानां वृद्धानां बहुशोऽनधिगतनिर्णयो दुरधिगतनिर्णयो वा निःसंशयसमयनिर्धारणायासः। नैवापवादाय भवति जयदेवस्यापीतिवृत्तम्। न खलु वयं यथातथं जानीमः कस्मिन् काले देशे वाऽयं सत्यमेव प्रादुर्बभूव। यद्यप्येवं सर्वथाऽभ्रान्तं विनिश्चेतुमशक्यप्रायो जयदेवस्य समयस्तथाप्ययं प्रयत्नः प्रतन्यते तानि तानि प्रमाणशकलानि संग्रहीतुं यैः कथमप्यूहितुं शक्येत तत्समयसामीप्यम्।

अयं जयदेवः स्वकीये चन्द्रालोके काव्यप्रकाशस्थं काव्यलक्षणमाक्षिपन्निव लक्ष्यते। श्रीमन्मम्मटभट्टः काव्यप्रकाशे काव्यलक्षणमेवमाह—"तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि"। इदमुद्दिश्य जयदेव इत्थं कथयति—

"अङ्गीकरोति यः काव्यं शब्दार्थावनलङ्कृती।
असौ न मन्यते कस्मादनुष्णमनलं कृती॥" (१.८)

एतदुक्तं भवति। अलङ्काराणां काव्ये नियतप्रयोजनीयत्वं नैवानुमन्यते मम्मट-

भट्टप्रधानैर्ध्वनिमताध्वर्नानैः । भामहोद्भटप्रभृतयः प्राञ्च आचार्या अलङ्कारानेव काव्ये चमत्कारकारणं विनिश्चिक्युः । जयदेवस्तु ध्वनिप्रपञ्चममुञ्चन्नपि चिरन्तनतराणामेवैतेषा-माचार्याणां मतमूरीकुर्वन् यथोष्णत्वं विना वह्नित्वं नैव सिद्ध्यति तथैव सालङ्कारत्वमपाकृत्य काव्यत्वमपि नैव सम्भवतीति स्वाभिमतं मतं विमताक्षेपमुखेन व्यक्तं प्रतिपादयति । मम्मटमतमाक्षिपता नियतमेवैतेन तस्मात्पश्चाद् भवितव्यम् । मम्मटभट्टस्य काल एकादशशतकस्यान्तः । मम्मटभट्टस्य काव्यप्रकाशे उदात्तालङ्कारोदाहरणत्वेन भोज-राजप्रशंसात्मकमिदं पद्यं दत्तं दृश्यते—

"मुक्ताः केलिविसूत्रहारगलिताः संमार्जनीभिर्हृताः
प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः ।
दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुका
यद् विद्वद्भवनेषु भोजनृपतेस्तत् त्यागलीलायितम् ॥"

इदं पद्यं स्वग्रन्थे उदाहरणत्वेन समुपन्यस्यन् मम्मटभट्टो भोजराजात् स्वस्य पश्चाद्भावित्वं व्यक्तमेवाभिव्यनक्ति । भोजराजो दशाधिकसहस्रमितादारभ्य पञ्चपञ्चाश-दुत्तरसहस्रमितं खिस्तवत्सरं यावद् ( १०१०–१०५५ ) राज्यं चकारेति मन्यन्ते भारतेतिहासविद्वांसः । काव्यप्रकाशटीकाकाराणां मध्ये रुय्यकमाणिक्यचन्द्रौ प्राचीनतमौ । रुय्यकः कश्मीरेषु सुस्सलजयसिंहभूपालयो राज्यकालेऽभूदिति सुप्रसिद्धम् । तयो राज्ञो राज्यकालः पञ्चाशदधिकैकादशशतकमितः खिस्ताब्दः ( ११५० ) । माणिक्यचन्द्रः स्वटीकाविरचनसमयमेवं स्वयं निर्दिशति—

"रसवक्त्रग्रहाधीश(१२१६)वत्सरे मासि माधवे ।
काव्ये काव्यप्रकाशस्य संकेतोऽयं समर्थितः ॥"

जैनानामुत्तरदेशीयानां च विक्रमवत्सरलेखनस्यैव सुप्रसिद्धत्वात् वैक्रमोऽयं वत्सरः । अयं षष्ट्यधिकैकादशशतकमतेन खिस्ताब्देन (११६०) तुल्यकल्पः ।

भोजराजस्य रुय्यकमाणिक्यचन्द्रयोश्चान्तर्भावित्वान्मम्मटभट्टस्य समयः खिस्ता-ब्दैकादशद्वादशशतकपूर्वार्द्धयोर्मध्ये (१०५०–११५०) संभवति । एतस्मादिदमुपपद्यते यज्जयदेवो द्वादशशतकमध्यादूर्ध्वं नेतुं नैव शक्यते ।

अलङ्कारसर्वस्वमधीतवतां नैतत् तिरोहितं यद् रुय्यकः कतिपयानलङ्कारान् सर्व-प्रथमं लक्षणोदाहरणैः प्रथयाम्बभूव । तेषामन्यतमो विकल्पालङ्कारः । 'तुल्यबल-विरोधो विकल्पः' इत्थमेतं सूत्रे लक्षितं लक्ष्यीकृत्य 'तस्मात् समुच्चयप्रतिपक्षभूतो विकल्पाख्योऽलङ्कारः पूर्वैरकृतविवेकोऽत्र दर्शित इत्यवधातव्यम्' इतिस्फुटमलङ्कारसर्व-स्वेऽभिहितम् । टीकाकारो जयरथोऽपि तमेवार्थं सुविशदं प्रथयन्नित्थं प्रोवाच 'अनेना-स्य ग्रन्थकृदुपज्ञत्वमेव दर्शितम्' । जयदेवश्चन्द्रालोके 'विरोधे तुल्यबलयोर्विकल्पालङ्-कृतिर्मता' इति विकल्पं लक्षयद् व्यक्तमेव रुय्यकोक्तं लक्षणं यथायथं गृह्णाति । नैताव-देवास्य रुय्यकानुगृहीतत्वम् । केचिदन्येऽप्यलङ्कारा रुय्यकोक्तदिशैव लक्षयित्वा प्रदर्शिताः। तथाहि—'स्वविपरीतफलनिष्पत्तये प्रयत्नो विचित्रम्' इति रुय्यकोक्तं विचित्रलक्षण-

मवलोक्य जयदेवः 'विचित्रं तत्प्रयत्नश्चेद् विपरीतः फलेच्छया' इति तल्लक्षणमभिहितवान् । नाकेवलं लक्षणान्येव संवदन्ति, अलङ्कारनिरूपणक्रमोऽपि प्रायो रुय्यकानुसृतसरणिमेवानुकरोति ।

न खलु नावगतं भवेदलङ्कारकाननविहाररसिकानां यदलङ्काराणां संख्या क्रमशो वर्द्धमाना वर्तमानमहिमानमुपागता । भरतमुनिश्चतुर एवाऽलङ्काराननुमेने । तथोक्तमनेन नाट्यशास्त्रे—

"उपमा रूपकं चैव दीपकं यमकं तथा ।
अलङ्कारास्तु विज्ञेयाश्चत्वारो नाटकाश्रयाः ॥" इति ( १७. ४३ )

शनैः शनैः समयक्रममनुसरन्ती सैकषष्टिमिताऽभूदलङ्कारसंख्या मम्मटभट्टस्य काव्यप्रकाशे । रुय्यकस्यालङ्कारसूत्रे पञ्चसप्ततिरभवत् संख्याऽलङ्काराणाम् । जयदेवस्य चन्द्रालोके सा शतप्राया । तदनन्तरप्रणीतेष्वपि ग्रन्थेषु तत्क्रमाभिवृद्धिः स्पष्टमेव द्रष्टुं शक्यते । इत्थमेतत् सर्वं विचारयन्तो वयं जयदेवस्य मम्मटभट्टस्य रुय्यकाचार्यस्य च पदानुविधेयत्वं व्यक्तमेव पश्यामः । नैतदत्याहितं नाम किञ्चित् । ग्रन्थारम्भे स स्वयमेव प्रतिजानीते स्म—

"तं पूर्वाचार्यसूर्योक्तिज्योतिःस्तोमोद्गमं स्तुमः ।
यं संश्रित्य प्रकाशन्ते मद्गुणत्रसरेणवः ॥" ( १.४ )

यथा तथा वा भवतु, जयदेवस्यास्य न केवलं मम्मटभट्टादेव किन्तु रुय्यकादप्युत्तरभावित्वमवश्यमेवाभ्युपेयम् । रुय्यकस्य समयो द्वादशशतकस्य पूर्वार्द्धमित्युपरिष्टान्निवेदितम् । अतोऽयं जयदेवो द्वादशशतकादूर्ध्वं नैव गन्तुमर्हति । ख्रिस्तद्वादशशतकान्तोऽस्य उपरितनो समयसीमेति निर्विवादमासाद्यते ।

संप्रत्यधस्तनसीमानमासादयितुं तावद् यतामहे । प्रसन्नराघवस्थं पद्यम्—

"कदली कदली करभः करभः करिराजकरः करिराजकरः ।
भुवनत्रितयेऽपि बिभर्ति तुलामिदमूरुयुगं न चमूरुदृशः" ॥ ( १.३७ )

इति विश्वनाथकविराजः साहित्यदर्पणस्य चतुर्थपरिच्छेदे अर्थान्तरसङ्क्रमितवाच्योदाहरणत्वेनोपन्यस्तवान् । विश्वनाथस्य समयश्चतुर्दशशतकस्य पूर्वार्द्धम् । अयमस्फुटगुणीभूतव्यङ्ग्योदाहरणरूपेणेदं पद्यं व्याहरति—

"सन्धौ सर्वस्वहरणं विग्रहे प्राणनिग्रहः ।
अलावुद्दीननृपतौ न सन्धिर्न च विग्रहः ॥"

अत्र सोऽलावुद्दीननामानं खिलजीवंशसमुद्भूतं महम्मदीयं महीपालं स्मरति । अयं नृपः पञ्चदशाधिकत्रयोदशशतकमिते वत्सरे मृत इति भारतीयेतिहासविद्वांसः । साहित्यदर्पणस्यैका प्रतिलिपिश्चत्वारिंशदधिकपञ्चदशशतमितं वैक्रमं वत्सरं (१४४० वै० = १३८३ ख्रि०) लेखनकालं दधाना जम्बूनगरस्थपुस्तकालये समुपलब्धा । अतोऽनुमीयते चतुर्दशपञ्चदशशतकपूर्वार्द्धयोर्मध्ये ( १३५०–१४५० ) विश्वनाथकविराजो बभूवेति ।

शार्ङ्गधरपद्धतौ प्रसन्नराघवस्थे पद्ये ( १६४, ३५२० ) समुपलभामहे । ते इमे-

"अपि मुदमुपयान्तो वाग्विलासैः स्वकीयैः
परभणितिषु तोषं यान्ति सन्तः कियन्तः ।
निजघनमकरन्दस्यन्दपूर्णालवालः
कलससलिलसेकं नेहते किं रसालः ॥" ( १. १९ )

"विनैवाम्भोवाहैः बहुलरुचिलिप्ताम्बरतलात्
तडिल्लेखा हेमद्युतिविततिरम्या विलसति ।
विनैव स्वर्गङ्गां नभसि रभसोन्मुद्रशफरी-
परीवर्तैः साकं स्फुरति नवनीलोत्पलवनम् ॥" ( १. ३३ )

शार्ङ्गधर इमां पद्धतिं त्रिषष्ट्यधिकत्रयोदशशतमिते (१३६३) खिस्ताब्दे लिखितवानित्यभियुक्ता मन्यन्ते ।

शिङ्गभूपालविरचितो वर्तते रसार्णवसुधाकरनामा नाट्यशास्त्रविषयको ग्रन्थः । तत्र तृतीये विलासे भ्रंशं लक्षयित्वा ग्रन्थकृत्तमेवमुदाहरति—

"यथा प्रसन्नराघवे—'रावणः—कथय क्व तावत् कर्णान्तनिवेशनीयगुणं कन्यारत्नं कार्मुकं च" । इत्यादि ।

पुनरपि तत्रैवान्तर्लापामुदाहरति—

यथा प्रसन्नराघवे—

"प्रत्यङ्कमङ्कुरितसर्वरसावतारं नव्योल्लसत्कुसुमराजिविराजिबन्धम् ।
घर्मेतरांशुमिव वक्रतयाभिरम्यं नाट्यप्रबन्धमतिमञ्जुलसंविधानम् ॥"

अस्य शिङ्गभूपालस्य समयो वेङ्कटगिरिनृपतीनां चरित्राधारेण निर्धारितः त्रिंशदधिकत्रयोदशशतकमितः ( १३३० ) खिस्ताब्दः ।

विश्वनाथः शार्ङ्गधरः शिङ्गभूपालश्चेति त्रयाणां समयालोचनेन निःसंशयमवभासते यदस्माकं जयदेवश्चतुर्दशशतकमध्यादधः कथमपि गमयितुं नैव पार्यते । अतोऽधस्तनी सीमाऽस्य समयस्य चतुर्दशशतकमध्यम् ।

अलमतिप्रसङ्गेन कुतूहलखिलीकरणव्यासङ्गेन । अयमत्राऽस्य संक्षेपः । मम्मटभट्टरुय्यकोत्तरभावित्वं विश्वनाथशार्ङ्गधरशिङ्गभूपालानां पूर्ववर्तित्वं चास्य जयदेवस्य समालोच्य वयमेतावदेव निश्चेतुं पारयामो यदयं तयोस्तेषां च मध्ये प्रादुर्बभूव । यदि तत्कालकवीनां प्रसिद्धिसमासादनार्थं मर्त्याब्दानां शतकार्द्धं पर्याप्तं कल्प्येत तर्हि कथयितुं शक्यते यदयं क्वापि त्रयोदशशतके ( १२००–१३०० ) कमपि भारतीयं प्रदेशं स्वावस्थानेनालञ्चकार । एतदधिकं तु वक्तुं साधनानामियत्तया नैव शक्नुमो वयम् ।

## गीतगोविन्दकविर्जयदेवः ।

केचिदभियुक्ता विततां वाचोयुक्तिं प्रयुञ्जाना एवमभिदधति यदयमस्माकं पीयूषवर्षो जयदेव एव गीतगोविन्दं नाम परमाद्भुतं काव्यं प्रणिनाय । एतेनैतत्

प्रख्यापितं व्यक्तमेव भवति यच्चन्द्रालोककविर्गीतगोविन्दकविना सर्वथैकात्मतामावहति। किन्तु नेदं मतं विपश्चितो निश्चितिपदवीमारोपयितुं कथमपि पारयन्ति। यत् केनचिदेतयो रचनासु गुणरीत्यादिसाम्यमाचम्यते तत्र रसनाया रसविशेषतारतम्यग्रहणालस्यमेव हेतुः। एतदधिकृत्य तु केवलमिदमेव साञ्जलि विनिवेद्य विरम्यते यत्—

साक्षाद् द्राक्षा मधुरा मधुराऽपि च सा सुधा सिद्धा।
यद्यस्ति तारतम्यं रसयति तत् केवलं विबुधः॥

इदमपि सुविदितमेव विदुषां यद् गीतगोविन्दकविर्जयदेवो लक्ष्मणसेन इत्यभिधस्य धराधिपस्य समये समलङ्करोद् गौडदेशम्। तस्य नृपस्य प्रासादद्वारि शिलापट्टोल्लिखितोऽयं श्लोकः समुपबृंहयति तमेवार्थम्। यथा—

"गोवर्द्धनश्च शरणो जयदेव उमापतिः।
कविराजश्च रत्नानि समितौ लक्ष्मणस्य च॥"

अयं जयदेवोऽपि स्वकीये गीतगोविन्दाख्ये काव्ये स्मरत्येतानारम्भ एव कविवरान्। तथाहि—

"वाचः पल्लवयत्युमापतिधरः सन्दर्भशुद्धिं गिरां
जानीते जयदेव एव शरणः श्लाघ्यो दुरूहद्रुतेः।
शृङ्गारोत्तरसत्प्रमेयरचनैराचार्यगोवर्द्धन-
स्पर्धी कोऽपि न विश्रुतः श्रुतिधरो धोयी कविक्ष्मापतिः॥" (१.४)

महाराजलक्ष्मणसेनो द्वादशशतकारम्भ एवासीदिति व्यक्तमेवैतिहासिकानाम्। कथमिवाऽयं पूर्ववर्ती जयदेवोऽनन्तरवर्तिना जयदेवेनाभिन्नतां भजेदिति स्वयं विचारयन्तु विद्वांसः। नैतावदेव खलु तयोर्भेदसाधकं साधनम्। तयोर्मातापितृनामनी अपि विसंवदतः। गीतगोविन्दकविः स्वयमेव कथयति—

"श्रीभोजदेवप्रभवस्य रामा(धा)देवीसुतश्रीजयदेवकस्य।
पाराशरादिप्रियवर्गकण्ठे श्रीगीतगोविन्दकवित्वमस्तु॥"

सुमित्रामातृकस्य महादेवतनयस्य जयदेवस्य रामा(धा)देवीसंभवेन भोजराजतनूजेन कीदृशोऽभेदस्य सम्भव इत्यगदितमेव व्यक्तमवभासते शेमुषीजुषाम्।

## पक्षधरो जयदेवः।

कथमेकः प्रमादवशाद् भ्रान्तिमागतः सन्नन्यानपि तथैवोत्पथगामिनः करोतीत्येतस्य निदर्शनानि सन्त्येव बहूनि। गड्डलिकाप्रवाहवदभियुक्तानामपि भवति मतेः कदाचिदभिसंचारः। नास्त्यत्र विस्मयविशेषः कश्चित्। किन्तु यदा विचारसंभ्रमोद्भमोऽपि भ्रमो भ्रामयन् बहून् सुचिरं भ्राम्यति तदावश्यमेवायं भवति विदुषां दृश्यरहस्यः। ईदृश एव कश्चिददभ्रो बभूव कस्यचिद् भ्रमो येनानालोचितसकलकल्पेन तेन प्रकल्पितोऽभेदो जयदेवयोरेतयोः। सकृत्प्रवर्तितः प्रवादो विदुषा विदुषाऽनधिगतविशेषजुषा वरदकरामर्शोप्यायित इव लब्धवान् विदग्धवाद इव संमतिसंमानम्।

मिथिलायां बभूव पण्डितप्रकाण्डो जयदेवमिश्रो नाम येनाधिगतं विद्वत्परिषदि कारणैरनेकैः पक्षधर इति प्रतिष्ठातिशयास्पदमुपपदम् । अस्य ग्रन्थेषु तत्त्वचिन्तामण्यालोकः प्रसिद्धतमः । अयं स्वयं कविः सन् कविभिर्बहुभिः संपादितस्नेहोऽनेहसो बहून् नयते स्म । आलोक इति ग्रन्थाभिधानान्यपदसाम्यात् कवित्वतार्किकत्वयोः सामानाधिकरण्याच्च स एवायं चन्द्रालोककविर्जयदेव इति सुतरां सम्भवति भ्रान्तेरवकाशः। सौभाग्येन नैवावहद् जयदेवाभिधानं ध्वनिकार आनन्दवर्द्धनः । यदि स तथाऽभविष्यद् ध्वन्यालोककरः कविरानन्दवर्द्धनो नियतमेवैतैरयमपि जयदेवत्वेन गृहीतोऽभविष्यत् । यदि कोऽपि कविः स्वकाव्ये प्रमाणप्रवीणमात्मानं प्रमाणयति न खलु तेन तदभिधानं कमपि तार्किकं स एवायमिति वक्तुं कोऽपि मतिमान् प्रतिपद्येत । वर्तमाने सति प्रबलतरे प्रमाणान्तरे, साहाय्यं सम्पादयितुं शक्नुवन्ति युक्तय ईदृश्यः ।

अतो यत् पक्षधरो जयदेवः कमप्यालोकोपपदं ग्रन्थं लिखितवान् यच्च पीयूषवर्षो जयदेवः प्रसन्नराघवप्रस्तावनायां स्वकीयं प्रमाणप्रवीणत्वमुपन्यस्तवान् तत् सर्वं प्रमाणान्तरं विना तदुभयाभेदसाधनार्थमकिञ्चित्करमेव । तद् युक्तमिदानीं प्रमाणान्तरप्रामाण्यमेव परीक्षितुम् ।

अस्य पक्षधरस्य प्रत्यक्षालोकान्ते लेखको लिपिकालमेवं लिखति–"शुभमस्तु शकाब्दा ॥ लसं १५०९" । अत्र मनमोहनचक्रवर्तिमहोदयः कल्पयति यदस्यां १५०९ इति संख्यायां शून्यं प्रमादेन न्यस्तं भवेत्, तदयं नियतं १५९ मितो लक्ष्मणाब्द एव । लक्ष्मणाब्दः १११९ मिते खिस्ताब्दे समारभ्यते । तदयं संकलनेन १५९ मितो लक्ष्मणाब्दः १११९ + १५९ = १२७८ मितेन खिस्ताब्देन तुल्यः । सतीशचन्द्रविद्याभूषणो लसं इत्येतस्य वत्सर इत्येवार्थसङ्केतमूरीकुरुते । तत् तत्रत्या १५०९ इति संख्या तन्मतेन शकाब्दद्योतिका । शकाब्दः ७८ मितात् खिस्ताब्दादारभ्यते । तदयं १५०९ + ७८=१८५७ मितेन खिस्ताब्देन तुल्यो भवति । लिपिकरणकाललेखने लेखकस्याभूत् प्रमाद इत्यत्र नैवास्ते बिन्दुरपि सन्देहस्य । किन्तु कुत्र सोऽभूदिति निश्चेतुं नैव शक्यते। चक्रवर्तिप्रवर्तिता शून्यन्यूनत्वकल्पना विकल्पानन्यान् प्रकल्पयन्ती नैवारोहति चेतोनिश्चितिभूमिम् । शून्यन्यूनत्वकल्पनातो वरीयसीयं स्यात् कल्पना यदयं शकाब्दं दत्त्वा लक्ष्मणाब्दं पश्चाद् दास्यामीति तं लिखितुं विस्मृतवान् । शकाब्दश्चास्थाने दत्त इति विशेषः कृतः । भवतु सर्वमेतत् । इदमत्र पृच्छामः कस्मादेतावानायासः स्वीक्रियते ? किन्तु सेत्स्यति तस्य लिपिकालाकलनेन ? यदस्य ग्रन्थो १५८७ मिते शकाब्दे प्रतिलिखितोऽभूत्, न तेन किञ्चिदासाद्यते निश्श्रेयनिश्चितिकरणम् ।

यदि चक्रवर्तिपदमनुवर्तमाना वयं लिपिकालं १२७८ मितं खिस्ताब्दं कल्पयामः तर्हि पक्षधरसमयं तत्पूर्वमेवावधारयितुं बलात्प्रवृत्ता भवेम। न खलु न कथयन्ति पण्डिता यत् पक्षधरादधीतवन्तौ वासुदेवसार्वभौमो रघुनाथशिरोमणिश्च । चैतन्यमहाप्रभुश्चाभूत् वासुदेवसार्वभौमस्यान्यतमः शिष्यः । अतो नैवेयत्पूर्वं भवितुमर्हति पक्षधरः ।

एतदपि न विस्मर्तव्यं यदयं मिथिलाधिपस्य भैरवसिंहस्य राज्यसमये प्रसिद्धिं लब्धवान्। खिस्ताब्दपञ्चदशशतकमध्यं यावत् समयो भैरवसिंहभूपतेरिति मिथिलाप्रत्नतत्त्वविदो निगदन्ति। विजयते बलवती किंवदन्ती यत् कविवरविद्यापतेरयमेकदा गृहं गत्वा तदातिथ्यं स्वीकृतवान्। पक्षधरहस्तलिखिते विष्णुपुराणे तल्लिपिकाल एवं दत्त आस्ते—

"बाणैर्वेदयुतैः सशंभुनयनैः संख्यां गते हायने
श्रीमद्गौडमहीभृतो गुरुदिने मार्गे च पक्षे सिते।"

व्यक्तमेवायं ३४५ मितो लक्ष्मणसंवत्सरः, (१११९+३४५) १४६४ खिस्ताब्देन तुल्यः। एतत् सर्वमालोचयतां स्पष्टमेवाभासते यदयं खिस्ताब्दपञ्चदशशतकमध्ये मिथिलामध्युवास। कथमिव त्रयोदशशतकारम्भे स बलान्नेतव्य इति वयं न जानीमः।

चन्द्रालोककविना जयदेवेन पक्षधरस्यैकात्मता सिद्धा स्यादित्याशयैव स्वीकृतवानेतावन्तमायासं मनमोहनचक्रवर्तिमहोदयः। किन्तु कथं विस्मृतवान् यदभिन्नयोः पुरुषयोः पितरावप्यभिन्नौ भवतः। अपि पक्षधरस्यापि जननी सुमित्राभिधाऽभूत्? अप्यस्य जनको महादेवयाज्ञिकोऽभूत्? अपि कोप्योमिति वक्तुं शक्नोति? यद्येवं तर्हि वृथैवाऽयं विततो यत्नो वस्तुतो भिन्नयोरभिन्नत्वं साधयितुम्। पीयूषवर्षोऽपि जयदेवः प्रमाणप्रवीण आसीदित्यत्र नाऽस्ति काऽपि विप्रतिपत्तिः। तद्ग्रन्थद्वयमेव तत् स्फुटं प्रमाणयति। एतत् पक्षधरभिन्नत्वेऽपि संभवत्येव। बलवद्विरुद्धप्रमाणावरुद्धाध्वा कथमिव कोऽप्युत्सहेत तावेकीकर्तुमिति वयं नैवावधारयामः। अहो! गतानुगतिकत्वं लोकस्य यत् कस्मिन्नपि समये परप्रत्ययनेयबुद्धयः सुधियोऽपि संजायन्ते।

## पीयूषवर्षजयदेवस्य ग्रन्थद्वयम्

अद्यावधि पण्डितप्रकाण्डस्याऽस्य महाकवेर्ग्रन्थद्वयमेवोपलब्धं चन्द्रालोकः प्रसन्नराघवं चेति।

(१) **चन्द्रालोकः**—अयमस्य चन्द्रालोकः स्वकीयालोकेन चिराद् धवलयन्नास्ते भारतधरावलयम्। अलङ्कारागमपारावारे विजिहीर्षूणामयं परमहर्षमादधानो विदधाति काञ्चित् परिचितिं ययोत्साहिताः सुखेनारोहन्ति लघुबुद्धयोऽप्यलघुकान् ग्रन्थपोतान्। अयं चन्द्रालोको दशभिर्मयूखैः प्रकाशमानो विगलितविस्तरं सुविशदं विद्योतयते साहित्यशास्त्रस्य समस्तवस्तुजातम्। वाग्विचाराभिधे प्रथमे मयूखे मङ्गलाचरणादिभिः प्रक्रम्य काव्यस्य हेतुलक्षणे च लक्षयित्वा रूढयौगिकादिभेदानां शब्दानां सोदाहरणः सयुक्तिकश्च संक्षेपेण विचारः कृतः। द्वितीये मयूखे दोषनिरूपणाख्ये काव्यदोषाणां लक्षणोदाहरणानि प्रदर्श्य प्रदर्श्य दोषाङ्कुशभेदानपि चान्तर्निर्दिश्य साधु समाधानं विहितम्। लक्षणनिरूपणाभिधाने तृतीये मयूखे नाट्यशास्त्रीयग्रन्थेषु प्रतिपाद्यमानानां लक्षणानां कानिचित् सोदाहरणानि प्रदर्शितानि। चतुर्थे मयूखे प्राचामाचार्याणां मतेन

दशानां गुणानां सोदाहरणं निरूपणं कृतम् । पञ्चमो मयूखः सर्वेषां विपुलतमः । अत्र विंशत्यधिकशतेन श्लोकैः शब्दार्थालङ्काराणां लक्षणभेदोदाहरणानि सुस्पष्टं सुशब्दं च प्रपञ्चितानि । षष्ठे मयूखे रसस्य रीतीनां वृत्तीनां च विचारः संक्षेपातिशयेन कृतः । सप्तमे ध्वनिनिरूपणाख्ये मयूखे वृत्तिभेदत्रयाद् व्यञ्जनामादाय सलक्षणभेदोदाहरणं सा संक्षेपत उपदर्शिता । तथैवाष्टमे गुणीभूतव्यङ्ग्यानां निरूपणं कृतम् । नवमे दशमे च मयूखयोः लक्षणाभिधे लक्षणभेदाभ्यामभिहिते ।

विपुलप्रचारतया चन्द्रालोकस्य टीका अपि विद्वद्भिरनेकैर्विरचिताः । तासु काश्चित् प्रथिततमा अत्र विनिर्दिश्यन्ते ।

१. शरदागमः—अयं चन्द्रालोकस्य टीकारूपो ग्रन्थः प्रद्योतनभट्टेन विरचितः । बलभद्रमिश्रतनयः प्रद्योतनभट्टो बुन्देलवंशावतंसस्य महाराजवीरभद्रदेवस्य सभापण्डितो बभूव । अयं महाराजः कन्दर्पचूडामणिनामकं कामशास्त्रीयं ग्रन्थं विंशत्यधिके षोडशशतके (१६२०) वैक्रमे लिखितवान् । शरदागमप्रणयनसमयः षड्विंशत्यधिकषोडशाब्दो वैक्रमः । इयमतिसंक्षिप्ता टीका समूलसंस्कारं सभूमिकादिकपरिष्कारं च नीता प्राकाश्यमस्मत्सुहृद्भिः पण्डितश्रीनारायणशास्त्रिभिः । अतोऽस्य विस्तरस्तत्रैवावलोकनीयः ।

२. रमा—इयं टीका वैद्यनाथपायगुण्ड इत्येतेन रचिता निर्णयसागरयन्त्रालये मुद्रिता च । उदाहरणचन्द्रिकादिग्रन्थकर्तुर्वैद्यनाथादयं सर्वथा भिन्न एव । स तु तत्सदित्युपनामको रामचन्द्रतनयश्चासीत् । अयं पायगुण्ड इत्युपपदो वेणीमहादेवयोः सुतो नागोजिभट्टस्य शिष्यश्चासीत् । व्यक्तमेवौफ्रेक्टो बालंभट्टमस्य तनयं तत्त्वेन गृह्णन् भ्रान्त एव । उभावपि सुतजनकौ दीर्घायुषो नागोजिभट्टस्य शिष्यतामुपगतौ । अयं वैद्यनाथोऽनेकान् व्याकरणधर्मशास्त्रविषयग्रन्थान् विरचितवान् । एतद्विस्तरस्तु म. म. पण्डितनित्यानन्दपन्तस्य बाबूगोविन्ददासस्य च भूमिकाभ्यामवगन्तव्यः ।

३ राकागमः—अयं टीकाग्रन्थो गागाभट्टेतिप्रसिद्धापरनामकेन विश्वेश्वरभट्टेन विरचितः । काश्यां विराजते विद्वन्मणिखनिनिभो भट्टानामन्वयः(१) । तत्रैवायमपि महाभागः समन्वभवत् प्रादुर्भावसौभाग्यम् । रामकृष्णभट्टतनूजस्य दिनकरभट्टस्याऽयं पुत्रः । स एवाऽयं येन शिवाजिभूपतेः सप्तदशाधिकषोडशशतकमिते वैक्रमेऽब्दे (१६१७) राज्यारोहणसंस्कारः क्षात्रेण कल्पेनाकारि(२) । कायस्थप्रदीपं नाम ग्रन्थं लिखितवानयं विंशत्यधिकषोडशशतकमिते वैक्रमेऽब्दे (१६२०) । तदस्यैहिकयाऽवस्थित्या त्रिषष्ट्यधिकपञ्चदशशतमिताब्दस्य (१५६३) अष्टाविंशत्यधिकषोडशशतक-

(१) कान्तानाथभट्टेन विरचितं भट्टवंशकाव्यमवलोकनीयमेतदन्वयविशेषजिज्ञासुभिः ।

(२) एतद्व्यतिकरवृत्तमविकृत्य श्रीसिद्धान्तविजयग्रन्थस्योपोद्घातः परिशिष्टानि च द्रष्टव्यानि ।

मिताब्दस्य (१६२८) च वैक्रमस्य मध्ये प्रायशो भवितव्यमिति सम्भाव्यते विद्वद्भिः। अनेन विरचिता ग्रन्थाः(१)—

धर्मशास्त्रे—

| | |
|---|---|
| १ आपस्तम्बपद्धतिः | २ आशौचदीपिका |
| ३ कायस्थपद्धतिः(२) | ४ तुलादानप्रयोगः |
| ५ दिनकरोद्योतः(३) | ६ पिण्डपितृयज्ञप्रयोगः |
| ७ प्रयोगसारः | ८ सुज्ञानदुर्गोदयः |
| ९ समयनयः | १० सापिण्ड्यविचारः |

पूर्वमीमांसायाम्—

| | |
|---|---|
| १ मीमांसाकुसुमाञ्जलिः | २ शिवार्कोदयः |
| ३ भाट्टचिन्तामणिः | |

अलङ्कारशास्त्रे—

१ राकागमः(४) ( चन्द्रालोकटीकारूपः )

**(२) प्रसन्नराघवम्**—

इदं नाटकं सुप्रसिद्धमेवाऽऽस्ते। सप्ताङ्केऽस्मिन्नाटके रामायणीया कथाऽभिनयैर्विन्यस्तरूपा सुतरामावर्जयति चेतांसि साहित्यसौहित्यजुषां विदुषाम्। बहुस्थानेषु मुद्रितमिदं विपुलप्रचारं चालोक्य चित्रमिव नः प्रतिभाति यदस्य न सन्ति टीका अनेकाः सुप्राचीनाः। काशी, कलिकाता, मंदराज, मुम्बा, पूना इत्येतासु पुरीषु मुद्रितानि संस्करणानि मूलमात्रं दधते। श्रूयते कस्यचिद् वेङ्कटाचार्यस्य टीकां दधदास्ते खोपकरसम्पादितं मुम्बापुर्यां प्रकाशितमेकमस्य संस्करणम्। तन्नैवोपलब्धमस्माभिः। न च वयं जानीमः कोऽयं वेङ्कटाचार्यः कतमदेशसमयवास्तव्यश्चेति।

अद्यावधि एकैव टीका दृष्टाऽस्माभिः। सा भावबोधिन्याख्या महामहोपाध्यायैः सुगृहीतनामधेयैः डा० गङ्गानाथझामहोदयैर्निर्मिता। इयं मूलरहिता 'भूबाणरत्नचन्द्राङ्के वैक्रमेऽब्दे (१९५१)' लिखिता काश्यां प्रकाशिता।



---

(१) एतानि ग्रन्थनामानि श्रीपाण्डुरङ्गवामनकाणेमहोदयस्य History of Dharma śāstra, Vol. I नामकाद् ग्रन्थाद् गृहीतानि।

(२) अयमेव ग्रन्थः 'कायस्थधर्मप्रदीप' इति, 'कायस्थधर्मप्रकाश' इति चाभिधानाभ्याममिधीयते। संक्षेपतो गागाभट्टीत्युच्यते।

(३) ग्रन्थप्रकाण्डस्य सन्त्यनेकेऽस्यांशाः—आचार, आशौच, काल, दान, पूर्त, प्रतिष्ठा, प्रायश्चित्त, व्यवहार, वर्षकृत्य, व्रत, शूद्र, श्राद्ध, संस्कार—इत्याख्याः।

(४) संप्रत्येवाऽयं प्राकाश्यं प्राप्यतेऽस्मत्सुहृद्वर्यैरनन्तरामशास्त्रिभिः।

इतीतिवृत्तं गदितं समासेनैतिहासिकम् ।
कवेः पीयूषवर्षस्य जयदेवस्य किञ्चन ॥
विशयविषविषण्णः को भवेन्नो विपन्नः
शुभविषयनिषण्णः सर्व एव प्रसन्नः ।
विषयमविशयं यद् भाग्यवान् वाग्यवोधान्
कथमपि लभते सोऽनल्पपुण्यानुभावः ॥
पदे पदे विवादेषु स्खलन्नपि लिखन्निदम् ।
जयदेवगतं वृत्तं क्षन्तव्योऽयं जनो बुधैः ॥
वर्तते बहु वक्तव्यं विवक्षा चाऽवशिष्यते ।
तथाऽप्यौचित्यमालोच्य सम्प्रतीतो विरम्यते ॥
का विवक्षा विना दाक्ष्यं तेन किं शिक्षया विना ।
वन्ध्यैव सा विनाऽभ्यासं निर्विवेकस्य तैः किमु ? ॥
बालो बलवतामग्रे वल्गन्नायाति फल्गुताम् ।
इतीव मतिमाधाय समीक्षोपेक्ष्यतेऽधुना ॥
चकोरैकनिपेयानां चारुवागपि चारु कः ।
इन्दुपीयूषबिन्दूनां रसमास्वादयेद् द्विजः ॥

---

ध्यायं ध्यायमुपाध्यायं करुणावरुणालयम् ।
विद्वच्चन्द्रं भालचन्द्रं कतमो न तमो जयेत् ॥
साहित्यवारां निधिकर्णधारं
शब्दार्थविद्याधरसार्वभौमम् ।
श्रीलक्ष्मणं निश्छलमाश्रयेद्यो
हृद्योगतोऽयं कविकोविदः स्यात् ॥
बाणाङ्कनववर्षाङ्कवैक्रमाब्दाद्यवासरे ।
बटुकेन प्रबन्धोऽयं प्रापितः परिपूर्णताम् ॥

संवत्सरप्रतिपत्, १९९५. } बटुकनाथशर्मा.

॥ श्रीः ॥

# राकागमसहितस्य चन्द्रालोकस्य

## विषयानुक्रमणिका(१) ।


| विषयाः | पृष्ठाङ्काः |
|---|---|
| प्रथमे मयूखे— | |
| टीकाकारस्य मङ्गलाचरणे । | १ |
| स्वस्य टीकायाश्च नामनी निर्दिश्य टीकाकारकृतं टीकानिर्माणसूचनं स्वव्याख्यानप्रशंसनं च । | ,, |
| ग्रन्थकारस्य मङ्गलाचरणम् । | ,, |
| ग्रन्थकर्तुः स्वनामग्रन्थनाम्नोः सूचनम् । | २ |
| ग्रन्थप्रयोजनप्रदर्शनम् । | २—३ |
| स्वाभिमानपरिहारपूर्वकं स्वोक्तेरुपादेयत्वस्य प्रतिपादनम् । | ३ |
| *श्रुताभ्याससहितायाः प्रतिभायाः काव्ये कारणत्वं ग्रन्थकृत्संमतं दर्शयित्वा तस्य कारणत्वस्य सप्रपञ्चं निरूपणम् । | ,, |
| काव्यस्वरूपनिर्वचनम् । | ४ |
| *तत्तन्मतप्रदर्शनप्रकारेण काव्यत्वस्य विवेचनम् । | ,, |
| काव्यलक्षणे प्राचीनोक्तेः सोपहासं दूषणम् । | ,, |
| *काव्यलक्षणगतं दूषणमुदाहरणेन विशदीकृत्य कैश्चिदुक्तस्य काव्यलक्षणस्य सूचनम् । | ५ |
| वाक्यघटकशब्दस्वरूपनिर्देशपुरःसरं शब्दत्रैविध्यस्य निरूपणम् । | ,, |
| *सर्वेषां शब्दानां यौगिकत्वस्य सर्वार्थवाचकत्वस्य च खण्डनम् । | ,, |
| प्रथमद्वितीयशब्दभेदयोः प्रत्येकं त्रैविध्यस्य सोदाहरणं प्रतिपादनम् । | ५—६ |
| तृतीयस्य शब्दभेदस्य सोदाहरणं प्रतिपादनं तत्प्रयोजनप्रदर्शनं च । | ६ |
| *तृतीये शब्दभेदे सविशेषं विचारं प्रस्तुत्य प्राचामुक्तीनां निरसनम् । | ६—७ |
| पदस्य वाक्यस्य खण्डवाक्यस्य च लक्षणानां निरूपणम् । | ७ |
| *पदवाक्यखण्डवाक्ययोः स्वरूपं सप्रपञ्चं निरूप्य तत्तन्मतोक्तिप्रदर्शनपूर्वकस्वाभिप्रायप्रकाशनेन वाक्यार्थबोधौपयिकक्रमप्रदर्शनविधया च वाक्यार्थान्वयबोधस्वरूपप्रदर्शनम् । | ७—९ |


(१) '*' एतच्चिह्नाङ्किता विषयाष्टीकान्तर्गता विज्ञेयाः ।

| विषयाः | पृष्ठाङ्काः |
|---|---|
| *अन्वयबोधे स्फोटवादिनां वैयाकरणानां चतुरः पक्षान् सोदाहरणानुपक्षिप्य तत्पक्षैकदेशस्य खण्डनम् । | ९—१० |
| *परमतनिरासस्वमतोपन्यासपूर्वकं प्राभाकरादिमतावष्टम्भेन वाक्यार्थबोधस्य विचारः | १०—११ |
| एकत्रापि पदे वाक्यत्वखण्डवाक्यत्वयोः सोदाहरणं सूचनम् । | ११ |
| वाक्यकदम्बक(प्रबन्ध)स्वरूपप्रतिपादनम् । | ,, |
| मातापितृनामनिर्देशपुरःसरं प्रथममयूखसमाप्तिप्रदर्शनम् । | ११—१२ |
| **द्वितीये मयूखे—** | |
| दोषस्वरूपनिरूपणम् । | १२ |
| *दोषाणां वाक्यार्थज्ञानरसोत्पत्तिप्रतिबन्धकतायाः प्रतिपादनम् । | ,, |
| *वामनवचनानुकूल्यप्रदर्शनपुरःसरं दोषाणां गुणाभावरूपत्वस्य निरूपणम् । | १२—१३ |
| *काव्यप्रकाशोक्तगुणदोषस्वरूपप्रदर्शनम् । | १३ |
| श्रुतिकटुदोषस्वरूपनिरूपणम् । | ,, |
| च्युतसंस्कृतिदोषस्वरूपनिरूपणम् । | १३ |
| *तत्तदुदाहरणप्रदर्शनमुखेन दण्डिमतानुसारं च च्युतसंस्कृतेः सप्रपञ्चं निरूपणम् । | १३—१४ |
| अप्रयुक्तदोषस्वरूपनिरूपणम् । | १४ |
| *व्याकरणविरोधालङ्कारिकसम्प्रदायविरोधयोर्मिथो भेदस्य प्रदर्शनम् । | ,, |
| असमर्थदोषस्वरूपस्य सोदाहरणं निरूपणम् । | ,, |
| निहतार्थदोषस्वरूपनिरूपणम् । | ,, |
| *कैश्चित्प्रकल्पितेऽसमर्थनिहतार्थयोर्भेदे दूषणस्योद्भावनम् । | ,, |
| अनुचितार्थदोषस्वरूपस्य सोदाहरणं निरूपणम् । | १५ |
| निरर्थकदोषस्वरूपनिरूपणम् । | ,, |
| अवाचकदोषस्वरूपस्य सोदाहरणं निरूपणम् । | ,, |
| *'अप्रयुक्तनिहतार्थावाचकदोषा असमर्थदोषेऽन्तर्भाव्या अप्यालङ्कारिकसम्प्रदायमात्राद्भिन्ना' इति काव्यप्रकाशोक्तेः प्रदर्शनम् । | ,, |
| अश्लीलदोषत्रैविध्यस्य सोदाहरणं निरूपणम् । | ,, |
| *अश्लीलदोषस्वरूपं प्रदर्श्य विरुद्धमतिकृद्दोषादेतद्दोषस्य भिन्नतायाः प्रतिपादनम् । | ,, |
| सन्दिग्धदोषस्वरूपस्य सोदाहरणं निरूपणम् । | ,, |
| अप्रतीतदोषस्वरूपनिरूपणम् । | ,, |
| शिथिलदोषस्य सोदाहरणं निरूपणम् । | १६ |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| ग्राम्यदोषस्य ,, ,, | १६ |
| *शिथिलस्य श्लेषाख्यगुणाभावरूपत्वं प्रतिपाद्य ग्राम्यदोषस्वरूपप्रदर्शनम् । | ,, |
| नेयार्थदोषस्वरूपस्य सोदाहरणं निरूपणम् । | ,, |
| क्लिष्टदोषस्वरूपस्य ,, ,, । | १६—१७ |
| अविमृष्टविधेयांशदोषस्वरूपस्य सोदाहरणं निरूपणम् । | १७ |
| *उदाहरणान्तरप्रदर्शनप्रकारेणाऽविमृष्टविधेयांशत्वस्य विशदीकरणम् । | ,, |
| विरुद्धमतिकृद्दोषस्य सोदाहरणं निरूपणम् । | ,, |
| अन्यसङ्गतदोषस्य ,, ,, । | ,, |
| *विरुद्धमतिकृद्दोषस्वरूपप्रदर्शनमुखेनान्यसङ्गतस्य दोषत्वं प्रतिष्ठाप्य 'अन्यसङ्गतमविमृष्टविधेयत्वान्तर्गत'मिति काव्यप्रकाशमतप्रकाशनम् । | १८ |
| पददोषानुपसंहृत्य वक्ष्यमाणेषु वाक्यदोषेषु प्रतिकूलाक्षरदोषस्वरूपस्य सोदाहरणं निरूपणम् । | ,, |
| उपहतविसर्गलुप्तविसर्गदोषस्वरूपयोः सोदाहरणं निरूपणम् | ,, |
| कुसन्धिविसन्धिदोषयोः सोदाहरणं निरूपणम् । | ,, |
| *सोदाहरणं कुसन्धिविसन्धिस्वरूपदर्शनम् । | १८—१९ |
| हतवृत्तदोषस्वरूपस्य सोदाहरणं निरूपणम् । | १९ |
| न्यूनाधिकदोषयोः सोदाहरणं निरूपणम् । | ,, |
| *न्यूनाधिकदोषस्वरूपप्रदर्शनम् । | ,, |
| कथितविकृतदोषस्वरूपयोः सोदाहरणं निरूपणम् । | ,, |
| पतत्प्रकर्षदोषस्वरूपस्य ,, ,, । | ,, |
| समाप्तपुनरात्तदोषस्य ,, ,, । | ,, |
| *समाप्तपुनरात्तदोषस्वरूपस्य सप्रपञ्चं विवेचनम् । | १९—२० |
| अर्थान्तरपदापेक्षिदोषस्य सोदाहरणं निरूणम् । | २० |
| *अर्थान्तरपदापेक्षिदोषस्वरूपप्रदर्शनम् । | ,, |
| अभवन्मतयोगदोषस्वरूपस्य सोदाहरणं निरूपणम् । | ,, |
| *अभवन्मतयोगदोषं सविशेषं विविच्य काव्यप्रकाशोक्ताऽनभिहितवाच्यत्व-दोषस्य न्यूनपदेऽन्तर्भावं च संसूच्य, कैश्चिदुक्तस्याऽनभिहितवाच्यत्व-न्यूनपदत्वयोर्भेदस्य खण्डनम् । | ,, |
| अस्थानस्थसमासदोषस्य सोदाहरणं निरूपणम् । | २१ |
| *सङ्कीर्णदोषस्य द्वैविध्यं स्फुटीकृत्य काव्यप्रकाशोक्तप्रसिद्धिहतत्वदोषस्याऽप्रयुक्तदोषेऽन्तर्भावस्य सूचनम् । | ,, |
| भग्नप्रक्रमदोषस्वरूपस्य सोदाहरणं निरूपणम् । | ,, |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| *भग्नप्रक्रमदोषं सप्रपञ्चं सोदाहरणं च विविच्य 'काव्यप्रकाशोक्तमक्रमत्वमस्थानस्थपदत्वेऽन्तर्भवती'ति सूचनम् । | २२ |
| अमतार्थान्तरदोषस्वरूपस्य सोदाहरणं निरूपणम् | ,, |
| *अमतार्थान्तरस्य प्रकृतरसविरुद्धरसव्यञ्जकसमभिव्याहारस्वरूपतां प्रतिपाद्य रसानां परस्परविरोधस्य प्रदर्शनम् । | ,, |
| *अमतार्थान्तरदोषस्य चतुर्णामपि रसदोषाणामुपलक्षकत्वं निरूप्य तेषामुदाहरणानां निरूपणम् । | २२—२४ |
| अर्थदोषेष्वपुष्टार्थदोषस्वरूपस्य सोदाहरणं निरूपणम् । | २४ |
| कष्टदोषस्वरूपनिरूपणम् । | ,, |
| व्याहतदोषस्वरूपस्य सोदाहरणं निरूपणम् । | ,, |
| पुनरुक्तदोषप्रदर्शनम् । | ,, |
| *कष्टादिदोषाणां सोदाहरणं निरूपणम् । | २४—२५ |
| दुष्क्रमग्राम्यसन्दिग्धदोषाणां सोदाहरणं निरूपणम् । | २५ |
| *दुष्क्रमग्राम्यसन्दिग्धदोषस्वरूपप्रदर्शनम् । | ,, |
| अनौचित्यदोषमुदाहरणेन प्रदर्श्य विरुद्धदोषस्वरूपद्वैविध्यस्य सोदाहरणं निरूपणम् । | ,, |
| *अनौचित्यदोषस्वरूपं विवृत्य काव्यप्रकाशोक्ताऽनवीकृतत्वदोषस्य कथितपददोषेऽन्तर्भावस्य संसूचनम् । | २५—२६ |
| सामान्यपरिवृत्तिविशेषपरिवृत्त्योः सोदाहरणं निरूपणम् । | २६ |
| *सामान्यपरिवृत्तिविशेषपरिवृत्तिस्वरूपोदाहरणप्रदर्शनपूर्वकं काव्यप्रकाशोक्तयोः सनियमानियमपरिवृत्तिदोषयोरत्रैव दोषद्वये साकाङ्क्षाऽपदयुक्तत्वदोषयोश्च न्यूनपदत्वव्याहतदोषद्वयेऽन्तर्गतेः सूचनम् । | २६—२७ |
| सहचराचारुविरुद्धान्योन्यसङ्गतिदोषयोः सोदाहरणं निरूपणम् । | २७ |
| *सहचराचारुत्वदोषस्वरूपं निरूप्य विरुद्धसम्बन्धदोषस्य काव्यप्रकाशोक्तप्रकाशितविरुद्धरूपतायाः सूचनम् । | ,, |
| *काव्यप्रकाशोक्तयोर्विध्यनुवादायुक्तत्वदोषयोरविमृष्टविधेयांशभग्नप्रक्रमाभ्याम् अभेदं सूचयित्वा 'अश्लीलत्वं नार्थदोष' इत्यत्र तद्दोषानुक्तेः समर्थनम् । | ,, |
| दोषाणां पदपदांशाद्याश्रयतायाः प्रतिपादनम् । | ,, |
| *श्रुतिकटुत्वादीनां केषाञ्चिद्दोषाणां पदपदांशादिगतत्वस्य तदुदाहरणानां च निपुणं निरूपणम् । | २७—२८ |
| *अप्रयुक्तनिहतार्थावाचकदोषाणामसमर्थदोषेऽन्तर्भावस्य कथनम् । | २८ |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| स्थलविशेषप्रयुक्तपूर्वोक्तदोषापवादरूपदोषाङ्कुशस्वरूपस्य तत्त्रैविध्यस्य च प्रतिपादनम् । | २९ |
| दोषाङ्कुशप्रकारत्रयनिरूपणम् । | ,, |
| प्रथमदोषाङ्कुशप्रकारोदाहरणप्रदर्शनम् । | ,, |
| *अत्रैव प्रकारान्तराणां निरूपणम् । | ,, |
| द्वितीयदोषाङ्कुशप्रकारोदाहरणप्रदर्शनम् । | ,, |
| *अत्रैव प्रकारान्तराणां सोदाहरणं निरूपणम् । | २९—३० |
| तृतीयदोषाङ्कुशप्रकारोदाहरणप्रदर्शनम् । | ३० |
| *अत्रैव प्रकारान्तराणि प्रदर्श्य तदन्येषु रसालङ्कारादिदोषेष्वपि क्वचित् तद्दोषापवादस्वरूपत्वस्य सोदाहरणं सविस्तरं च निरूपणम् । | ३०—३२ |
| *सर्वेषामलङ्काराणां प्रायेणोपमागर्भत्वादुपमादोषाणामेव सर्वालङ्कारदोषज्ञापकत्वमुक्त्वा तेषाञ्चोपमादोषाणामनुचितार्थत्वन्यूनाधिकपदत्वभग्नप्रक्रमत्वरूपतायाः काव्यप्रकाशोक्त्या सूचनम् । | ३२ |
| द्वितीयमयूखसमाप्तिप्रदर्शनम् । | ,, |


## तृतीये मयूखे—


| | |
|---|---|
| काव्यत्वज्ञापकेषु काव्यस्य लक्षणेष्वक्षरसंहतेः सलक्षणोदाहरणं निरूपणम् । | ३३ |
| *'अक्षरसंहतेः समासोक्तिभेदत्व'मिति कस्यचिन्मतस्य सूचनम् । | ,, |
| शोभायाः सलक्षणोदाहरणं निरूपणम् । | ,, |
| अभिमानस्य ,, ,, | ,, |
| हेतोः ,, ,, | ,, |
| *'हेतुरपह्नुतेर्भेद' इति कस्यचिन्मतस्य सूचनम् । | ,, |
| प्रतिषेधस्य सलक्षणोदाहरणं निरूपणम् । | ३४ |
| *अस्य प्रतिषेधस्य हेत्वपह्नुतावन्तर्गतेः कस्यचिन्मतेन सूचनम् । | ,, |
| निरुक्तस्य सलक्षणोदाहरणं निरूपणम् । | ,, |
| *निरुक्तस्य द्वैविध्यं प्रदर्श्य तस्योदाहरणैः स्फुटीकरणम् । | ,, |
| मिथ्याध्यवसायस्य सलक्षणोदाहरणं निरूपणम् । | ,, |
| सिद्धेः ,, ,, | ३५ |
| *कस्यचिन्मतेन सिद्धेस्तुल्ययोगितान्तर्भावस्य सूचनम् । | ,, |
| युक्तेः सलक्षणोदाहरणं निरूपणम् । | ,, |
| *'युक्तिश्चेयं व्यतिरेकालङ्कारस्वरूपे'ति कस्यचिन्मतस्य प्रदर्शनम् । | ,, |
| कार्यस्य सलक्षणोदाहरणं निरूपणम् । | ,, |
| *अस्य कार्यस्य परिणामालङ्कारान्तर्गतेः कस्यचिन्मतेन सूचनम् । | ,, |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| *'इत्यादीनि बहून्यन्यान्यपि काव्यस्य लक्षणानि महर्षिभिरुक्तानी'ति ग्रन्थकारोक्तिं प्रदर्श्य कस्यचित्तत्प्रकारस्य सोदाहरणं निरूपणम् । | ३५–३६ |
| तृतीयमयूखसमाप्तिसूचनम् । | ३६ |
| **चतुर्थे मयूखे—** | |
| श्लेषगुणस्वरूपस्य सोदाहरणं निरूपणम् । | ३६ |
| *श्लेषस्य द्वैविध्यं द्वयोरपि तद्भेदयोर्लक्षणे च प्रदर्श्य सरस्वतीकण्ठाभरणोक्तिप्रामाण्येन श्लेषस्यार्थगुणतायाः सूचनम् । | ,, |
| *श्लेषगुणस्य श्लेषालङ्कृतावनन्तर्भावं सहेतुकं प्रतिपाद्य साहित्यदर्पणोक्तश्लेषगुणस्वरूपं च सोदाहरणं निरूप्य तस्य पूर्वोक्तश्लेषेऽन्तर्भावस्य संसूचनम् । | ३६–३७ |
| *काव्यादर्शोक्तश्लेषगुणप्रतिपादनम् । | ३७ |
| प्रसादगुणस्वरूपनिरूपणम् । | ,, |
| *अन्येषां संमतं प्रसादस्वरूपं प्रतिपाद्य दण्डिमतानुसारं प्रसादस्य सोदाहरणं वर्णनम् । | ,, |
| समतागुणस्वरूपस्य सोदाहरणं निरूपणम् । | ३८ |
| *दण्डिसंमतायाः समताया वर्णनम् । | ,, |
| समाधिगुणस्वरूपनिरूपणम् । | ,, |
| *समाधेर्द्वैविध्यं संसूच्य तदुदाहरणयोर्निरूपणम् । | ,, |
| माधुर्यगुणस्वरूपस्य सोदाहरणं निरूपणम् । | ,, |
| *काव्यप्रकाशदर्पणोक्तस्य माधुर्यस्वरूपस्य वर्णनम् । | ,, |
| *दण्डिसंमतमाधुर्यस्वरूपप्रदर्शनम् । | ३९ |
| ओजोगुणस्वरूपस्य सोदाहरणं निरूपणम् । | ,, |
| *काव्यप्रकाशदर्पणोक्तमोजोगुणस्वरूपं सोदाहरणं निरूप्य दण्डिसंमतस्यापि तत्स्वरूपस्य वर्णनम् । | ,, |
| सौकुमार्यगुणस्वरूपस्य सोदाहरणं निरूपणम् । | ,, |
| *'सौकुमार्यमश्लीलत्वाभावरूपं न गुणान्तर'मिति स्वभिप्रायप्रकाशनम् । | ,, |
| उदारतागुणस्वरूपस्य सोदाहरणं निरूपणम् । | ,, |
| *'उदारत्वमोजस्येवान्तर्गत'मिति दर्पणोक्तिं प्रदर्श्य दण्डिसंमतोदारतास्वरूपस्य सोदाहरणं वर्णनम् । | ३९–४० |
| इत्थमष्टौ गुणान्निरूप्य तदतिरिक्तयोः कान्त्यर्थव्यक्तिगुणयोः क्रमेण शृङ्गारप्रसादयोरन्तर्भावं च संसूच्य गुणालङ्कारस्वरूपयोर्विवरणम् । | ४० |
| *दण्डिसंमतयोः कान्त्यर्थव्यक्त्योः स्वरूपे उदाहरणप्रत्युदाहरणाभ्यां निरूप्य तन्मतानुसारं गुणालङ्कारयोर्भेदस्य प्रदर्शनम् । | ,, |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| *काव्यप्रकाशकृतां मतमनुसृत्य सोदाहरणं गुणस्वरूपं गुणालङ्कारयोर्भेदं च प्रदर्श्य गुणानां त्रिविधत्वस्य संसाधनम् । | ४०-४१ |
| जीर्णैरुक्तानां व्यासनिर्वाहप्रभृतीनां गुणानां वैचित्र्यज्ञापकत्वस्य सूचनम् । | ४१ |
| *व्यासादिस्वरूपोदाहरणप्रदर्शनपुरःसरं सरस्वतीकण्ठाभरणोक्त्या सुस्पष्टं चतुर्विंशतिगुणान्निरूप्य तेषां पूर्वप्रदर्शितेष्वेव गुणेषु यथासन्निवेशमन्तर्भावस्य सूचनम् । | ४१-४२ |
| चतुर्थमयूखसमाप्तिप्रदर्शनम् । | ४२ |
| **पञ्चमे मयूखे—** | |
| अलङ्कारसामान्यलक्षणनिरूपणम् । | ४३ |
| *शब्दार्थालङ्कारत्वयोः सुस्पष्टं विवेचनम् । | ,, |
| छेकालङ्कारस्य सलक्षणोदाहरणं निरूपणम् । | ,, |
| वृत्त्यनुप्रासालङ्कारस्य सलक्षणोदाहरणं निरूपणम् । | ,, |
| लाटानुप्रासालङ्कारस्य ,, ,, । | ४४ |
| *लाटानुप्रासस्य पञ्चप्रकारतायाः सोदाहरणं प्रतिपादनम् । | ,, |
| स्फुटानुप्रासालङ्कारस्य सलक्षणोदाहरणं निरूपणम् । | ,, |
| *स्फुटानुप्रासस्य दर्पणसंमतायाः वृत्त्यनुप्रासभेदस्वरूपतायाः सूचनम् । | ,, |
| अर्थानुप्रासालङ्कारस्य सलक्षणोदाहरणं निरूपणम् । | ,, |
| पुनरुक्तप्रतीकाशालङ्कारस्य सलक्षणोदाहरणं निरूपणम् । | ४५ |
| *पुनरुक्तप्रतीकाशस्य शब्दश्लेषरूपतायाः स्वमतेन वर्णनम् । | ,, |
| यमकालङ्कारलक्षणनिरूपणम् । | ,, |
| *यमकस्य सामान्यतश्चतुरो भेदान् संसूच्य सोदाहरणं तदवान्तरभेदानां प्रदर्शनम् । | ४५-४६ |
| चित्रकाव्येषु खड्गबन्धस्य वर्णनम् । | ४७ |
| *खड्गबन्धाक्षरविन्यासप्रकारं स्फुटं प्रतिपाद्य गोमूत्रिकाबन्धप्रदर्शनम् । | ,, |
| *षोडशदलकमलबन्धं सोद्धारं निर्दिश्य चक्रबन्धस्य सोद्धारप्रकारं प्रदर्शनम् । | ४७-४८ |
| *सर्वतोभद्रबन्धतदुद्धारयोः प्रदर्शनम् । | ४८-४९ |
| *काव्यप्रकाशोक्तमष्टदलपद्मबन्धं तदुद्धारं च वर्णयित्वा मुरजबन्धप्रदर्शनम् । | ४९ |
| *चित्रप्रकारान्तराणि नामतः संसूच्य प्रहेलिकादीनामनलङ्कारत्वसूचिकाया दर्पणोक्तेः प्रदर्शनम् । | ,, |
| अर्थालङ्कारेषूपमालङ्कारस्य सलक्षणोदाहरणं निरूपणम् । | ५० |
| *उपमायाः पञ्चविंशतिभेदान् नामग्राहं निर्दिश्य सपदकृत्यमुपमालङ्कारस्वरूपनिर्वचनम् | ,, |

विषयाः पृष्ठाङ्काः

*कैश्चिदुक्ते उपमाया लक्षणस्वरूपे निर्दिश्य तत्खण्डनप्रदर्शनम् । ५०-५१

*उपमाया भेदान्प्रदर्श्य तस्याः शाब्दत्वमार्थत्वं तत्कृतबोधवैलक्षण्यं च स्वमतान्यमताभ्यां प्रतिपाद्य पञ्चविंशतेर्भेदानां विस्तरेण सोदाहरणं निरूपणम् । ५१-५४

*उपमायाः साधारणधर्मस्य त्रैविध्यं सोदाहरणं निरूप्य मालोपमारशनोपमयोः स्वरूपोदाहरणे च प्रतिपाद्य मूलकारमतानुसारमुपमायां तदन्तर्भावस्य संसूचनम् । ५४-५५

अनन्वयस्य सलक्षणोदाहरणं निरूपणम् । ५५

*अनन्वयालङ्कारस्वरूपनिर्वचनम् । ५५-५६

उपमेयोपमायाः सलक्षणोदाहरणं निरूपणम् ५६

*उपमेयोपमाया भेदयोः सोदाहरणं वर्णनम् । ,,

प्रतीपोपमायाः सलक्षणोदाहरणं निरूपणम् । ,,

ललितोपमायाः ,, ,, । ५७

*ललितोपमायाः पदार्थवृत्तिनिदर्शनारूपतायाः सूचनम् । ,,

स्तबकोपमायाः सलक्षणोदाहरणं निरूपणम् । ,,

सम्पूर्णोपमायाः ,, ,, । ५७-५८

*पूर्वोक्तपूर्णोपमातः सम्पूर्णोपमाया भेदं प्रदर्श्य केषाञ्चिन्मतेनास्या उपमेयोपमाभेदत्वस्य सूचनम् । ५८

रूपकालङ्कारलक्षणनिरूपणम् । ,,

*रूपकस्य सावयवादिभेदान् संसूच्य तदुदाहरणानां सप्रपञ्चं निरूपणम् । ५८-५९

*केषाञ्चिदभिमतान् रूपकभेदान् सोदाहरणं निरूप्य कुत्रचित्तद्भेदे दूषणप्रकारप्रदर्शनम् । ५९-६०

सोपाधिरूपकस्य सलक्षणोदाहरणं निरूपणम् । ६०

दृश्यसादृश्यरूपकस्य ,, ,, । ६०-६१

आभासरूपकरूपितरूपकयोः सोदाहरणं निरूपणम् । ६१

*मालारूपकरशनारूपकयोरलङ्कारान्तराभावरूपत्वस्य प्रतिपादनम् । ,,

परिणामालङ्कारस्य सलक्षणोदाहरणं निरूपणम् । ,,

*परिणामस्वरूपं सप्रपञ्चं निरूप्य 'रूपकान्तर्गतोऽयमलङ्कारः' इति काव्यप्रकाशमतस्य सूचनम् । ,,

उल्लेखालङ्कारस्य सलक्षणोदाहरणं निरूपणम् । ६१-६२

*अन्यत्रोक्तमुल्लेखलक्षणं सोदाहरणं निर्दिश्य काव्यप्रकाशमतानुसारमेतस्य रूपकान्तर्गतेः सूचनम् । ६२

| विषयाः | पृष्ठाङ्काः |
| --- | --- |
| अपह्नुतेः सलक्षणोदाहरणं निरूपणम् । | ६२–६३ |
| पर्यस्तापह्नुतेः ,, ,, | ६३ |
| *अन्यत्रोक्तां हेत्वपह्नुतिं सोदाहरणं प्रदर्श्य कस्यचिन्मतेन तस्या अलङ्कारत्वस्य खण्डनम् । | ,, |
| भ्रान्तापह्नुतेः सलक्षणोदाहरणं निरूपणम् । | ६३–६४ |
| भ्रान्तपह्नुतेर्द्वैविध्यं प्रदर्श्य 'तत्त्वाख्यानोपमारूपेय'मिति दण्डिमतस्य प्रकाशनम् । | ६४ |
| *छेकापह्नुतेः सलक्षणोदाहरणं निरूपणम् । | ,, |
| कैतवापह्नुतेः ,, ,, | ,, |
| *केषाञ्चिन्मतमनुसृत्यापह्नुतेः स्वरूपत्रयस्य प्रदर्शनम् । | ,, |
| उत्प्रेक्षायाः सलक्षणोदाहरणं निरूपणम् । | ६५ |
| *उत्प्रेक्षाया भेदत्रयं निर्दिश्य कर्तुरुपमानत्वेनान्वययोग्यतायाः प्रतिपादनम् । | ,, |
| *अन्यैरुक्तमुत्प्रेक्षायाः स्वरूपं निरूप्य तस्या द्वैविध्यस्य सोदाहरणं सूचनम् । | ६५–६६ |
| *अन्येषां मतेनोत्प्रेक्षाया भेदद्वयं सूचयित्वा तदुदाहरणयोः प्रदर्शनम् । | ६६ |
| गूढोत्प्रेक्षायाः सलक्षणोदाहरणं निरूपणम् । | ,, |
| *काव्यप्रकाशमतेन गूढोत्प्रेक्षाया अलङ्कारान्तरत्वस्य खण्डनम् । | ,, |
| स्मृतिभ्रान्तिसन्देहानां सलक्षणोदाहरणं निरूपणम् । | ६७ |
| *स्मरणादीनां स्वरूपभेदोदाहरणानि प्रदर्श्य कैश्चिदुक्तं संशयस्वरूपं च विवृत्य काव्यप्रकाशोक्तस्य संशयसन्देहयोर्भेदस्य स्फुटीकरणम् । | ६७–६८ |
| मीलितस्य सलक्षणोदाहरणं निरूपणम् । | ६८ |
| *काव्यप्रकाशाभिमतस्य मीलितस्वरूपस्य सोदाहरणं प्रदर्शनम् । | ६९ |
| सामान्यस्य सलक्षणोदाहरणं निरूपणम् । | ,, |
| *अन्यैरुक्तं मीलितसामान्यालङ्कारयोर्भेदं निर्दिश्य काव्यप्रकाशोक्तस्य सामान्यस्वरूपस्य सोदाहरणं प्रदर्शनम् । | ,, |
| उन्मीलितस्य सलक्षणोदाहरणं निरूपणम् । | ६९–७० |
| अनुमानस्य ,, ,, | ७० |
| *प्रदीपसंमतं हेत्वनुमानयोर्भेदं सोदाहरणं निरूप्यानुमानप्रकारान्तरोदाहरणप्रदर्शनम् । | ,, |
| अर्थापत्तेः सलक्षणोदाहरणं निरूपणम् । | ७०–७१ |
| काव्यलिङ्गस्य ,, ,, | ७१ |
| परिकरस्य ,, ,, | ,, |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| *काव्यलिङ्गपरिकरयोर्भेदं प्रदर्श्य परिकरालङ्कारविषये परेषां मतस्य प्रतिपादनम्। | ७१ |
| परिकराङ्कुरस्य सलक्षणोदाहरणं निरूपणम्। | ७२ |
| अक्रमातिशयोक्तेः ,, ,, | ,, |
| अत्यन्तातिशयोक्तेः ,, ,, | ,, |
| चपलातिशयोक्तेः ,, ,, | ,, |
| सम्बन्धातिशयोक्तेः ,, ,, | ७३ |
| भेदकातिशयोक्तेः ,, ,, | ,, |
| *भेदकातिशयोक्तेरुदाहरणान्तरं निर्दिश्य तस्य पूर्वोक्तसर्वातिशयोक्तीनामुदाहरणत्वस्य सूचनम्। | ,, |
| रूपकातिशयोक्तेः सलक्षणोदाहरणं निरूपणम्। | ,, |
| *काव्यप्रकाशमतेन रूपकातिशयोक्तेर्निगीर्याध्यवसानातिशयोक्तिरूपतायाः सोदाहरणं सूचनम्। | ,, |
| *काव्यप्रकाशोक्ताया यद्यर्थोक्तिकल्पितातिशयोक्तेर्वक्ष्यमाणसम्भावनान्तर्भावं संसूच्य सापह्नवातिशयोक्तेरलङ्कारसर्वस्वोक्तायाः प्रतिपादनम्। | ७३-७४ |
| प्रौढोक्तेः सलक्षणोदाहरणं निरूपणम्। | ७४ |
| सम्भावनायाः ,, ,, | ,, |
| *'सम्भावनालङ्कारोऽयमतिशयोक्तेर्भेदः' इति काव्यप्रकाशमतस्य सूचनम्। | ,, |
| प्रहर्षस्य सलक्षणोदाहरणं निरूपणम्। | ७४-७५ |
| *मतान्तरेण प्रहर्षस्वरूपस्य सोदाहरणं निरूपणम्। | ७५ |
| विषादस्य सलक्षणोदाहरणं निरूपणम्। | ,, |
| तुल्ययोगितायाः ,, ,, | ७५-७६ |
| *अन्यत्रोक्तं कण्ठाभरणमतानुसारं च तुल्ययोगितास्वरूपं सोदाहरणं प्रतिपाद्य कस्यचिन्मतेनैतस्याः सिद्धिनामकलक्षणगुणेऽन्तर्भावस्य सूचनम्। | ७६ |
| दीपकस्य सलक्षणोदाहरणं निरूपणम्। | ७६-७७ |
| *अन्यत्र प्रतिपादितस्य दीपकस्वरूपस्य सोदाहरणं निरूपणम्। | ७७ |
| आवृत्तिदीपकस्य सलक्षणोदाहरणं निरूपणम्। | ,, |
| *'आवृत्तिदीपकं प्रतिवस्तूपमान्तर्गतम्' इति काव्यप्रकाशमतस्य सूचनम्। | ,, |
| प्रतिवस्तूपमायाः सलक्षणोदाहरणं निरूपणम्। | ७७-७८ |
| *आवृत्तिदीपकप्रतिवस्तूपमयोर्भेदस्य प्रदर्शनम्। | ७८ |
| दृष्टान्तस्य सलक्षणोदाहरणं निरूपणम्। | ,, |
| *बिम्बप्रतिबिम्बभावस्वरूपं विशदीकृत्य दृष्टान्तस्य निरूपणम्। | ,, |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| निदर्शनायाः सलक्षणोदाहरणं निरूपणम् । | ७९ |
| *रूपकान्निदर्शनाया भेदं प्रदर्श्य परमतेन निदर्शनास्वरूपस्य सोदाहरणं निरूपणम् । | ,, |
| व्यतिरेकस्य सलक्षणोदाहरणं निरूपणम् । | ८० |
| *व्यतिरेकालङ्कृतेः षोढात्वं प्रतिपाद्य 'उपमानन्यूनतायां प्रतीपालङ्कार' इति मूलाशयस्याविष्करणम् । | ८० |
| *केषाञ्चिन्मतेन सोदाहरणं व्यतिरेकं वर्णयित्वा काव्यप्रकाशप्रतिपादितान् व्यतिरेकस्य चतुर्विंशतिभेदांश्च सूचयित्वा तद्भेदैकदेशस्य खण्डनम् । | ,, |
| सहोक्तेः सलक्षणोदाहरणं निरूपणम् । | ,, |
| *सहोक्तेः श्लेषगर्भतायाः सूचनम् | ,, |
| विनोक्तेः सलक्षणोदाहरणं निरूपणम् । | ८१ |
| समासोक्तेः ,, ,, | ,, |
| खण्डश्लेषस्य ,, ,, | ,, |
| *श्लेषस्य शब्दार्थगतत्वेन द्वैविध्यं शब्दश्लेषलक्षणं तस्य चाष्टविधत्वं सोदाहरणं निरूप्यार्थश्लेषस्वरूपस्य सोदाहरणं प्रकटीकरणम् । | ८१–८२ |
| *अलङ्कारान्तरसत्त्वेऽपि श्लेषस्य प्राधान्यं वर्णयित्वा काव्यप्रकाशमतेनास्य शब्दालङ्कारत्वं जीर्णमतेनार्थालङ्कारत्वं च प्रतिपाद्य गुणान्तर्गतश्लेषादेतस्य भिन्नतायाः प्रदर्शनम् । | ८२–८३ |
| भङ्गश्लेषस्य सलक्षणोदाहरणं निरूपणम् । | ८३ |
| अर्थश्लेषस्य ,, ,, | ,, |
| अप्रस्तुतप्रशंसायाः ,, ,, | ८३–८४ |
| *अप्रस्तुतप्रशंसायाः पञ्च प्रकारान् प्रदर्श्य सोदाहरणं तेषां सप्रपञ्चं निरूपणम् । | ८४–८५ |
| *अप्रस्तुतप्रशंसायाः समासोक्त्यादेर्भेदं निरूप्य तत्स्वरूपमन्यत्रोक्तं च निर्दिश्य व्याजस्तुतेर्भिन्नविषयत्वस्य तस्याः प्रतिपादनम् । | ८५ |
| अर्थान्तरन्यासस्य सलक्षणोदाहरणं निरूपणम् । | ,, |
| *अर्थान्तरन्यासकाव्यलिङ्गयोर्भेदस्य प्रदर्शनम् । | ८५–८६ |
| विकस्वरस्य सलक्षणोदाहरणं निरूपणम् । | ८६ |
| पर्यायोक्तेः ,, ,, | ,, |
| *पर्यायोक्तिस्वरूपं सोदाहरणं विविच्य काव्यप्रकाशमतेनान्यमतेन च तत्प्रतिपादनम् । | ८६–८७ |
| व्याजस्तुतेः सलक्षणोदाहरणं निरूपणम् । | ८७ |
| *अन्यत्रोक्तस्य व्याजस्तुतिव्याजनिन्दयोः स्वरूपस्य निरूपणम् । | ८८ |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| आक्षेपस्य सलक्षणोदाहरणं निरूपणम् । | ८८ |
| *काव्यप्रकाशमतेनाक्षेपस्य प्रतीपेऽन्तर्भावं संसूच्यान्यमतेनाक्षेपस्य सलक्षणोदाहरणं वर्णनम् । | ८८–८९ |
| गूढाक्षेपस्य सलक्षणोदाहरणं निरूपणम् । | ८९–९० |
| विरोधस्य ,, ,, | ९० |
| *विरोधालङ्कृतेर्दशसु प्रकारेषु केषाञ्चिदुदाहरणैः स्फुटीकरणम् । | ,, |
| विरोधाभासस्य सलक्षणोदाहरणं निरूपणम् । | ,, |
| *विरोधाभासविरोधयोर्भेदस्य प्रदर्शनम् । | ९१ |
| असम्भवस्य सलक्षणोदाहरणं निरूपणम् । | ,, |
| विभावनायाः ,, ,, | ,, |
| *अन्यत्र प्रदर्शितान् विभावनाभेदान् सोदाहरणान् निरूप्य काव्यप्रकाशमतेन तेषामतिशयोक्तावन्तर्भावस्य संसूचनम् । | ९१–९२ |
| विशेषोक्तेः सलक्षणोदाहरणं निरूपणम् । | ९२ |
| *विशेषोक्तेर्भेदत्रयस्य सोदाहरणं स्फुटीकरणम् । | ,, |
| असङ्गतेः सलक्षणोदाहरणं निरूपणम् । | ,, |
| *अन्यत्र प्रतिपादितस्यासङ्गतेः प्रकारद्वयस्य सोदाहरणं निरूपणम् । | ९२–९३ |
| विषमस्य सलक्षणोदाहरणं निरूपणम् । | ९३ |
| *अन्यत्रोक्तस्य विषमस्वरूपस्य सोदाहरणं प्रदर्शनम् । | ,, |
| समस्य सलक्षणोदाहरणं निरूपणम् । | ,, |
| *अन्यमतेन सोदाहरणं समस्वरूपस्य वर्णनम् । | ९३–९४ |
| विचित्रस्य सलक्षणोदाहरणं निरूपणम् । | ९४ |
| अधिकस्य ,, ,, | ,, |
| *अन्यत्र प्रदर्शितयोरधिकाल्पालङ्कारस्वरूपयोः सोदाहरणं निरूपणम् । | ,, |
| अन्योन्यस्य सलक्षणोदाहरणं निरूपणम् । | ९५ |
| विशेषस्य ,, ,, | ,, |
| *अन्यत्रोक्तस्य विशेषस्वरूपस्य सोदाहरणं प्रदर्शनम् । | ,, |
| व्याघातस्य सलक्षणोदाहरणं निरूपणम् । | ,, |
| *अन्यत्र प्रतिपादितयोर्व्याघातभेदयोः सलक्षणोदाहरणं निरूपणम् । | ९५–९६ |
| कारणमालायाः सलक्षणोदाहरणं निरूपणम् । | ९६ |
| एकावल्याः ,, ,, | ,, |
| मालादीपकस्य ,, ,, | ,, |
| सारस्य ,, ,, | ९७ |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| *सारालङ्कृतेर्भेदद्वयस्य सोदाहरणं प्रतिपादनम् । | ९७ |
| उदारस्य सलक्षणोदाहरणं निरूपणम् । | ,, |
| यथासङ्ख्यस्य ,, ,, | ९७-९८ |
| *अन्यमतेन यथासङ्ख्यस्वरूपस्य सोदाहरणं प्रदर्शनम् । | ९८ |
| पर्यायस्य सलक्षणोदाहरणं निरूपणम् । | ,, |
| *अन्यत्र प्रदर्शितं पर्यायस्वरूपं सोदाहरणं निर्दिश्यैतदलङ्कारस्य सङ्कोच-विकासोभयरूपतायाः सोदाहरणं निरूपणम् । | ९८-९९ |
| परिवृत्तेः सलक्षणोदाहरणं निरूपणम् । | ९९ |
| *सोदाहरणं परिवृत्तेः स्वरूपान्तरस्य प्रदर्शनम् । | ९९-१०० |
| परिसङ्ख्यायाश्चातुर्विध्यमुदाहरणैः स्फुटीकृत्य लक्षणप्रदर्शनपुरःसरं स्व-मतेन तस्याः प्रकारद्वयस्य सोदाहरणं प्रदर्शनम् । | १००-१०१ |
| विकल्पस्य सलक्षणोदाहरणं निरूपणम् । | १०१ |
| समुच्चयस्य ,, ,, | ,, |
| *प्रकारत्रयेण समुच्चयस्वरूपं सोदाहरणं प्रदर्श्य परमतेनापि तत्स्वरूपस्य निरूपणम् । | १०१-१०२ |
| समाधेः सलक्षणोदाहरणं निरूपणम् । | १०२ |
| प्रत्यनीकस्य ,, ,, | ,, |
| प्रतीपस्य ,, ,, | ,, |
| *इतरत्रोक्तं सोदाहरणं प्रतीपस्वरूपमुपवर्ण्य प्रतीपोपमातः प्रतीपस्य भिन्न-तायाः प्रतिपादनम् । | १०३ |
| उल्लासस्य सलक्षणोदाहरणं निरूपणम् । | ,, |
| *उल्लासालङ्कृतेर्भेदचतुष्टयस्य सोदाहरणं प्रदर्शनम् । | ,, |
| तद्गुणस्य सलक्षणोदाहरणं निरूपणम् । | १०३-१०४ |
| पूर्वरूपस्य ,, ,, | १०४ |
| प्रकारान्तरेण पूर्वरूपस्य सलक्षणोदाहरणं निरूपणम् । | ,, |
| अतद्गुणस्य ,, ,, | ,, |
| (१)प्राक्सिद्धेः ,, ,, | १०४-१०५ |
| अवज्ञायाः ,, ,, | १०५ |
| प्रश्नोत्तरस्य ,, ,, | ,, |
| *प्रश्नोत्तरालङ्कृतेरनुमानकाव्यलिङ्गालङ्कृतिभ्यां भेदस्य प्रतिपादनम् । | ,, |


(१) अत्रैव 'अनुगुण' इत्यलङ्कृतिनामान्तरमन्यत्र ।

| विषयाः | पृष्ठाङ्काः |
|---|---|
| पिहितस्य सलक्षणोदाहरणं निरूपणम् । | १०५ |
| व्याजोक्तेः ,, ,, | ,, |
| *क्वचिदुक्तां सोदाहरणं व्याजोक्तिमुपदर्श्य केषाञ्चिन्मतेन तस्याश्छेकापह्नुतावन्तर्भावं च संसूच्यापह्नुतिव्याजोक्त्योरन्येषां मतेन भेदस्य प्रदर्शनम् । | १०६ |
| *अन्यत्रोक्तस्य सोदाहरणगूढोक्तिस्वरूपस्य निरूपणम् । | ,, |
| वक्रोक्तेः सलक्षणोदाहरणं निरूपणम् । | ,, |
| स्वभावोक्तेः ,, ,, | ,, |
| भाविकस्य सलक्षणोदाहरणं निरूपणम् । | १०७ |
| *अद्भुतरसातिशयोक्तिभ्यां भाविकस्य भिन्नतायाः स्फुटीकरणम् । | ,, |
| भाविकच्छवेः ,, ,, | ,, |
| उदात्तस्य ,, ,, | ,, |
| *उदात्तालङ्कृतेः सद्भावं संसाध्य तत्स्वरूपस्यान्यत्रोक्तस्य सोदाहरणं निरूपणम् । | १०८ |
| अत्युक्तेः सलक्षणोदाहरणं निरूपणम् । | ,, |
| *मिथ्याध्यवसितिललितानुज्ञालेशमुद्रारत्नावलीयुक्तिलोकोक्तिछेकोक्तीनां ग्रन्थान्तरोक्तानां सलक्षणोदाहरणं निरूपणम् । | १०८–१०९ |
| *अलङ्कारशेखरोक्तांश्चतुर्दशालङ्कारान् नामतः सूचयित्वाऽत्युक्तिप्रभृतीनामनलङ्कारत्वस्य सूचनम् । | १०९ |
| कैश्चिन्मनीषिभिः प्रोक्तानां रसवत्प्रेयऊर्जस्विसमाहितभावोदयभावसन्धिभावशबलत्वाख्यानां सप्तानामलङ्काराणां सूचनम् । | ,, |
| *रसवदादीनां लक्षणान्युदाहरणानि च प्रदर्श्य तेषामलङ्कारत्वस्य केषाञ्चिदुक्त्या निरसनम् । | १०९–११२ |
| *'रसवदादीनां युक्तमलङ्कारत्व'मिति ध्वनिकारमतं तदुक्तिप्रामाण्येन प्रदर्श्य 'भाक्तमेषामलङ्कारत्व'मित्यन्येषां मतस्य सूचनम् । | ११२ |
| शुद्धेर्लक्षणं संसूच्य शुद्धिसंसृष्टिसङ्कराणां पूर्वोक्तालङ्कारविन्यासरूपत्वेन हेतुनालङ्कारान्तरत्वस्य निराकरणम् । | ,, |
| *संसृष्टिसङ्करयोर्लक्षणे सङ्करस्य भेदत्रयं च निर्दिश्य सोदाहरणविवरणमेतेषामलङ्कारान्तराभावरूपत्वस्य संसूचनम् । | ११२–११३ |
| सर्वेषामलङ्काराणां क्वचिन्न्यूनाधिकरूपत्वस्य दर्शनाद्वैसादृश्येऽपि प्रकारभेदात्तदलङ्कारत्वसद्भावस्य प्रतिपादनम् । | ११३ |
| उपमादीनामलङ्काराणां मालापरम्पराद्याकारविशेषेण विन्यासस्य चमत्कारजनकतयाऽलङ्काराङ्गत्वेन हेतुनाऽलङ्कारान्तराभावरूपत्वस्य प्रतिपादनम् । | ,, |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| *रशनोपमादीनां सोदाहरणं निरूपणम् । | ११३ |
| सर्वेषामलङ्काराणामतिशयोक्त्यलङ्कारेऽन्तर्भावं प्रतिपादयतः परेषां मतस्योपन्यसनम् । | ११४ |
| अलङ्कारभेदस्यानुभवैकसिद्धत्वादुपमाद्यलङ्कारभेदसद्भावस्य ग्रन्थकारमतेन निरूपणम् । | ,, |
| पञ्चममयूखसमाप्तिप्रदर्शनम् । | ,, |
| **षष्ठे मयूखे—** | |
| विभावस्य भेदद्वयं कारणत्वं च निर्दिश्यानुभावव्यभिचारिणोः क्रमेण कार्यसहकारिकारणरूपत्वस्य प्रतिपादनम् । | ११५ |
| सामान्यतो रसस्वरूपस्य निर्वचनम् । | ,, |
| *शृङ्गारादिनवरसानां स्थायिभावान् प्रदर्श्य रसस्वरूपस्य सविशेषं निरूपणम् । | ,, |
| *भट्टलोल्लटमतेन रसस्वरूपस्य निरूपणम् । | ११५–११६ |
| *श्रीशङ्कुकमतेन ,, ,, | ११६ |
| *भट्टनायकमतेन ,, ,, | ,, |
| *आचार्याभिनवगुप्तपादमतेन रसस्वरूपस्य निरूपणम् । | ११६–११७ |
| *विभावादीनां सर्वेषां मिलितानामेवाभिव्यञ्जकत्वं संसूच्य, एकेन रसाभिव्यक्तावन्यतराक्षेपस्य तत्तदुदाहरणैः प्रदर्शनम् । | ११७ |
| शृङ्गाररसस्वरूपनिर्वचनं संयोगविप्रलम्भयोस्तद्भेदयोश्च कथनम् । | ११८ |
| *शृङ्गाररसस्थायिनः स्वरूपं प्रदर्श्य संयोगवियोगयोर्द्वैविध्यमनुभावादीन् विप्रलम्भस्य चातुर्विध्यं च संसूच्य द्विविधयोः संयोगवियोगयोरुदाहरणानां प्रदर्शनम् । | ११८–११९ |
| हास्यरसस्वरूपनिर्वचनम् । | ११९ |
| *हास्यरसस्थायिनः स्वरूपं निर्दिश्य हास्यस्य विभावादींस्त्रैविध्यं सङ्क्रमणरूपत्वं च प्रतिपाद्य हास्यरसोदाहरणप्रदर्शनम् । | ११९–१२० |
| करुणरसस्वरूपनिर्वचनम् । | १२० |
| *करुणरसस्थायिनः स्वरूपं निरूप्य विभावादिप्रतिपादनपूर्वं करुणरसोदाहरणप्रदर्शनम् । | ,, |
| रौद्ररसस्वरूपनिर्वचनम् । | ,, |
| *रौद्ररसस्थायिनः स्वरूपं प्रदर्श्य विभावादिप्रतिपादनपुरःसरं रौद्ररसोदाहरणप्रदर्शनम् । | १२०–१२१ |
| वीररसस्वरूपनिर्वचनम् । | १२१ |
| वीररसस्थायिनः स्वरूपं प्रतिपाद्य वीररसस्य विभावादिकं त्रैविध्यं च निरूप्य वीररसोदाहरणप्रदर्शनम् । | ,, |

| विषयाः | पृष्ठाङ्काः |
| --- | --- |
| भयानकरसस्वरूपनिर्वचनम् । | १२१ |
| *भयानकरसस्थायिनः स्वरूपं निर्दिश्य विभावादिप्रतिपादनपुरःसरं भयानकरसोदाहरणप्रदर्शनम् । | १२१–१२२ |
| बीभत्सरसस्वरूपनिर्वचनम् । | १२२ |
| *बीभत्सरसस्थायिनः स्वरूपं निरूप्य विभावादिप्रतिपादनपुरःसरं बीभत्सरसोदाहरणप्रदर्शनम् । | ,, |
| अद्भुतरसस्वरूपनिर्वचनम् । | ,, |
| *अद्भुतरसस्थायिनः स्वरूपं प्रदर्श्य विभावादिप्रतिपादनपुरःसरम् अद्भुतरसोदाहरणप्रदर्शनम् । | १२१--१२३ |
| शान्तरसस्वरूपनिर्वचनम् । | १२३ |
| *विभावादिप्रतिपादनपुरःसरं शान्तरसस्थायिनः स्वरूपं निरूप्य निर्वेदस्य शान्तरसस्थायिभावत्वमन्येषां मतेन सन्दूष्य शमस्य च तद्रसस्थायिभावत्वं निर्दिश्य शान्तरसोदाहरणप्रदर्शनम् । | ,, |
| भावस्वरूपनिर्वचनम् । | ,, |
| *सोदाहरणं भावानां निरूपणम् । | १२३–१२४ |
| त्रयस्त्रिंशद्व्यभिचारिभावानां नामतः प्रतिपादनम् । | १२४ |
| *तत्तद्व्यभिचारिभावस्वरूपप्रदर्शनम् । | १२४–१२५ |
| रसाभासभावाभासयोर्निरूपणम् । | १२५ |
| *स्वरूपनिरूपणपुरःसरं रसाभासभावाभासोदाहरणप्रदर्शनम् । | ,, |
| भावशान्तिभावोदयभावसन्धिभावशबलतानां काव्यशोभाजनकत्वस्य सूचनम् । | ,, |
| *कैश्चित्प्रकल्पितस्य भावसन्धिभावशबलतयोर्मिथो भेदस्य प्रदर्शनम् । | ,, |
| पाञ्चाल्यादिरीतिचतुष्टयस्वरूपनिरूपणम् । | १२५–१२६ |
| *रीतिचतुष्टयोदाहरणप्रदर्शनम् । | १२६ |
| मधुराप्रभृतीनां पञ्चवृत्तीनां सलक्षणोदाहरणं निरूपणम् । | १२६–१२७ |
| *'उपनागरिकादिवृत्तित्रयस्यैव वामनादिभिर्वैदर्भीप्रभृतिनाम्ना सङ्केतितत्वाद्वृत्तयो रीतयश्च न भिन्ना' इति काव्यप्रकाशमतं प्रकाश्य स्वमतेन वृत्तीनां रीतीनां च मिथो भेदस्य प्रदर्शनम् । | १२८ |
| षष्ठमयूखसमाप्तिसूचनम् । | ,, |


सप्तमे मयूखे—


| | |
| --- | --- |
| शक्त्यादिभिस्तिसृभिर्वृत्तिभिर्युक्ताया भारत्याः स्वरूपभेदान्निर्दिश्य व्यञ्जनाव्यापारस्वरूपस्य निर्वचनम् । | १२८ |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| *व्यञ्जनाव्यापारस्यैव शैत्यपावनत्वादिप्रतीतिजनकत्वं शक्त्यादेस्तत्राऽसमर्थत्वं वाच्यार्थव्यङ्ग्यार्थयोर्मिथो भेदकं वैलक्षण्यं च साटोपं निरूप्य व्यञ्जनाव्यापारस्यावश्यकतायाः प्रतिपादनम्। | १२८–१३१ |
| *व्यञ्जनाभेदयोः सप्रपञ्चं सोदाहरणं च निरूपणम्। | १३१–१३२ |
| व्यञ्जनाप्रयोजनभूतानां ध्वनिभेदानां प्रदर्शनम्। | १३२ |
| *ध्वनेरेकपञ्चाशद्भेदान् विशदीकृत्य संसृष्टिसङ्करादिभिस्तेषां परस्परयोजनेन सम्भवतां चतुरधिकचतुःशतोत्तरदशसहस्र( १०४०४ )-भेदानां संसूचनम्। | १३३–१३५ |
| *तैस्तैरुदाहरणैः सर्वेषां ध्वनिभेदानां सविस्तरं निरूपणम्। | १३५–१४६ |
| *ध्वनेर्भेदानामेकपञ्चाशत्त्वं स्फुटीकृत्य संसृष्टिसङ्करोदाहरणप्रदर्शनम्। | १४६–१४७ |
| व्यङ्ग्यस्य द्वयोर्भेदयोर्निरूपणम्। | १४७ |
| *द्विविधव्यङ्ग्यस्वरूपनिर्देशपुरःसरं सोदाहरणं तत्तद्व्यङ्ग्यार्थाविष्करणम्। | ,, |
| व्यङ्ग्यस्य प्रथमे भेदे प्रकारचतुष्टयस्य प्रतिपादनम्। | ,, |
| *चतुर्णामपि व्यङ्ग्यभेदानां तदुदाहरणैः स्फुटीकरणम्। | १४७–१४८ |
| व्यङ्ग्यस्य द्वितीये भेदे प्रकारद्वयस्य प्रतिपादनम्। | १४८ |
| *द्वयोरपि व्यङ्ग्यभेदयोस्तदुदाहरणाभ्यां स्फुटीकरणम्। | ,, |
| *प्रथमव्यङ्ग्यस्य पूर्वप्रदर्शिते भेदचतुष्टयेऽन्येषां मतेन तत्तत्स्वरूपोदाहरणानां निरूपणम्। | १४८–१४९ |
| पूर्वोक्तद्वितीयव्यङ्ग्यद्वितीयभेदस्यानेकरूपतां संसूच्य लक्षणामूलव्यञ्जनाभेदोपसंहारप्रदर्शनम्। | १४९ |
| *द्वितीयव्यङ्ग्यभेदस्यानेकरूपतायां कस्यचित्तत्प्रकारस्योदाहरणेन प्रदर्शनम्। | ,, |
| शक्तिमूलव्यञ्जनायाः ( वाच्यव्यङ्ग्यस्य ) स्वरूपस्य निरूपणम्। | ,, |
| *अनेकार्थस्थले प्रकरणादीनामेकार्थनियामकत्वस्य तत्तदुदाहरणैर्विशदीकरणम्। | १४९–१५० |
| सप्तममयूखसमाप्तिप्रदर्शनम्। | १५० |
| **अष्टमे मयूखे—** | |
| ध्वनिगुणीभूतव्यङ्ग्ययोः स्वरूपे निर्दिश्य गुणीभूतव्यङ्ग्ये त्रैविध्यस्य सूचनम्। | १५१ |
| *ध्वनिगुणीभूतव्यङ्ग्ये ( उत्तममध्यमकाव्ये ) सप्रपञ्चं निरूप्य मध्यमकाव्योदाहरणप्रदर्शनपुरःसरं काव्यप्रकाशोक्तदिशा काव्यस्योत्तममध्यमाधमभेदैस्त्रिविधत्वस्य सूचनम्। | ,, |
| *चण्डीदासमतेन काव्यस्योत्तमाधमभेदाभ्यां द्वैविध्यं संसूच्योत्तमकाव्यभेदोदाहरणप्रदर्शनम्। | १५१–१५३ |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| मध्यमकाव्यभेदस्यागूढव्यङ्ग्यस्य त्रयाणां भेदानां प्रतिपादनम् । | १५२ |
| *काव्यप्रकाशोक्तस्य गुणीभूतव्यङ्ग्यस्वरूपस्य निरूपणम् । | ,, |
| त्रिविधस्यागूढव्यङ्ग्यस्य सोदाहरणं निरूपणम् । | ,, |
| *अगूढव्यङ्ग्योदाहरणप्रदर्शनम् । | १५२–१५३ |
| अपराङ्गव्यङ्ग्यस्वरूपस्य सोदाहरणं निरूपणम् । | १५३ |
| वाच्यसिद्ध्यङ्गव्यङ्ग्यस्वरूपस्य सोदाहरणं निरूपणम् । | ,, |
| *स्वकल्पिते वाच्यसिद्ध्यङ्गरूपगुणीभूतव्यङ्ग्यमध्यमकाव्यभेदोदाहरणे काव्य-प्रकाशादर्शितस्योत्तमकाव्यत्वस्य खण्डनम् । | ,, |
| अस्फुटव्यङ्ग्यस्वरूपस्य सोदाहरणं निरूपणम् । | १५३–१५४ |
| सन्दिग्धव्यङ्ग्य ,, ,, ,, | १५४ |
| तुल्यप्राधान्यव्यङ्ग्य ,, ,, ,, | ,, |
| असुन्दरव्यङ्ग्य ,, ,, ,, | ,, |
| काकाक्षिप्तव्यङ्ग्यस्य ,, ,, | ,, |
| पूर्वोक्तेन प्रकारेण मध्यमकाव्यभेदानामष्टविधत्वस्य सूचनम् । | ,, |
| *ध्वनेरिव गुणीभूतव्यङ्ग्यस्यापि भेदानामनेकत्वस्य संसूचनम् । | १५४–१५५ |
| अष्टममयूखसमाप्तिप्रदर्शनम् । | १५५ |


**नवमे मयूखे—**


| | |
|---|---|
| भेदद्वयप्रदर्शनपूर्वकं लक्षणायाः स्वरूपस्य निरूपणम् । | १५५ |
| *लक्षणाबीजं लाक्षणिकशाब्दबोधं च परिदर्श्य काव्यप्रकाशोक्तलक्षणास्वरूप-निरूपणपुरःसरं लक्षणाया भेदयोः स्फुटीकरणम् । | १५५–१५६ |
| द्विविधाया अपि लक्षणायाः पुनर्भेदानां प्रदर्शनम् । | १५६ |
| *उदाहरणैर्लक्षणाभेदानां निरूपणम् । | ,, |
| प्रयोजनवत्या लक्षणायाश्चातुर्विध्यस्य प्रतिपादनम् । | ,, |
| *तत्तद्भेदप्रभेदोदाहरणप्रदर्शनमुखेन प्रयोजनवतीं लक्षणां सप्रपञ्चं निरूप्य पाठान्तरकल्पनया तस्याः षण्णां भेदानां निरूपणम् । | १५६–१५७ |
| पूर्वोक्तचतुःप्रकाराया लक्षणायाः सोदाहरणं निरूपणम् । | १५७–१५८ |
| लक्षणाबीजभूतानां तत्तत्सम्बन्धानां प्रदर्शनम् । | १५८ |
| *मूलोक्तानां तदितरेषां च लक्षणाबीजभूतसम्बन्धानां तैस्तैरुदाहरणैः स्फुटीकरणम् । | १५८–१५९ |
| प्रयोजनवत्या लक्षणाया भेदचतुष्टयस्य सोदाहरणं प्रकारान्तरेण प्रति-पादनम् । | १५९ |
| *तत्तन्मतसमीक्षापूर्वकं पूर्वोक्तलक्षणाभेदप्रदर्शनम् । | ,, |

| विषयाः | पृष्ठाङ्काः |
| --- | --- |
| प्रयोजनवत्या लक्षणाया भेदयोः शुद्धसारोपसाध्यवसानयोर्भेदद्वयं सोदाहरणं प्रदर्श्य सङ्कलनया लक्षणायाः षाड्विध्यस्य सूचनम् । | १५९–१६० |
| लक्षणायाः पुनर्भेदद्वयस्य सोदाहरणं निरूपणम् । | १६० |
| पुनरपि लक्षणाया भेदद्वयस्य सोदाहरणं निरूपणम् । | ,, |
| शब्दादिषु रसादेर्बीजत्वेनालङ्कारादेरङ्गत्वेन लक्षणाया अवस्थितेः सूचनम् । | ,, |
| *शब्दाद्याश्रयेण स्थिताया लक्षणायाः सोदाहरणं निरूपणम् । | ,, |
| नवममयूखसमाप्तिसूचनम् । | १६०–१६१ |

## दशमे मयूखे—

| | |
| --- | --- |
| अभिधास्वरूपनिरूपणम् । | १६१ |
| *अभिधायास्तत्तन्मतप्रदर्शनेन निरूपणम् । | ,, |
| षड्भिर्जात्यादिशब्दैरभिधायाः षाड्विध्यस्य सोदाहरणं प्रतिपादनम् । | ,, |
| *जात्यादिशब्देषु तत्तच्छक्यतावच्छेदकानां सविस्तरं निरूपणम् । | १६२ |
| निर्देशशब्दस्य वाचकतायाः प्रतिपादनम् । | ,, |
| *'जातौ व्यक्तौ वा शक्ति'रितीदं तत्तन्मतनिरूपणेन निपुणं विचार्य तत्प्रसङ्गेन जात्यादीनामेकद्व्यादिवृद्धिक्रमेण पञ्चकं यावत् प्रातिपदिकार्थत्वस्य सुस्पष्टं प्रतिपादनम् । | १६२–१६४ |
| *'षट्कं प्रातिपदिकार्थः' इतीत्थमालङ्कारिकाणां सिद्धान्तस्य सविस्तरं निरूपणम् । | १६४ |
| *सोदाहरणप्रदर्शनं प्रथमादिविभक्त्यर्थविचारं प्रस्तुत्याव्ययीभावादिसमासचतुष्टयस्वरूपनिरूपणेन तत्र शक्तिलक्षणान्यतरव्यापारेण बोधप्रकारस्य सोदाहरणं प्रदर्शनम् । | १६५–१६६ |
| *दशलकाराणां क्त्वाणमुल्तोसुनप्रभृतीनां च शक्तीनां सप्रपञ्चं विवेचनम् । | १६६–१६८ |
| *शक्तिविचारप्रसङ्गान्महाभाष्यकारमतानुसारं स्फोटस्वरूपनिरूपणं निपुणं प्रस्तुत्यालङ्कारिकसिद्धान्तमनुसृत्य स्फोटैकदेशस्य युक्त्या खण्डनम् । | १६८–१६९ |
| चन्द्रालोकस्य विबुधैराश्रयणीयतायाः प्रतिपादनम् । | १७० |
| ग्रन्थकारेण कृतं स्वरचनायाः प्रशंसनम् । | ,, |
| दशममयूखसमाप्तिसूचनम् । | ,, |
| टीकाकर्तुः स्वग्रन्थविषये मानसोद्गारस्य प्रदर्शनम् । | ,, |

**समाप्ता चेयं विषयानुक्रमणिका ।**

॥ श्रीगणेशाय नमः ॥

# चन्द्रालोकः

## गागाभट्टकृत—राकागम—टीकासहितः ।

अधिसरयू(तटिनी?)तटमधिसाकेताङ्गणमधितदुद्यानम् ।
खेलन् नीरदनीलो बालो मे मानसे सदा भूयात् ॥

अनेकैः क्लेशैर्यन्न परिचितमद्यापि गहनं
परीहासस्तस्मिन्मम भवति यत्नस्य, तदपि ।
यशोदाकौशल्यातनयपदभावाहितमनः-
प्रसादः क्लेशानां फलति फलमत्युत्कटमपि ॥

सूनोर्दिनकरस्यैषा गागाभट्टमनीषिणः ।
चन्द्रालोकस्य विवृतौ कृतिरस्तु सतां मुदे ॥
राकागमेनाऽवदातो रसिकानन्दकारणम् ।
चन्द्रालोकनिबन्धोऽयं चन्द्रालोक इवापरः ॥

विघ्नविघाताय कृतं समुचितेष्टदेवतास्मरणरूपं मङ्गलं शिष्यशिक्षायै व्याख्यातृश्रोतॄणामनुषङ्गतो मङ्गलाय च निबध्नाति—

**उच्चैरस्यति मन्दतामरसतां जाग्रत्कलङ्कैरव-**
**ध्वंसं हस्तयते च या सुमनसामुल्लासिनी मानसे ।**
**दुष्टोद्यन्मदनाशनाचिरमला लोकत्रयीदर्शिका**
**सा नेत्रत्रितयीव खण्डपरशोर्वाग्देवता दीव्यतु ॥ १ ॥**

उच्चैरिति। खण्डपरशोर्महादेवस्य सूर्यचन्द्राग्निरूपनेत्रत्रितयीव वाग्देवता दीव्यतु सर्वोत्कर्षेण वर्ततां क्रीडतां मोदतां वा। नेत्रपक्षे मन्दानि निष्प्रभाणि तामरसानि कमलानि तेषां भावमुच्चैरस्यति दूरीकरोति। कमलनिष्ठां मन्दतां दूरीकरोतीत्यर्थः। सूर्यस्य पद्मविकासकत्वादिति भावः। जाग्रत्यः स्फुरन्त्यः कला यस्मिन्कर्मणि, कैरवध्वंसं कुमुदनाशं हस्तयते। 'हस्तान्निरसने' इति वार्तिकाण्णिच्। निरस्यति दूरीकरोति। चन्द्रस्य तद्विकासकत्वात्। सुमनसां देवानाम्, सकलदेवानां शम्भुपूजकत्वात् अमृतभक्षकत्वाच्च।

दुष्ट उद्यन् मदनः कामस्तमश्नाति तादृशमर्चिः । अग्निरूपनेत्रस्य मदनदाहकत्वात् । वाग्देवतापक्षे मन्दतां मूर्खताम् अरसतां रसाभावमुच्चैरस्यति दूरीकरोति । जाग्रत्कलङ्कैः प्रकटदोषः यो रवध्वंसो वचनाभावस्तमपाकरोति । सुमनसां पण्डितानां दुष्ट उद्यन् यो मदः तन्नाशनेऽर्चिर्ज्वालेव लोकत्रयीदर्शिका त्रिलोकीवर्णनक्षमेति ॥ १ ॥

कीर्तये स्वस्य ग्रन्थस्य नाम निबध्नाति—

हंहो ! चिन्मयचित्तचन्द्रमणयः ! संवर्धयध्वं रसान्
रेरे ! स्वैरिणि ! निर्विचारकविते ! मा स्म प्रकाशीभवः ।
उल्लासाय विचारवीचिनिचयालङ्कारवारांनिधे-
श्चन्द्रालोकमयं स्वयं वितनुते पीयूषवर्षः कृती ॥ २ ॥

हंहो इति । हंहो इति सम्बुद्धौ । चिन्मयाः ज्ञानप्रचुरा ज्ञानरूपा वा, चित्तस्य ज्ञानरूपत्वात्, ज्ञानशालिनो वा, चित्तचन्द्रमणयः मनोरूपचन्द्रकान्ताः ! रसान् नवरसान् जलानि वा संवर्धयध्वं वृद्धिं प्रापयध्वम् । निर्विचारकविते ! स्वैरिणि ! सकलजनसाधारणे ! मा स्म प्रकाशीभवः प्रकटीभवः । 'स्मोत्तरे लङ् चे'ति लङ् । यद्वा 'माऽस्मत्प्रकाशीभवे'ति पाठः । तत्राऽस्मदिति पञ्चमी । अस्मत् अस्मत्तः । स्वकवितायां निर्विचारतायाः स्वभावेनाऽविद्यमानत्वादभूततद्भावे च्विः । यतः, पीयूषवर्षनामा कविः विचाररूपतरङ्गसमुदायो यासां तादृशालङ्कारवारां जलानां निधेः समुद्रस्योल्लासाय वृद्धये चन्द्रालोकनामानं ग्रन्थं वितनुते विस्तारयति । चन्द्रालोके चन्द्रमणीनां क्षरणात् अभिसारिकागत्यभावाच्च ॥ २ ॥

पण्डितप्रवृत्त्यर्थं ग्रन्थप्रयोजनमाह—

युक्त्यास्वाद्यलसद्रसैकवसतिः साहित्यसारस्वत-
क्षीराम्भोधिरगाधतामुपदधत् सेव्यः समाश्रीयताम् ।
श्रीरस्मादुपदेशकौशलमयं पीयूषमस्माज्जग-
ज्जाग्रद्भासुरपद्मकेसरयशःशीतांशुरस्माद् बुधाः ! ॥३॥

युक्त्यास्वाद्येति । युक्तिश्चास्वाद्यलसद्रसश्च तयोरेका वसतिः स्थानम् । अन्यत्राऽलङ्कारग्रन्थे युक्तिर्नास्तीति भावः । यद्वा युक्त्येति तृतीयान्तम्, आस्वाद्येति ल्यबन्तं क्रियान्वितम् । साहित्यसम्बन्धि सारस्वतं वाङ्मयं तदेव क्षीरं तस्य समुद्रः, अगाधतां गाम्भीर्यम् उपदधत् । ग्रन्थान्तरापेक्षयात्र गाम्भीर्यम् । सेव्यः शनैर्गन्तुं पक्षे बोद्धुं योग्यः चर्वणास्वाद्यः समाश्रीयताम्, अध्ययनाध्यापनावलोकनादिना । श्रीरिति । भवतीति सर्वत्राऽध्याहारः । उपदेशकौशलरूपममृतम् । अत्राऽमृतपदेन प्रभुसंमितसुहृत्संमित-कान्तासंमितोपदेशत्रैविध्येऽप्युद्देशद्वयस्य शब्दार्थप्रधानतयाऽऽस्वादाविषयत्वात्कान्ता-संमितोपदेशस्य रसप्रधानतयाऽऽस्वादविषयत्वादमृततुल्यतया तृतीयोपदेशो व्यज्यते ।

जगदेव जाग्रद्विकसितं भासुरं प्रसिद्धं देदीप्यमानं वा पद्मं तस्य केसरं प्रस्तुतत्वेन तद्वत् यशस्तद्रूपः शीतांशुश्चन्द्रोऽप्यस्मात् ग्रन्थात् । तेनार्थोपदेशप्राप्तिफलककाव्यज्ञान-प्रयोजकग्रन्थे प्रवृत्तिः सूचितेति भावः । इदमुपलक्षणम् । व्यवहारज्ञानाऽनर्थनिवृत्ति-परमानन्दप्राप्तिरूपप्रयोजनत्रयमप्यधिकं बोध्यम् ॥ ३ ॥

स्वाभिमानं परिहरति—

तं पूर्वाचार्यसूर्योक्तिज्योतिःस्तोमोद्गमं स्तुमः ।
यं संश्रित्य प्रकाशन्ते मद्गुणत्रसरेणवः ॥ ४ ॥

तमिति । पूर्वाचार्याणां सूर्यस्थानीयत्वेन तदुक्तेर्दीप्तिस्थानीयत्वम् । संज्ञात्वा-ऽभावान्न षत्वम् । पूर्वोक्त्यवलोकनाभ्यासेनैव मम सामर्थ्यमिति भावः ॥ ४ ॥

नाशङ्कनीयं पूर्वेषां मतमेतेन दूष्यते ।
किन्तु चक्षुर्मृगाक्षीणां कज्जलेनैव भूष्यते ॥ ५ ॥

नेति । मलिनवदाभासमानाया अपि स्वोक्तेर्जीर्णोक्तिपरिष्कारकत्वेनोपादेयतोक्ता ५ ॥

काव्ये कारणमाह—

प्रतिभैव श्रुताभ्याससहिता कवितां प्रति ।
हेतुर्मृदम्बुसम्बद्धा बीजपङ्क्तिर्लतामिव ॥ ६ ॥

प्रतिभेति । श्रुतं शास्त्रं विद्यास्थानं पुराणादि आयुर्वेदादि उपवेदचतुष्कं च तस्या-ऽभ्यासस्तत्पठनपाठनाऽवेक्षणपौनःपुन्यं तत्सहिता प्रतिभा बुद्धिविशेष एव कवितां प्रति कवित्वविशेषं प्रति हेतुः कारणम् । मृदम्बुभ्यां सम्बद्धा बीजपङ्क्तिर्लतां प्रति यथा हेतुरित्यर्थः । 'बीजस्य फलतामिवे'ति क्वचित्पाठः । तत्र बीजस्य फलतां फल-रूपताम् अङ्कुरितरूपतां प्रति जलेन सम्बद्धा मृदिवेत्यर्थः । शास्त्रपदं चालङ्कारिकव्यव-हारगजतुरगखड्गादिलक्षणग्रन्थानामुपलक्षणम् । यदि च तादृशप्रतिभाऽभावेऽपि काव्य-कर्तृत्वानुभवस्तदा काव्यविशेषेऽदृष्टस्य कारणताऽस्तु । न तु सर्वत्र काव्ये, मानाभावात् अदृष्टकल्पनागौरवाच्च । न च सत्यां तादृशप्रतिभायां काव्याऽनुत्पत्तिः कथमिति वाच्यम् । इच्छादिरूपकारणान्तराभावेन तदुपपत्तेः । एवं च विजातीयकाव्येऽदृष्टस्य कारणता, अविजातीयकाव्ये प्रतिभायाः । अतः 'तृणारणिमणि'न्यायेन हेतुत्वान्न व्यभिचारः । न च काव्यत्वस्य कार्यमात्रवृत्तितया कार्यतावच्छेदकत्वेन तदवच्छिन्नं प्रत्यदृष्टस्य कारणताऽस्त्विति वाच्यम् । तादृशनियमे मानाभावात् । अस्तु वा इच्छात्वेन हेतुतेति दिक् । एतेन काव्यमात्रे दृष्टस्य कारणता, अदृष्टाभ्यासप्रतिभानां च 'दण्डचक्रा'दिन्यायेन (१) कारणतेति काव्यप्रकाशोक्तिः (?) परास्ता ॥ ६ ॥

(१) काव्यमात्रेऽदृष्टाभ्यासबुद्धिप्रतिभादीनां 'चक्रदण्डचीवरा'दिन्यायेन—इति क ।

काव्यस्वरूपमाह—

निर्दोषा लक्षणवती सरीतिर्गुणभूषणा ।
सालङ्काररसाऽनेकवृत्तिर्वाक् काव्यनामभाक् ॥ ७ ॥

निर्दोषेति । दोषाः शाब्दबोधरसाऽवबोधप्रतिबन्धकाः च्युतसंस्कृतिक्लिष्टप्रतिकूलवर्णत्वादयः, तदभावो विवक्षितो न दोषसामान्याभावः । केषाञ्चिद्दोषाणां काव्यापकर्षकत्वेऽपि काव्यत्वविघातकत्वाभावात् । अत एव—

कृतमनुमतं दृष्टं वा यैरिदं गुरु पातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥

इत्यादिषु पुनरुक्तदोषेऽपि रौद्ररसध्वनिरिति केचित् । अन्ये तु—एकत्रैव पद्ये दोषवदवयवावच्छेदेनाऽकाव्यत्वम् अन्यावच्छेदेन काव्यत्वमित्याहुः । अक्षरसंहतिशोभादिवक्ष्यमाणलक्षणानि । पाञ्चाली गौडी वैदर्भीति रीतयः । श्लेषप्रसादादयो गुणाः । 'एते च शब्दधर्मा' इति केचित् । रसभावतदाभासभावशान्तिभावोदयभावसन्धिभावशबलत्वादिधर्मा एवैते । 'गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता ।' इति काव्यप्रकाशः । उपमादयोऽलङ्काराः । शृङ्गारादयो रसाः । इदं च भावानामुपलक्षणम् । तेन 'अद्रावत्र प्रज्वलत्यग्निरुच्च'रित्यादौ न काव्यत्वम् । मधुरा प्रौढा परुषा ललिता भद्रेति वृत्तयः । शक्तिलक्षणाव्यञ्जनारूपवृत्तित्रयं च । तद्युक्ता वाक् शब्दः स काव्यमित्यर्थः । तेन विशिष्टशब्दनिष्ठमेव काव्यत्वम् । 'काव्यं करोती'ति प्रयोगस्य तत्रैव दर्शनात् । केचित्तु—यत्र शाब्दी व्यञ्जना शब्दालङ्कारो वा तत्र शब्दशक्तिमूलेऽर्थस्य विशेषणत्वेनार्थविशिष्टशब्दस्य, यत्राऽऽर्थी व्यञ्जनार्थालङ्कारो वा तत्र शब्दविशिष्टार्थस्य काव्यत्वम् । अत उभयनिष्ठं काव्यत्वमित्याहुः । अन्ये तु—व्यासज्यवृत्ति काव्यत्वम् । व्यासज्यवृत्तिधर्मज्ञाने यावदाश्रयविषयकज्ञानस्य हेतुतया अर्थाऽविषयकज्ञानेनापि तद्ग्रहसम्भवात् संयोगप्रत्यक्षे यावदाश्रयगुणप्रत्यक्षे वा तस्य हेतुत्वादित्याहुः । केचित्तु—भाषाश्लोकादौ च्युतसंस्कृतित्वादिदोषसत्त्वेन निर्दोषत्वाभावेऽपि काव्यपदप्रयोगान्निर्दोषादिकमपि न विशेषणम्, किन्तूपलक्षणमित्याहुः ॥ ७ ॥

प्राचीनोक्तिमुपहासेन दूषयति—

अङ्गीकरोति यः काव्यं शब्दार्थावनलङ्कृती ।
असौ न मन्यते कस्मादनुष्णमनलं कृती ॥ ८ ॥

अङ्गीकरोतीति । अलङ्काररहितयोः शब्दार्थयोः काव्यत्वाङ्गीकारे औष्ण्यरहितस्याऽप्यग्नित्वाङ्गीकारो युक्तः स्यादित्युपहासार्थः । अलङ्कारादिसमनियतमेव काव्यत्वमिति भावः ।

य: कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।
सा चैवास्मि, तथापि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ।

इत्यादौ विभावनादयोऽर्थालङ्कारा 'हरो वर' इत्यादौ शब्दालङ्काराश्च स्फुटा एव । अलङ्कारव्यञ्जकेऽप्यलङ्कारस्य स्फुटत्वमेव । तेनालङ्काररहितस्य न काव्यत्वमिति भावः । केचित्तु—श्रवणमात्रद्वारा सुखविशेषसाधनं वाक्यं काव्यम् । अदृष्टद्वारकसुखसाधनवेदवाक्यवारणाय श्रवणमात्रद्वारेति । तेन रसालङ्कारादिरहितेऽपि काव्यत्वमस्त्येवेत्याहुः ॥ ८ ॥

काव्यस्वरूपस्य वाक्यनिष्ठत्वेन तद्घटकशब्दभेदानाह—

**विभक्त्युत्पत्तये योग्यः शास्त्रीयः शब्द इष्यते ।**
**रूढयौगिकतन्मिश्रैः प्रभेदैः स पुनस्त्रिधा ॥ ९ ॥**

विभक्तीति । सुप्तिङ्प्रत्ययोत्पत्तियोग्यः प्रकृतिभागः शास्त्रीयः साधुः शब्दः । स त्रेधा, रूढो यौगिको योगरूढश्च । समुदायशक्त्यार्थप्रत्यायको रूढः । अवयवशक्त्यार्थप्रत्यायको यौगिकः । अवयवशक्त्या समुदायशक्त्या चार्थप्रत्यायको योगरूढः । एतेन-'सर्वे शब्दा यौगिका' इत्यपास्तम् । योगस्याऽनुपलभ्यमानत्वात् । यथाकथञ्चिद्योगकल्पनेऽपि तज्ज्ञानं विनैवार्थप्रतीतेः कृतं योगेन । यत्तु—सर्वेषां यौगिकत्वे 'कृत्तद्धितसमासाश्चे'त्यनेनैव सर्वेषां प्रातिपदिकसंज्ञासिद्धौ 'अर्थवदधातुरप्रत्ययः प्रातिपदिक'मितिसूत्रारम्भानुपपत्तिरिति, तन्न । पूर्वनिपातितेषदसमाप्त्यर्थकबहुच्प्रत्यययुक्तबहुपटुशब्दस्य प्रातिपदिकसंज्ञार्थतया तत्सार्थक्यात् । तत्र तद्धितान्तत्वाभावेन तत्संज्ञायाः कृत्तद्धितसूत्रेणाऽलाभात् । तद्धितयोगमात्रविवक्षायां 'पचतकी'त्यत्राऽकच्प्रत्यययुक्तेऽपि तदापत्तेः । केचित्तु-अर्थवत्सूत्रेण समासादीनामपि प्रातिपदिकसंज्ञासिद्धावनर्थकसमासानां शशशृङ्गखपुष्पादीनां प्रातिपदिकसंज्ञासिद्ध्यर्थं कृत्तद्धितसूत्रमित्याहुः । अन्ये तु-अर्थवत्सूत्रेण वाक्यसमासयोरपि संज्ञाप्राप्तौ कृत्सूत्रेण समासेषु पुनः संज्ञाकरणं वाक्यपरिसंख्यार्थमित्याहुः । एतेनैव-'सर्वे सर्वार्थवाचका' इत्यपास्तम् । सर्वत्र रूढिर्योगो वा न सम्भवतीति वृत्त्यभावेन सर्वार्थवाचकत्वासम्भवात् । बोधकत्वं चेल्लाक्षणिकादिसाधारणं न कस्याप्यनिष्टमिति दिक् ॥ ९ ॥

रूढस्य भेदत्रयमाह—

**अव्यक्तयोगनिर्योगयोगाभासैस्त्रिधाऽऽदिमः ।**
**ते च वृक्षादिभूवादिमण्डपाद्या यथाक्रमम् ॥ १० ॥**

अव्यक्तयोगेति । सम्भवदवयवार्थानुसन्धानेऽपि समुदायशक्त्यार्थप्रत्यायकत्वमव्यक्तयोगत्वम्, अवयवार्थाभावो निर्योगत्वम्, तात्पर्यविषयेऽनन्विताववयवार्थत्वं

योगाभासत्वमित्यर्थः । उदाहरणान्याह–ते चेति । वृक्षे 'वृक्षत्यातप'मिति विद्यमान-योगप्रतीत्यैव वृक्षत्वजातिप्रतीतेः । तेनावयवार्थाऽननुसन्धाने समुदायशक्त्यार्थप्रत्यायकत्वम् । तात्पर्यविषयेऽर्थे असम्भवद्योगो नियोगः । भूसत्तायां भूधातुः, गतिवाचको वाधातुः, आदिपदाद्विभक्त्युपसर्गनिपाताः । तात्पर्यविषयेऽनन्वितावयवार्थो योगाभासः । गृहरूपेऽर्थे मण्डपानरूपार्थानन्वयात् ॥ १० ॥

शुद्धतन्मूलसंभिन्नप्रभेदैर्यौगिकस्त्रिधा ॥

ते च भ्रान्तिस्फुरत्कान्तिकौन्तेयादिस्वरूपिणः ॥ ११ ॥

शुद्धेति । प्रकृतिप्रत्यययोगेनार्थप्रत्यायकः शुद्धयौगिकः, तादृशयौगिकयोर्योगेन समासेनार्थप्रत्यायको यौगिकमूलयौगिकः, यौगिकायौगिकयोर्योगेनार्थप्रत्यायकः संभिन्नयौगिक इत्यर्थः । उदाहरणान्याह–ते चेति । यथा–भ्रान्तिः पाचक इत्यादिशब्दाः । 'भ्रमु चलन' इति धातोर्गमनाऽयथार्थज्ञानवाचित्वेऽपि केवलप्रकृतेस्तदर्थबोधाभावेन प्रकृतिप्रत्यययोगादेवाऽयथार्थज्ञानगत्योर्बोधात् । स्फुरत्कान्तिपदावयवशत्रन्त'स्फुर'धातुस्त्रीत्वार्थक्तिन्प्रत्ययान्तकान्त्यर्थ'कमु'धातुनिष्पन्नयोः स्फुरत्पदकान्तिपदयोः शुद्धयौगिकयोः समासेन तत्सम्बन्ध्यर्थप्रत्यायकत्वम् । देशवाचिनो हृस्वस्य स्त्रीत्ववाचकङीष्प्रत्ययान्तत्वेन यौगिकस्य कुन्तीशब्दस्याऽयौगिकापत्यार्थतद्धितस्य च योगेन निष्पन्नस्य कौन्तेयपदस्याऽर्जुनादिप्रत्यायकत्वम् ॥ ११ ॥

योगरूढमाह–

तन्मिश्रोऽन्योन्यसामान्यविशेषपरिवर्तनात् ।

नीरधिः पङ्कजं सौधं सागरो भूरुहः शशी ॥ १२ ॥

क्षीरनीरधिराकाशपङ्कजं तेन सिध्यति ।

तन्मिश्र इति । अन्यौ भिन्नौ सामान्यविशेषौ तयोः परिवर्तनमुपस्थितिरित्यर्थः । अन्योन्ययोर्मिलितयोः सामान्यविशेषयोरिति वा । नीरध्यादिपदात् जलाधिष्ठानत्व-पङ्कजनिकर्तृत्व-सुधानिर्मितत्व-भूजातत्व-शशधरत्वसामान्येन समुद्रत्व-कमलत्व-गृहत्व-समुद्रत्व-वृक्षत्व-चन्द्रत्वादिविशेषरूपेणाऽप्युपस्थितेरानुभविकत्वात् । शक्यतावच्छेदकोभयप्रकारकोपस्थितये योगरूढिकल्पनमित्याशयः । तस्य फलं 'क्षीरनीरधि'रित्यादिव्यवहारः । एतदन्तर्गतनीरधिपदस्य समुद्रत्वविशेषरूपेणाऽनुपस्थापकत्वे जलाधिष्ठानत्वेनोपस्थापकत्वे क्षीरेत्यस्यानन्वयापत्तिः । एवं सागरपदस्यापि सगरनिर्मितत्वसामान्यपरत्वे 'क्षीरसागर' इत्यत्र क्षीरपदानन्वयः । अतस्तदन्वयार्थं समुद्रत्वविशेषरूपेणोपस्थितिः । एवं 'हरभूरुह' इत्यत्र भूरुहपदस्य 'निष्कलङ्कः शशधर' इत्यत्र शशधरपदस्य वृक्षचन्द्ररूपविशेषपरत्वम् । एवम् 'आकाशपङ्कज'पदस्य कमलत्वरूपेणोपस्थापकत्वम्, आकाशसम्बन्धमात्रेण च तत्र प्रयोगः । एवं 'स्वर्णपङ्कजं' 'कलधौतसौध' इत्यत्रापि बोध्यम् । एवं 'नीरधिः कूप' इत्यादौ विशेषरूपत्यागेन सामान्यमात्रपरत्वम् । यद्यपि सामान्य-

विशेषमात्रपरत्वेऽन्यतरधर्मत्यागेनैकदेशे लक्षणा योगरूढाङ्गीकारेऽपि तुल्या, तथापि शक्यतावच्छेदकाऽननुप्रविष्टधर्मेण लक्षणापेक्षया तदनुप्रविष्टधर्मेण लक्षणा लघीयसी । लाघवं च तेन रूपेणान्वयमात्रकल्पनं न तु स्मरणमपीति हृदयम् । एवं च सामान्यविशेषरूपयोरन्योन्यत्याग इत्यपि बोध्यम् । एतेन पङ्कजादिपदानामपि यौगिकत्वमेव । पङ्कजपदादवयवशक्त्या पङ्कजनिकर्तृत्वमात्रप्रकारकबोधेन पद्मत्वप्रकारकबोधाभावात् । न चैवं पङ्कजपदात्कुमुदभेकादिविशेष्यकपङ्कजनिकर्तृत्वप्रकारकबोधापत्तिरिति वाच्यम् । पूर्वतरप्रयोगत्वप्रकारकज्ञानस्य पद्मविशेष्यककर्मपूर्वतरप्रयोगत्वप्रकारकज्ञानस्य वा तत्पदजन्यशाब्दबोधे हेतुत्वाङ्गीकारात् । यद्वा पङ्कजनिकर्तृत्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन पङ्कजपदावयवशक्तिग्रहजन्यशाब्दबोधं प्रति समवायसम्बन्धेन पद्मत्वस्य पद्ममात्रवृत्तिविषयतासम्बन्धेन ज्ञानस्यैव वा हेतुत्वाङ्गीकारान्नोक्ताऽतिप्रसङ्गो न वा भाविविनष्टपद्मबोधानुपपत्तिः । एवं च सत्यपि, यदि क्वचित्पद्मान्यविशेष्यकोऽपि बोधो यदि वा पद्मत्वप्रकारकबोधोऽप्यानुभविकस्तदा तत्र लक्षणयैवोपपादनीय इत्युदयनाचार्योक्तिरपास्ता । अतो वृत्त्यन्तरमेव युक्तम् । केचित्तु—योगेन रूढ्या चार्थद्वयप्रत्यायको यौगिकरूढः । यथा मण्डपशब्दो योगेन मण्डपानकर्तृप्रत्यायको रूढ्या च गृहप्रत्यायक इति पदचातुर्विध्यमाहुः । तत्तु वृत्तिभेदपूर्वकार्थभेदेन पदभेदाङ्गीकारात् 'सुवर्णस्य सुवर्णस्ये'त्यादिप्रयोगदर्शनात् 'सकलकल'मितिवत्सकृत् प्रयुक्तस्य तादृशपदान्तरस्मरणेनार्थान्तरप्रत्यायकत्वादुपेक्षितम् ॥ १२ ॥

पदवाक्ये लक्षयति—

**विभक्त्यन्तं पदं वाक्यं तद्व्यूहोऽर्थसमाप्तितः ॥ १३ ॥**
**युक्तार्थानां तां च विना खण्डवाक्यं स इष्यते ।**

विभक्त्यन्तमिति । साधु पदमित्यर्थः । पद्यते गम्यतेऽर्थोऽनेनेति व्युत्पत्तेः । साधुत्वं चाऽनादिवृत्तिप्रमाप्रयोज्यार्थप्रतिपादकत्वम् । तेन भाषाशब्देऽनादिशक्त्यभावाच्छक्यार्थाभावेन लक्षणाप्रमासम्भवान्न साधुत्वम्, लाक्षणिकगङ्गादिपदे च न क्षतिः । आधुनिकसङ्केतितडित्थादिपदेषु पाणिनिसङ्केतितवृद्ध्यादिपदेषु च 'पिता नाम कुर्या'दिति विधिना पुत्रत्वनामत्वोपाधिना व्याकृता वाक् इत्यद्यते इति विधिना व्याकरणोपाधिना चाऽनादिवृत्तिप्रमासम्भवात्साधुत्वम् । वृत्तिभ्रमेणार्थप्रत्यायकत्वमसाधुत्वम् । यथा भाषाशब्दानामिति केचित् । राणकस्तु पौरुषेयसङ्केतविरहविशिष्टत्वं साधुत्वम्, व्याकरणसङ्केतितानामसाधुत्वमिष्टमेवेत्याह । वाक्यमिति । तेषां पदानां व्यूहः समूहः अर्थसमाप्तितः, समाप्तार्थनिराकाङ्क्ष इति यावत् । तेन विशिष्टैकार्थप्रतिपादकनिराकाङ्क्षपदसमूहो वाक्यमिति फलितम् । एकार्थत्वं च भिन्नप्रतीतिविषयानेकमुख्यविशेष्यराहित्यम् । तेनाख्यातभेदेऽप्येकाख्यातार्थभावनादेरपराख्यातार्थे प्रकारता । यथा 'यो घटस्तिष्ठति तमानय' 'पश्य मृगो धावति' इत्यादौ, तत्रैकैकवाक्यत्वम् ।

एतेन 'सुप्तिङ्चयो वाक्य'मिति लक्षणमपास्तम् । खण्डवाक्यं लक्षयति-युक्तार्थाना-मिति । सम्बद्धार्थप्रतिपादकानाम् । तां च विनेति । अर्थसमाप्तिं विनेत्यर्थः । यथा 'यो गौरस्ति तमाहरे'त्यादिराकाङ्क्षाविशिष्टार्थबोधकपदसमूहः खण्डवाक्यमित्याशयः। आकाङ्क्षा च तद्व्यतिरेकप्रयुक्तान्वयाऽननुभावकत्वरूपा । इदमुपलक्षणं योग्यताऽऽस-त्त्योः। योग्यता चैकपदार्थसंसर्गेऽपरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वाभावः । अव्य-वधानेनान्वयप्रतियोग्युपस्थितिरासत्तिः । अन्वयप्रतियोग्युपस्थापकपदाव्यवधानं वाऽऽसत्तिः । तेनैकपदोपस्थाप्ययोर्नासत्तिः । एकपदोपस्थित्यव्यवधानेनापरपदो-पस्थितिर्जायतामिति तात्पर्यमासत्तिः । अनयैव योजनया ईदृशतात्पर्यज्ञानादन्वय-बोधः । वक्त्रभिप्रायविरोधान्यत्वं च तात्पर्यविशेषणम् । तेन 'नीलो घटो द्रव्यं पट' इत्यादौ यत्र वक्तुर्नीलपदघटपदयोर्व्यवधाने तात्पर्यं श्रोतुस्तु नीलघटपदयोस्तद्ग्रहाद् बोधस्तत्रेश्वरतात्पर्येण तात्पर्यभ्रमेण वा बोधः । शुकवाक्येऽप्येवम् । वाक्ययोरेक-वाक्यतास्थले आन्तरालिकपदार्थोपस्थितेर्न व्यवधायकत्वमिति मिश्राः । तत्राकाङ्क्षा-योग्यतयोर्ज्ञानं कारणम्, आसत्तिश्च स्वरूपसती कारणमिति जीर्णाः, नव्यनैया-यिकमीमांसकाश्च—'न योग्यताज्ञानस्य कारणता, किन्तु 'वह्निना सिञ्चे'दित्यादौ बोधादर्शनेनाऽयोग्यतानिश्चयः प्रतिबन्धकः । स चानुमित्यादिसाधारण्येनैव क्लृप्तप्रति-बन्धकीभूतबाधज्ञानत्वादिनैव शाब्दबोधेऽपि प्रतिबन्धकः, न तु भिन्नप्रतिबन्धकः । तेन न 'वह्निने'त्यादौ बोधः । किञ्च योग्यतायाः सर्वत्रैक्यासम्भवाद्विशिष्य हेतुहेतुम-द्भावावश्यकत्वेन 'वह्निने'त्यादौ तादृशशाब्दबोधाप्रसिद्ध्या हेतुत्वकल्पना न सम्भ-वति । अतो न योग्यताज्ञानं कारणं किन्त्वयोग्यतानिश्चयः प्रतिबन्धक इत्याहुः । आलङ्कारिकास्त्वाहुः— न शाब्दबोधे योग्यताज्ञानं हेतुर्नाप्ययोग्यतानिश्चयः प्रति-बन्धकः । तदभावे तत्सत्त्वेऽपि 'चन्द्रो मुख'मित्यादिरूपकादिबोधोदयात् । 'एष वन्ध्या-सुतो याति खपुष्पकृतशेखर' इत्यादिश्लोकार्थबोधेन चमत्कारातिशयानुभवाच्च । न च तत्र पदार्थस्मरणमात्रं न शाब्दबोध इति वाच्यम् । 'घटमानये'त्यादावपि तथा वक्तुं शक्यतया शाब्दबोधमात्रोच्छेदापत्तेः । किन्तु बाधनिश्चयस्य शाब्दान्यत्वमेव प्रति-बध्यम् । न चैवं प्रवृत्त्याद्यापत्तिः । प्राक्तनबाधेनाऽप्रामाण्यशङ्काया एव जायमानज्ञाने जननादप्रामाण्यशङ्काशून्यज्ञानस्य प्रवृत्तिं प्रति हेतुतया तदभावेन प्रवृत्त्यापादना-सम्भवात् । तदुक्तं खण्डने—'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः शब्दः करोति हि' इति । वस्तुतस्तु 'चन्द्रो मुख'मित्यादिवाक्येन पामराणां बोधानुदयादालङ्कारिकाणा-मेव बोधोदयाच्चमत्कारविशेषोदयाच्च वासनाविशेष एवोत्तेजको वाच्यः । एवं चोत्तेजका-भावविशिष्टबाधनिश्चयाभावस्य हेतुत्वं न युक्तमुत्पश्यामः । अत्र वाक्याद्वाक्यार्थबोधो-दयादयं क्रमः । क्रमिकोच्चारितपदजन्यपदार्थोपस्थित्युत्तरं सर्वेषां पदानां समूहालम्बन-रूपा मानसोपस्थितिः । तज्जन्यसमूहालम्बनरूपपदार्थोपस्थितौ तेषां संसर्गरूप-वाक्यार्थज्ञानम् । अन्यथोत्तरपदार्थोपस्थित्या पूर्वपदार्थोपस्थितिनाशाच्छाब्दबोधो न

स्यात् । न च पदसमूहालम्बनं विनार्थोपस्थितिरेव कल्प्यतामिति वाच्यम् । तस्याः पदजन्यत्वाभावे क्लृप्तकार्यकारणभावबाधापत्तेः । अतः पदसमूहालम्बनमावश्यकमिति केचित् । कारणत्वस्याऽनन्यथासिद्धिगर्भतया प्रयोजकत्वापेक्षया गुरुत्वात्पदप्रयोज्य-पदार्थोपस्थितेरेव हेतुत्वं युक्तम् । तेन पदसमूहालम्बनं नावश्यकमित्यन्ये । एवं च 'खले कपोत'न्यायेनान्वयबोधः । तदुक्तम्—

वृद्धा युवानः शिशवः कपोताः खले यथामी युगपत्पतन्ति ।
तथैव सर्वे युगपत्पदार्थाः परस्परेणान्वयिनो भवन्ति ॥

कचित्तु राजपुरप्रवेशन्यायेनान्वयबोधः । तत्र 'दण्डी कुण्डली छत्री चैत्र' इत्यादौ विशिष्टस्य वैशिष्ट्यबोधे तात्पर्यम् । तदुक्तम्—

यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते ।
तेन तेनान्वितः स्वार्थः पदैरेवावगम्यते ॥

एवं खण्डवाक्यार्थबोधोत्तरं महावाक्यार्थबोधेऽपीति सम्प्रदायः । खण्डवाक्यार्थ-बोधोत्तरं चरमपदस्मृतिस्ततस्तदर्थस्मृतिः । तत्रार्थस्मृतिकाले खण्डवाक्यार्थबोधनाशा-च्चरमपदस्मृतिरेव तावत्पदविषयिणी, चरमार्थस्मृतिस्तावदर्थविषयिणी । ततोऽन्वयबोध इति । तत्रापि 'खले कपोत'न्यायेनैव बोध इति नव्याः । तत्र चत्वारः पक्षाः । वा-क्यस्य संसर्गरूपे वाक्यार्थे शक्तिरिति स्फोटवादिनो वैयाकरणाः । तथाहि–'भवति भूयात् बभूव रामः राम'मित्यादौ श्रूयमाणतिकारविसर्गादीनां वाचकता, न तु भूधातु-लकारसुबाद्युपस्थापनद्वाराऽर्थप्रत्यायकत्वम् । आदेशिनां वाचकत्वकल्पने आदेशानां तदुपस्थापकत्वकल्पने गौरवात् । व्याकरणभेदेनाऽऽदेशिनामननुगमाच्च । अन्यथा 'ऋषभो वृषभो वृष' इत्यादावन्यतरेणान्यतरस्मरणेनैकत्रैव शक्त्यापत्तेः । अतः श्रूय-माणानुपूर्वीविशिष्टवर्णवाचकाः, न तु धात्वाद्युपस्थापका इति वर्णस्फोटः । एवं 'हरिणा हरये रामात् हरे'रित्यादौ पदैकदेशविभागाभावात्कस्यचिदंशस्य द्रव्यवाच कत्वं कस्यचित्करणत्वादिवाचकतेति निर्णेतुमशक्यत्वात् करणत्वादिविशिष्टहरिवाचितेति पदस्फोटः । एवं 'कृष्णेहि रक्षैन'मित्यादौ वाक्येऽपि विभागाभावादेकारघटितानु-पूर्वीकल्पागमनवाचकस्यात्र सत्त्वे मानाभावाद्वाक्यस्यैव विशिष्टार्थे शक्तिरिति वाक्य-स्फोटः । स द्विविधः, सखण्डवाक्यस्फोटोऽखण्डवाक्यस्फोटश्च । आद्यो द्विविधः, पदरूपखण्डवाक्यस्फोटः वर्णरूपखण्डवाक्यस्फोटश्च । तथा हि–'विष्णोऽवे'त्यादिवाक्येषु आकाङ्क्षादिसहकृततत्तत्पदस्मारितपदार्थानां संसर्गरूपवाक्यार्थावगमेऽपि तस्य शाब्दत्व-सिद्धये वाक्यस्य शक्तिः कल्प्यते । स एव वाक्यस्फोटः । स चाज्ञाते स्वरूपेण हेतुः । अन्वितशक्तिवादिमतेऽन्वयांशे शक्तिवत् हरिद्रावाक्य इवान्वयावगमाद्व्यवहित-पूर्ववर्तिक्षणे तदवगमो वा कल्प्यते । यद्वा 'हरेऽवे'त्यादौ पदविभागानिर्णयाद्वर्णत्रया-त्मकवाक्यस्य सम्बोध्यहरिकर्तृकरक्षणे शक्तिरूपस्फोटः । तदा वर्णरूपः खण्डः न पद-रूपः । अस्याश्च व्यवहारकाले ग्रहः । न चवं वाक्यस्य पदवत्स्मारकत्वापत्तिः, अनुभव-

त्वस्य प्रत्यक्षमात्रवृत्तितयेष्टत्वात्। यथार्थज्ञानजनकत्वस्यैव प्रमाणत्वात्। आकाङ्क्षादिसहकारिपदार्थस्मरणजन्यार्थगमकत्वस्यैवानधिगतार्थगन्तृताया वा प्रामाण्यविघातः। यद्वा वाक्ये बोधकत्वातिरिक्तसम्बन्धो न शक्तिः, मानाभावात्। हस्तिपकादौ तु तस्य मानान्तरगम्यत्वाद् युक्तं तेन तत्स्मरणम्। अतो न स्मारकत्वापत्तिलेशोऽपि। एवं चाकाङ्क्षादिज्ञानस्य हेतुत्वाभावात्तात्पर्यज्ञानस्यैव हेतुतया कार्यकारणभावकल्पनालाघवम्। यद्वा 'घटमानये'त्यादिवाक्येषु ध्वनिधर्मैस्तारत्वमन्दत्वादिभिरिव घटत्वादिध्वनिधर्मैरेव एकः शब्दो वर्णरूपोऽभिव्यज्यते। स एव वाक्यस्फोटः। एवं पदस्फोटेऽपि द्वैविध्यमुन्नेयम्। एवं च-एकं पदम् एकं वाक्यं महत्पदं महद्वाक्यं शब्दात्प्रत्येमीत्यनुभवोपपत्तिः। वर्णानामनेकत्वेन महत्त्वाभावेन च तदनुपपत्तेरिति। तन्न। विसर्गादिनिष्ठनानाशक्तिकल्पनमपेक्ष्यादेशिनिष्ठशक्तिकल्पनस्यैव लघुत्वात्। न च व्याकरणभेदेनाऽऽदेशिनामप्यननुगतत्वादनन्तशक्तिकल्पनापत्तिरिति वाच्यम्। परिगणितव्याकरणबोधितादेशिनिष्ठशक्तिकल्पनातो विसर्गादिव्यक्तीनामनन्ततया तन्निष्ठशक्तिकल्पनस्य गुरुत्वात्। न च विसर्गत्वादिजातिस्फोटकल्पनया तत्परिहारः। तथापि 'रामः गङ्गा नदी वनं धुक् फले फलानि' इत्यादौ विसर्गत्वादिजातिषु शक्तिकल्पनमपेक्ष्यादेशिनिष्ठशक्तिकल्पनस्य लघुत्वात्। न चाधीतव्याकरणत्रयस्य स्मरणाननुगमः। अभ्यासरूपोद्बोधकस्यैवानुगमकत्वात्। न च बोधकत्वातिरिक्ता न शक्तिः येन तत्कल्पने गौरवं स्यादिति वाच्यम्। घटपदादपि पटबोधापत्तेः। मम तु शक्तिरूपसम्बन्धाभावान्नान्वयबोध इति वैषम्यम्। सम्बन्धाभावस्तु बोधरूपकार्याभावेनाऽनुमेयः। तस्मान्न वर्णस्फोटः। धातुप्रत्ययानभिज्ञस्य 'ऐयरु'रित्यादौ बोधापत्तेश्च। पदानां निरवयवत्वम् 'ऐयरु'रित्यादावर्थानवबोधेन प्रकृतप्रत्ययविभागप्रदर्शनेन तदर्थबोधानुभवेन च विरुद्धम्। एवं वाक्यस्य निरवयवत्वमपि पठ्यमानश्लोकार्थानवबोधेन पदप्रदर्शनजन्यश्लोकार्थानुभवेन च विरुद्धम्। संख्यापरिमाणप्रतीतिश्च 'एको महान् धान्यराशि'रितिवदुपपन्नेति दिक्।

प्राभाकरास्तु—कार्यान्विते पदानां शक्तिः। तथा पदेषु स्मारिकानुभाविकी चेति शक्तिद्वयम्। तत्र स्मारिका जातौ, आनुभाविकी कार्यान्विते। एवं च घटादिपदानि घटत्वादिजातिस्मरणद्वारा घटादेः कार्यान्वयानुभवजनकानि। तथा हि— सर्वत्र व्यवहारेणैव शक्तिग्रहः। प्रयोज्यः प्रयोजकवृद्धस्य वाक्यश्रवणानन्तरं गोकर्मकानयनचेष्टया ताद्दशकृतीच्छानुमानद्वारा स्वप्रवृत्तौ कार्यताज्ञानस्य हेतुत्वदर्शनात्कार्यताज्ञानमनुमाय वाक्यस्य कार्यताज्ञानहेतुत्वमवधार्य तस्याः सति वृत्त्यन्तरे तदर्थशक्तिं विनाऽनुपपन्नतया कार्यान्विते आनुभाविकीं शक्तिमवधारयति। कार्यं चापूर्वमेवेति। यत्र कार्यवाचकपदाभावस्तत्र न वाक्यार्थबोधः। लिङादियुक्तलौकिकवाक्यस्य लक्षणया आनयनादिरूपकार्यान्वितगोरूपार्थं (वाक्यस्य ?) शक्तिमवधार्य आवापोद्वापाभ्यां गवादिपदस्य गोत्वादौ शक्तिमवधारयन्नाद्यव्युत्पत्तिगृहीतान्वयांशे शक्तिमत्यजन्नानयना-

घन्वित एव शक्तिमवधारयति । एवं चान्वयेऽपि शक्तिरित्याहुः । वेदान्तिनस्तु—अन्वयविशिष्टे शक्तिर्न कार्यान्विते, गौरवात् । तेनान्वयेऽपि शक्तिरित्याहुः । अन्ये तु वाक्यार्थे लक्षणा । न च वाक्यार्थाभावे कथं लक्षणेति वाच्यम् । पदार्थानामेव वाक्य-शक्यत्वात् तैश्च सम्बन्धसत्त्वात् । न च लक्षणाज्ञानस्य वाक्यार्थज्ञानहेतुतया पूर्व-मगृहीतायां लक्षणायां कथं तज्जनकतेति वाच्यम् । वाक्यार्थज्ञानाव्यवहितपूर्वलक्षणा-ज्ञानाङ्गीकारात् । यथा प्रागविज्ञातहरिद्रानामकनदीविशेषेण 'हरिद्रायां नद्यां घोष' इति श्रुते वाक्ये नदीपदसमभिव्याहारेण तदानीमेव 'हरिद्राशब्दस्य नदीविशेषे शक्ति-मवधार्य तत्सम्बन्धि तीरं लक्षणयाऽवधार्यते, तथा ,पदश्रवणोत्तरं पदार्थस्मरणाव्यव-हितोत्तरकाल एव सम्बन्धो लक्षणयाऽवधार्यत इत्याहुः । परे तु–यथा बलवता प्रेरित इषुरेकेनैव वेगाख्यव्यापारेण वर्मच्छेदमुरोभेदं प्राणहरणं शत्रोः करोत्येवं शब्द एकेना-भिधाव्यापारेण पदार्थस्मृतिं वाक्यार्थानुभवं च करोतीति 'यत्परः शब्दः स शब्दार्थः' इति वाक्यार्थे शक्तिमाहुः । तदयुक्तम्, 'पूर्वो धावती'त्यत्रापरस्य,'पुत्रस्ते जात'इत्या-दिषु हर्षादीनां, 'गच्छ गच्छसि चे'त्यादौ मा गा इति निषेधस्य वाक्यार्थतापत्तेः । अत एवेदृशार्थप्रत्ययाय व्यञ्जनैवाङ्गीकृता, तच्च व्यञ्जनानिरूपणे स्पष्टमिति दिक् । केचित्तु वाक्यार्थे तात्पर्याख्यं वाक्यस्य वृत्त्यन्तरमाहुः । युक्तं तु समभिव्याहारेण वाक्यार्थबोध इति । घटानयनविशिष्टसंसर्गज्ञाने तादृशानुपूर्वीज्ञानस्य हेतुत्वमात्रकल्पने लाघवादिति । स च वाक्यार्थबोधश्चतुर्विधः । विशिष्टस्य वैशिष्ट्यमिति रीत्या, विशेष्ये विशेषणं तत्र च विशेषणान्तरमिति रीत्या, एकविशिष्टे अपरवैशिष्ट्यमिति रीत्या, एकत्र द्वयमिति रीत्या चेति ॥ १३ ॥

वाक्यत्वं खण्डवाक्यत्वं चकस्मिन्पदेऽप्यस्तीत्याह—

**वाक्यं च खण्डवाक्यं च पदमेकमपि क्वचित् ॥ १४ ॥**
**धूमवत्त्वादिति यथा देवेत्यामन्त्रणं तथा ।**

वाक्यमिति । एकमपि पदं वाक्यं खण्डवाक्यं च कचिद्भवतीत्यर्थः । उदाहरति–धूमवत्त्वादिति । अत्र पञ्चम्यन्तस्यैकपदत्वं च हेत्वाकाङ्क्षानिवर्तकविशिष्टार्थप्रति-पादकत्वेन वाक्यत्वम् । देवेत्यत्रार्थसमाप्तेरभावात्सम्बोध्यत्वविशिष्टदेवप्रतिपादनात् खण्डवाक्यत्वमित्यर्थः ॥ १४ ॥

**वाक्यान्येकार्थविश्रान्तान्याहुर्वाक्यकदम्बकम् ॥ १५ ॥**

वाक्यानीति । एकार्थावच्छिन्नो वाक्यसमूहः प्रबन्ध इत्यर्थः ॥ १५ ॥

**महादेवः सत्रप्रमुखमखविद्यैकचतुरः**
**सुमित्रातद्भक्तिप्रणिहितमतिर्यस्य पितरौ ।**

अनेनाऽसावाद्यः सुकविजयदेवेन रचिते
चिरं चन्द्रालोके सुखयतु मयूखः सुमनसः ॥ १६ ॥

इति श्रीपीयूषवर्षपण्डितजयदेवविरचिते चन्द्रालोकालङ्कारे
वाग्विचारो नाम प्रथमो मयूखः ।

महादेव इति । अनेन प्रसिद्धेन कविना पण्डितेन जयदेवनाम्ना रचिते कृते चन्द्रालोकनाम्नि ग्रन्थेऽसावाद्यः प्रथमो मयूखः किरणः सुमनसः पण्डितान् चिरं सुखयतु । यस्य महादेवनामा सुमित्रानाम्नी च पितरौ । किंभूतो महादेवः सत्रप्रमुखाः सत्राद्या मखविद्या यागविद्याः तास्वेकचतुरः, किंभूता सुमित्रा तस्य महादेवस्य भक्तिराराधना तत्र प्रकर्षेण निहिता मतिर्ययेत्यन्वयः ॥ १६ ॥

विश्वेश्वरापराख्येन गागाभट्टमनीषिणा ।
चन्द्रालोकप्रकाशोऽयं मयूखे प्रथमे कृतः ॥

इति गागाभट्टकृतराकागमाभिधायां चन्द्रालोकटीकायां प्रथमो मयूखः ।

---

## द्वितीयो मयूखः ।

लक्षणनिवेशानुरोधेन प्रथमं दोषानाह—

स्याच्चेतो विशता येन सक्षता रमणीयता ।
शब्देऽर्थे च कृतोन्मेषं दोषमुद्घोषयन्ति तम् ॥ १ ॥

स्यादिति । चेतसि प्रविष्टेन ज्ञातेन येन काव्यस्य रमणीयता चमत्कारकारिता रसाभिव्यञ्जकत्वं क्षतेन सहिता प्रतिबद्धा स्यात्, तद्वर्णपदवाक्यरूपे शब्देऽर्थे चकाराद्रसेऽलङ्कारे च कृत उन्मेषः प्राकट्यं येन तं दोषम् आलङ्कारिका उद्घोषयन्ति सङ्गिरन्त इत्यर्थः । तेनात्मनिष्ठदोषव्यावृत्तिः । अर्थरसान्यतरप्रतीतिप्रतिबन्धकत्वं तदवच्छेदकतया सिद्धो जातिविशेषो वा दोषत्वमित्याशयः । अत्रेदमवधेयम्—अनौचित्यप्रवर्तितत्वरूपरसदोषाणां ज्ञानोत्तरं वाक्यार्थे द्वेषोत्पत्त्या वाक्यार्थज्ञानेच्छाया अभावान्न वाक्यार्थज्ञानमिति तत्प्रतिबन्धकता । अश्लीलादिपददोषाणां तु शक्तिमूलव्यञ्जनयाऽवगतेऽर्थे अश्लीलत्वज्ञानेऽपि तत्पूर्वं जातस्य वाक्यार्थज्ञानस्याऽप्रतिबन्धात्कामिनीजिज्ञासादिवदन्तःकरणव्यग्रतापादकतया स्वरूपेणैव रसोत्पत्तिप्रतिबन्धकता । एवमलङ्कारस्य वाक्यार्थत्वादलङ्कारदोषाणामपि वाक्यार्थावबोधप्रतिबन्धकता । एवमन्येषामपि पददोषाणां वाक्यार्थज्ञाने विलम्बजनकतया दोषतेति । सरस्वतीकण्ठाभरणकारस्तु—श्लेषप्रसादसमतादिगुणानां रसार्थावबोधजनकतया सिद्धानामभावकृतो दोषो न जात्यन्तरम् । यथा—श्रुतिकटुत्वं सौकुमार्याभावः, कान्तेरभावो ग्राम्यत्वं, प्रसा-

दुल्याभावः क्लिष्टत्वं, समत्वाभावः पतत्प्रकर्षत्वं, श्लेषाभावो विसन्धित्वं, समाधिभावोऽपुष्टत्वम्, अर्थव्यक्तेरभावः प्रसिद्धिविद्याविरोधः, उदारत्वाभावो व्याहतत्वम् । अविमृष्टविधेयांशत्वादीनामप्यर्थव्यक्त्यभावरूपत्वाद् गुणाभावत्वमेव दोषत्वम् ।

तदुक्तं वामनेन—

यो हेतुः काव्यशोभायाः सोऽलङ्कारो निगद्यते ।
गुणोऽपि तादृशो ज्ञेयो दोषः स्यात्तद्विपर्ययः ॥

इति । अतः काव्यशोभाहेतुगुणाभावत्वमेव दोषत्वमित्याह । काव्यप्रकाशादयस्तु विनिगमकाभावादर्थरसावबोधजनकत्वं गुणत्वं तत्प्रतिबन्धकत्वं च दोषत्वमित्याहुः ॥१॥

दोषानाह—

**भवेच्छ्रुतिकटुर्वर्णः श्रवणोद्वेजने पटुः ।**
**संविद्रते व्याकरणविरुद्धं च्युतसंस्कृति ॥ २ ॥**

भवेदिति । श्रुतिकटुत्वं कठिनवर्णत्वम् । तच्च शब्दश्रवणोत्तरार्थावगमप्राक्कालीनदुःखविशेषजनकशब्दत्वमित्यर्थः । लक्षणकथनव्याजेनोदाहरणमप्युक्तं 'भवेच्छ्रुति'रिति । संविद्रत इति । जानन्तीत्यर्थः । 'वेत्तेर्विभाषे'ति रुडागमः । इदं च 'अकर्मकाच्चे'त्यनुवृत्तौ 'समो गम्यृच्छी'तिसूत्रेण सम्पूर्वकात् विदेरकर्मकादात्मनेपदविधानेन सकर्मकस्य सम्पूर्वस्य विदेरात्मनेपदनिषेधाल्लक्ष्यमपि । यथा वा—

इति द्विकृत्वः शुचिमिष्टभोजिनां दिनानि तेषां कतिचिन्मुदा ययुः ।
द्विरष्टवर्षाधिक( संवत्सर )वारसुन्दरीपरीष्टिभिस्तुष्टिमुपेयुषां निशि ॥

अत्र 'इति द्विकृत्व' इति कृत्वसुच्प्रत्ययो 'द्वित्रिचतुर्भ्यः सुजि'ति सूत्रेणापादितो व्याकरणविरुद्धः । यथा वा—

स्वर्णकेतकपरागगौरताऽहृङ्कृतिद्विरदनाङ्कुशकान्ते ! ।
वाजचन्द्र ! मदनद्विपगर्भास्त्वां दरेण ललना बहुधैक्षन्(१) ॥

अत्र 'ऐक्ष'न्निति परस्मैपदम् । न चाऽनुदात्तेतोऽपि चक्षिङो ङित्करणसामर्थ्यादात्मनेपदस्यानित्यत्वम् । एवं च—

तमङ्के समारोप्य पङ्केरुहाक्षं निरीक्षं निरीक्षं स सस्मार सारम् ।
निदिध्यासतो मे यदध्याविरासीत्तदेतत्पदं धाम रामाभिधानम् ॥

इत्यत्र शतृप्रयोगः । अन्यथा शानजापत्तिरिति वाच्यम् । परिभाषाया अनित्यताबोधेन स्वयं प्रयोगाकरणात् । 'आरोपे सती'ति नयेन सिद्धप्रयोगोपपादकतया परिभाषायाः प्रयोगप्रयोजकत्वाभावात् । अनुदात्तेतश्चक्षिङो ङित्करणसामर्थ्यकृतात्मने-

(१) रथोद्धतास्वागतयोर्मेलनादुपजातिरियम् । उपजातिभेदश्चायम् 'इत्थं किलान्यास्वपि मिश्रितासु स्मरन्ति जातिष्विदमेव नाम' इत्युक्त्या कैश्चित्कल्प्यते ।

पदाऽनित्यत्वस्य वक्षिङ्मात्रविषयत्वात् । उक्तप्रयोगस्तु न शब्रन्तः, अपि तु वीप्सार्थकणमुलन्तत्वेनोपपादनीय इति । एवं 'नाथसे किमु पतिं न भूभृता'मिति दुष्टम्, आत्मनेपदिनो नाथतेः 'आशिषि नाथ' इत्यात्मनेपदस्याशिष्येव नियमाद् याचनार्थके तत्प्रयोगस्य व्याकरणविरुद्धत्वात् । न च आशिष्यात्मनेपदमेवेति नियमः, आत्मनेपदिधातुमध्यपाठवैयर्थ्यापत्तेः । अ ' संस्कृतकाव्ये दोषो न प्राकृते । तत्रापि हेमचन्द्रादिसाधितसंस्कारविरोधो दोष इति दण्डी ॥ २ ॥

## अप्रयुक्तं दैवतादौ शब्दे पुंल्लिङ्गतादिकम् ।

अप्रयुक्तमिति । कविसम्प्रदायविरुद्धमित्यर्थः । यथा—

कोदण्डखेलः खलु कौणपानामन्तः प्रसिद्धस्मृतिरेनसां च (१) ।
सर्वापदुच्छेदकरः सदैव स दैवतो मे रघुनायकोऽस्तु ॥

यथा वा—

पद्मान् हिमे प्रावृषि खञ्जरीटान् क्षिप्णुर्यमादाय विधिः क्वचित्तान् ।
सारेण तेन प्रतिवर्षमुच्चैः पुष्णाति दृष्टिद्वयमेतदीयम् ॥

अत्र पद्मशब्दः पुंल्लिङ्गः । आदिपदात् 'वचन्ती'त्यादिप्रयोगः । न हि कविरन्तिपरः प्रयुज्यत इति प्रयोगस्यैव निषेधो न साधुत्वस्य । व्याकरणविरोधालङ्कारिकसम्प्रदायविरोधयोर्विद्याविरोधत्वेनैक्यसम्भवेऽपि शब्दार्थरूपाश्रयभेदाद्भेद इति सम्प्रदायः । अस्य दूषकताबीजमर्थोपस्थितिविलम्बजनकता ।

## असमर्थं तु हन्त्यादेः प्रयोगो गमनादिषु ॥ ३ ॥

## स हन्ति हन्त कान्तारे कान्तः कुटिलकुन्तलः ।

असमर्थमिति । अत्र हन्तिपदं गमनार्थम् । हन्तेरवगतावपि गतौ शक्तिः 'पद्धतिजंघनं जङ्घे'त्यादौ नियता । तदभावेनासमर्थत्वमित्याशयः । यथा वा—

चतुरम्बुधरावृता मही विधिना केन विहाय गम्यते ।
इति वाजकलानिधेर्द्विषां वनवासे महती विचारणा ॥

अत्राम्बुधरपदम् ।

## निहतार्थं लोहितादौ शोणितादिप्रयोगतः ॥ ४ ॥

निहतार्थमिति । प्रसिद्धेनार्थेनाऽप्रसिद्धार्थतिरोधानमित्यर्थः । लोहिते रागे शोणितमिति प्रयोगे रुधिरेण रागस्य निहतिः, विरलप्रयोगादिति भावः । असमर्थनिहतार्थयोर्भेदो विभावनीयः । यत्तु—शक्त्यभाववत्पदप्रयोगोऽसमर्थत्वं शक्तिसत्त्वेऽप्रसिद्धार्थकपदप्रयोगो निहतार्थत्वमिति भेद उक्तः, स चिन्त्यः । हन्तेरपि व्याकरणेन गतौ शक्तिग्रहात् ॥ ४ ॥

(१) धनुर्धारी राक्षसानां पापानां च नाशको रघुनायकः, कल्याणकारित्वेन यस्य स्मरणं प्रसिद्धमित्यर्थः ।

व्यनक्त्यनुचितार्थं यत्पदमाहुस्तदेव तत् ।
इयमद्भुतशाख्यग्रकेलिकौतुकवानरी ॥ ५ ॥

व्यनक्तीति । वर्णनीयवैरूप्यबोधकमनुचितार्थमित्यालङ्कारिका आहुरित्यर्थः । इयमिति । अद्भुतरसस्याश्चर्यरसस्य शाखिनः अग्रं तत्र क्रीडाकौतुककर्त्रीत्यर्थः । अत्र वानरीति वैरूप्यबोधकम् ॥ ५ ॥

निरर्थकं तु हीत्यादि पूरणैकप्रयोजनम् ।

निरर्थकमिति । मात्रार्थकेनैकपदेन 'विजयते' इत्यादावुपसर्गे न चातिव्याप्तिः । हिकार एवोदाहरणम् ॥ ६ ॥

अर्थे विदधदित्यादौ दधदाद्यमवाचकम् ॥ ६ ॥
धत्ते नभस्तलं भास्वानरुणं तरुणैः करैः ।
एकाक्षरं विना भूभ्रूक्ष्मादिकं खतलादिवत् ॥ ७ ॥

अर्थे इति । उपसर्गसमभिव्याहारेणैव तात्पर्यविषयीभूतार्थावबोधकस्य विनोपसर्गं प्रयोगोऽवाचकत्वम् । अत्र 'विधत्त' इत्यपेक्षिते 'धत्त' इति प्रयोगः । एवं च तात्पर्यविषयीभूतार्थप्रकारकबोधजनकत्वं शक्त्या लक्षणया वा यत्र न सम्भवति, तदवाचकम् । योगरूढं पदं योगमात्रेण प्रयुक्तमवाचकमेवेति केचित् । तात्पर्यविषयीभूतार्थबोधसहकारित्यागोऽवाचकत्वमित्याशयः । भास्वान् सूर्यः तरुणैः प्रकाशमानैः करैः किरणैर्नभस्तलं नभोऽरुणं करोतीत्यर्थः । ननु खाद्येकाक्षरस्य तलादिपदसमभिव्याहारेण गृहीतशक्तिकस्य केवलस्यावाचकत्वं स्यादत आह–एकाक्षरमिति । एकाक्षरमित्युपलक्षणम्, तद्भिन्नत्वे सतीत्यर्थः । सहकारित्यागे स्वार्थाबोधकत्वमवाचकत्वम् । भूभ्रूक्ष्मानभआदिपदे तलयुगादिपदत्यागे स्वार्थाबोधकत्वाभावान्नातिप्रसङ्गः । अप्रयुक्तनिहतार्थाऽवाचकानामसमर्थ एवान्तर्भावसम्भवेऽप्यालङ्कारिकसम्प्रदायमात्रेण भेदो युक्त इति काव्यप्रकाशः ।

त्रिधाऽश्लीलमाह—

अश्लीलं त्रिविधं व्रीडाजुगुप्साऽमङ्गलात्मना ।
आल्हादसाधनं वायुः कान्तानाशे भवेत्कथम् ॥ ८ ॥

अश्लीलमिति। व्रीडाद्यन्यतरहेतुकः कान्तिविरहोऽश्लीलत्वम् । विरुद्धमतिकृति शक्त्याऽत्र व्यञ्जनयेति भेदः । साधनवायुनाशपदानां पुंलिङ्गाऽपानवायुमरणोपस्थापकतया व्रीडादिजनकतेत्याशयः । कान्तावियोगे पवन आनन्दहेतुः कथं स्यादित्यक्षरार्थः । अयमनित्यदोषः, तेन हास्ये शोके च गुणत्वम् ॥ ८ ॥

स्याद् द्व्यर्थमिह सन्दिग्धं नद्यां यान्ति पतत्रिणः ।
स्यादप्रतीतं शास्त्रैकगम्यं वीताऽनुमादिवत् ॥ ९ ॥

स्यादिति । पदस्वरूपसन्देहजनकमर्थसन्देहजनकं चेत्यर्थः । नद्यामिति । 'नदीदेशे गच्छन्ती'त्यर्थस्य 'स्वर्गे न गच्छन्ती'त्यर्थस्य च प्रत्यायकत्वादर्थसन्देहः। द्वितीयान्तसप्तम्यन्तत्वसन्देहेन द्विवर्णैकवर्णकत्वसन्देहेन च पदस्वरूपसन्देह इति । शास्त्रैकगम्यमिति । कोशाद्यप्रसिद्धत्वे सति शास्त्रप्रसिद्धत्वमित्यर्थः । अनुमानं वीतमवीतं चेति द्वेधेति कारणलिङ्गकाऽनुमाने प्रसिद्धं न्यायशास्त्रे ॥ ९ ॥

शिथिलमुदाहरणेनैव दर्शयति—

शिथिलं शयने लिल्ये मञ्चितं ते शशिश्रियि ।
मस्तापिष्टकटीलोष्ठगल्लादि ग्राम्यमुच्यते ॥ १० ॥

शिथिलमिति । तत्र श्लेषगुणाभावः । श्लेषः सजातीयपदबन्ध इति वक्ष्यते । लिल्ये लीनम् । शशिश्रियीति सप्तम्यन्तं शयनविशेषणम् । इदं च काव्यप्रकाशिकायां नोक्तम् । ग्राम्यमुदाहरति—मस्तेत्यादि । ग्राम्यं हालिकाद्यविदग्धमात्रचमत्कारजनकम् । नागरोपनागरशब्दत्यागपूर्वकग्राम्यशब्दप्रयोगेण वक्तुर्वैदग्ध्योन्नयने श्रोतुर्वैमुख्येन रसानुत्पत्तिर्दूषकताबीजम् । तेन विदूषकादावधमे वक्तरि न दोषत्वम् । मस्तादिशब्दाः क्रमेणोन्मत्तचूर्णितनितम्बस्तूपिण्डकपोलेषु ग्राम्याः । यथा वा—

मुष्टिमिताऽपि मृगाक्ष्याः कटिरेषा तुष्टिमावहति ।
वसनग्रन्थिनिगूढा विहितहरिरुचिः सुदामभिक्षेव ॥

इदमनित्यदूषणम्, तेन हास्ये गुणः ॥ १० ॥

नेयार्थं लक्षणाऽत्यन्तप्रसरादमनोहरम् ।
हिमांशोर्हारधिक्कारजागरे यामिकाः कराः ॥ ११ ॥

नेयार्थमिति । लक्षणाया अत्यन्तप्रसरः परम्परितत्वं निषिद्धलाक्षणिकत्वम् । रूढिप्रयोजनाभ्यां विना लक्षणा निषिद्धा, तद्वत्त्वम् । वृत्त्यभावेनार्थानुपस्थितिर्दूषकताबीजम् । हिमांशोः करा हारशोभाधिक्कारभीतचन्द्रमसो जागरे यामिका इत्यर्थः । अत्र हारधिक्कारादिपदम् अमनोहरत्वे लक्षणया प्रयुक्तम् । न च तत्रास्य रूढिर्न वा प्रयोजनम् । मुख्यशब्दार्थातिरेकिणोऽर्थस्याप्रतीतेः ॥ ११ ॥

क्लिष्टमर्थो यदीयोऽर्थश्रेणिनिःश्रेणिमृच्छति ।
हरिप्रियापितृवधूप्रवाहप्रतिमं वचः ॥ १२ ॥

क्लिष्टमिति । भूयोऽर्थपरम्परया तात्पर्यविषयीभूतार्थप्रत्यायकमित्यर्थः । हरिप्रियेत्यादिना गङ्गाप्रवाहप्रतीतेः । हरिप्रियाया लक्ष्म्याः पिता सिन्धुस्तस्य वधूर्गङ्गा तत्प्रवाहसदृशमित्यक्षरार्थः । अयं समासस्य पदतया पददोषः । यथा वा—

गोगजवाहनभोजनभक्षोद्भूतपमित्रसपत्नजशत्रोः ।

वाहनवैरिकृतासनहृष्टा त्वामिह पातु जगत्त्रयतुष्टा (१) ॥ १२ ॥

**अविमृष्टविधेयांशः समासविहिते विधौ ।**
**विशन्ति विशिखप्रायकटाक्षाः कामिनां हृदि ॥ १३ ॥**

अविमृष्टेति । विधा विधेये समासेन विहिते इतरविशेषणत्वेन निर्दिष्टे । विशिखप्रायेत्यस्य कटाक्षविशेषणत्वेन निर्देशात्साक्षात्क्रियान्वयाभावेन विधेयत्वासम्भवात् । 'विशिखप्राय'मिति पाठे तु न दोषः । यद्यपि विशिष्टस्य क्रियान्वये विशेषणस्यापि तदन्वयः प्रतीयते, तथापि विशेष्यावच्छेदकतया प्रतीयते न साक्षात् । तेन च साक्षात्क्रियान्वयप्रतीतिजन्यचमत्कारे विलम्ब इति । यथा वा—

विपक्षनृपनारीणां पातिव्रत्यविलोपने ।
शूरः प्रतापो नायं ते तासां हृदवियोगि यत् ॥

अत्र वियोगाभावो विधेयः, स च समस्तेन विशेषणत्वेन निर्दिष्टः । न चात्र वियोगाभावविशिष्टहृदयोद्देशेनान्यत् किञ्चिद्विधेयमस्ति, येन 'जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः' इत्यादाविव दोषाभावः स्यात् । यथा वा—

रसैः कथा यस्य सुधावधीरणी नलः स भूजानिरभूद् गुणाऽद्भुतः ।
सुवर्णदण्डैकसितातपत्रितज्वलत्प्रतापावलिकीर्तिमण्डलः ॥

अत्र प्रतापावलिकीर्तिमण्डलोद्देशेन सुवर्णदण्डैकसितातपत्रितत्वं विधेयम् , तच्च समासान्तर्गतम् । न चेह विधेयस्य क्रियाविशेषणत्वात् समासेनेतरविशेषणत्वेनावगतस्य क्रियाविशेषणत्वानुपपत्तिर्दूषकताबीजम् । यथा 'वषट्कर्तुः प्रथमभक्ष' इत्यादावेकप्रसरताभङ्गस्य । स चोत्सर्गापवादाभ्यां तत्पुरुषे दृष्ट उक्तोदाहरणे 'त्र्यङ्गैः स्विष्टकृतं यजती'त्यत्र च । बहुव्रीहौ तु 'लोहितोष्णीषा ऋत्विजश्चरन्ति' 'सप्तदशारत्निर्वाजपेयस्य यूप' इत्यादावङ्गीकृतमेव विशेषणविषयत्वं विधेः । अतः कथमत्र स दोष इति वाच्यम् । दूषकताबीजतौल्येन बहुव्रीहावप्यविशेषात् ।

रसैः कथा यस्य सुधावधीरणी नलेन तेनाशु कृतं महीभुजा ।
ज्वलत्प्रतापावलिकीर्तिमण्डलं सुवर्णदण्डैकसितातपत्रितम् ॥

इति पाठे तु न दोषः । अयमपि समासगत एव पददोषः ॥ १३ ॥

**अपराधीन इत्यादि विरुद्धमतिकृन्मतम् ।**
**अन्यसङ्गतमुत्तुङ्गहारशोभिपयोधरा ॥ १४ ॥**

(१) गवा वृषेण गच्छतीति गोगः शिवः, तज्जः कार्तिकेयः, तस्य वाहनं मयूरः, तस्य भोजनं सर्पः, तस्य भक्षो भक्षणं वायुः, तस्मादुद्भूत उत्पन्नो हनूमान् , तं पाति रक्षति योऽर्थात् सुग्रीवः, तस्य मित्रं श्रीरामचन्द्रः, तत्सपत्नो रावणः, तज्जो मेघनादः, तत्शत्रोर्जिष्णुस्य वाहनमैरावतो गजः, तस्य वैरी सिंहः, तत्र कृतेनासनेन स्थितया हृष्टा, दुर्गा इति गूढोऽर्थः । स्पष्टमन्यत् ।

अपराधीन इति । वर्णनाविरुद्धार्थप्रतीतिजनकं विरुद्धमतिकृत् । वर्णनाविषयपराधीनत्वाभावबोधकापराधीनपदस्य 'अपरस्याधीन' इति षष्ठीसमासेन विरुद्धपराधीनत्वरूपार्थबोधकत्वादुदाहरणत्वम् । सन्दिग्धस्य तु न विरुद्धार्थप्रत्यायकत्वमिति भेदः । पयोधरविशेषणतया तात्पर्यविषयस्योत्तुङ्गत्वस्य हारविशेषणत्वप्रत्यायकत्वादन्यसङ्गतत्वमित्यर्थः । न चात्रैकत्र द्वयमिति न्यायेन विशिष्टवैशिष्ट्यबोधसम्भवान्नास्य दोषत्वम् । अन्यथा सर्वत्र त्रिपदसमासोच्छेदप्रसङ्गः । न च 'द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचन'मिति वचसो रिक्तार्थत्वप्रसङ्ग इति वाच्यम् । समाससन्देहेन बोधविलम्बस्य दूषकताबीजत्वात् । अत एव क्लिष्टादिदोषचतुष्टयं समासनिष्ठमेवाम्नातम् । इदं चाविमृष्टविधेयत्वान्तर्गतं, तत्रापि क्रियाविशेषणत्वेनेष्टस्य तद्विशेषणत्वतौल्यादिति काव्यप्रकाशः ॥ १४ ॥

पददोषानुक्त्वा वाक्यदोषानाह—

**रसाद्यनुचिते वर्णे प्रतिकूलाक्षरं विदुः ।**

**न मामङ्गद ! जानासि रावणं रणदारुणम् ॥ १५ ॥**

रसादीति । शृङ्गाररसोचिताः कोमलवर्णा वीररसोचिताः कठिना अनुचिता विपरीताः, तादृशवर्णवद्वाक्यं प्रतिकूलाक्षरमित्यर्थः । वीररसानुचितकोमलवर्णमुदाहरति—न मामिति । कर्कशमिति पाठे न दोषः ॥ १५ ॥

**यस्मिन्नुपहतो लुप्तो विसर्ग इति तत्तथा ।**

यस्मिन्निति । उपहत उत्वं प्राप्तो लुप्तो वा विसर्गो यत्र तद्वाक्यं तथा । उपहतविसर्गं लुप्तविसर्गं चेत्यर्थः । उदाहरणमपीदमेव । 'उपहतो लुप्तो' इति उत्वप्राप्तः, 'विसर्ग इति' अत्र लुप्तः । एतेषां क्रमशो बहुशः पातो रचनानिष्ठो दोष इत्याशयः । अत्राऽकारप्रश्लेषेण प्रथमासप्तमीसन्देहेन चान्यार्थप्रत्यायकत्वं दूषकताबीजम् ।

**कुसन्धि पटवागच्छ विसन्धि नृपती इमौ ॥ १६ ॥**

कुसन्धीति । सन्धावश्लीलता क्लिष्टत्वं च कुसन्धित्वम् । 'पटो ! आगच्छे'त्यत्र सन्धावश्लीलता ।

उर्व्यसावत्र तर्वाली मर्वन्ते चार्ववस्थितिः ।
नात्रर्जु युज्यते गन्तुं शिरो नमय तन्मनाक् ॥

इत्यादौ क्लिष्टत्वम् । विसन्धीति । 'प्लुतप्रगृह्या अचि' इति प्रगृह्यसंज्ञाप्रयुक्तः ।

'संहितैकपदे नित्या नित्या धातूपसर्गयोः ।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥'

इति वैकल्पिकसंहिताप्रयुक्तश्च सन्ध्यभावो विसन्धित्वम् । 'नृपती' इति प्रगृह्यसंज्ञाप्रयुक्तः । द्वितीयस्तु—'धन्यासि या कथयसि प्रियसङ्गतानि इत्थं सखीषु परिवार-

जने यथेष्टम् ।' इति । अत्र बन्धवैरस्याधायकत्वेन दूषकता । तेन 'तावदेव कृषि-रिन्द्रदिदृक्षु'रित्यादौ तु बन्धवैरस्यानाधायकत्वान्न दूषणम् ॥ १६ ॥

हतवृत्तमनुक्तोऽपि च्छन्दोदोषश्चकास्ति चेत् ।
विशाललोचने ! पश्याम्बरं तारातरङ्गितम् ॥ १७ ॥

हतवृत्तमिति । शास्त्रीयदोषाभावेऽप्यश्रव्यतया प्रतिभासमानच्छन्दोदोषवत्त्वं रसाऽननुगुणच्छन्दोवत्त्वं चेत्यर्थः। 'पश्याम्बर'मित्यत्र छन्दोलक्षणाऽविरुद्धत्वेऽपि पूर्वस्वरेणोत्तरबकारे काचिदश्रव्यता भवति । यथा वा—

मल्लिकाकुसुमकुण्डुभकेन सम्भ्रमावलयितेन कृतेन ।
आसनेऽकृत सचेतसि साक्षात्कुण्डलीन्द्रतनुकुण्डलभाजम् ॥

अत्राद्यपादान्त्याक्षरे लघुत्वश्रवणेन । एवं हास्यरसानुगुणदोधकादिच्छन्दोवत्त्वं करुणदोषः ॥ १७ ॥

न्यूनं त्वत्खड्गसम्भूतयशःपुष्पं नभस्तलम् ।
अधिकं भवतः शत्रून् दशत्यसिलताफणी ॥ १८ ॥

न्यूनमिति । अपेक्षिताकथने न्यूनमनपेक्षितकथनेऽधिकम् । उदाहरणयोर्यशसः पुष्पत्वे कथिते खड्गस्य लतात्वकथनमपेक्षितम् । उत्तरत्र लतात्वमनपेक्षितमिति ॥१८॥

कथितं पुनरुक्ता वाक् श्यामाब्जश्यामलोचना ।
विकृतं दूरविकृतेरैयरुः कुञ्जराः पुरम् ॥ १९ ॥

कथितमिति । श्यामपदस्य पुनरुक्तत्वात् । यथा वा पैतामहः श्लोकः—

दिनकरसेवालब्धो दिनकरशर्मा तनूजाद्यः ।
दिनकर इवोग्रतेजा दिनकर इव नन्दनः स पद्मानाम् ॥

विकृतमिति । दूरविकृतेर्महतो धातुप्रत्ययविकारादुत्पन्नम् । जौहोत्यादिकत्वेन श्लुविकरणस्य 'ऋगतौ'वित्यस्य श्लौ द्वित्वे उरदत्वे रेफलोपे 'अर्तिपिपर्त्योश्चे'-त्यभ्यासस्येत्वे 'अभ्यासस्यासवर्णे' इतीयङि 'सिजभ्यस्तविदिभ्यश्चे'ति झुसि 'जुसि चे'ति गुणे आडागमे 'आटश्चे'ति वृद्धौ ऐयरुरिति लङि रूपम् । आपुरित्यर्थः ॥१९॥

पतत्प्रकर्षं त्यक्तानुप्रासादित्वे यथोत्तरम् ।
गम्भीरारम्भदम्भोलिपाणिरेष समागतः ॥ २० ॥

पतदिति । आरम्भेऽङ्गीकृतस्यानुप्रासस्य यमकस्य वा त्यागः ॥ २० ॥

समाप्तपुनरात्तं स्यादेष पीयूषभाजनम् ।
नेत्रानन्दी तुषारांशुरुदेत्यम्बुधिबान्धवः ॥ २१ ॥

समाप्तेति । समाप्तेऽन्वये विशेषानाधायकविशेषणश्रवणम् । तदनुरोधेन विशेष्या-

नुषङ्गेण वाक्यार्थान्तरप्रत्यायकत्वं दूषकताबीजम् । एष इति । 'उदेतो'त्यन्तेन समाप्तो वाक्यार्थः । 'अम्बुधिबान्धव' इति विशेषणस्य विशेषाऽनाधायकस्यानुरोधेन विशेष्यानुषङ्गात् । विशेषाधायकत्वे तु न दोषः । 'अयमुदयति मुद्राभञ्जनः पद्मिनीना'मित्यादौ मुद्राभञ्जकत्वविशेषणस्य मानिनीमानखण्डनसमर्थत्वस्योदये विशेषरूपस्याकाङ्क्षितत्वात् ॥ २१ ॥

अर्थान्तरपदापेक्षि क्रीडानृत्येषु सस्मितम् ।
मोघारम्भं स्तुमः शम्भुमर्धरम्भोरुविग्रहम् ॥ २२ ॥

अर्थान्तरेति । द्वितीयार्धघटकपदार्थहेतुकप्रथमार्धवाक्यत्वम् । चरणेत्यपि बोध्यम् । अस्य कविसम्प्रदायसिद्धवैरस्याधानेन दूषकता । अत एव द्वित्रिपदपाते न दोषः, तथैव सम्प्रदायात् । क्रीडेति । अत्र पूर्वार्धे 'सस्मित'मित्यन्तविशेषणे 'मोघारम्भ'मित्युत्तरार्धपठितस्यापेक्षणात् ॥ २२ ॥

अभवन्मतयोगः स्यान्न चेदभिमताऽन्वयः ।
येन बद्धोऽम्बुधिर्यस्य रामस्यानुचरा वयम् ॥ २३ ॥

अभवन्मतेति । अयोग्यतया निराकाङ्क्षतया च तात्पर्यविषयान्वयासम्भव इत्यर्थः । येनेति । येनाम्बुधिर्बद्धो यस्य वयमनुचराः तस्य रामपदवाच्यस्यान्वयोऽभिमतो न चेदित्यन्वयः । अत्र येन रामस्येत्यन्वयो भिन्नविभक्तिकत्वेन निराकाङ्क्षत्वान्न सम्भवति । न च विभक्तौ लक्षणया विभक्तिव्यत्यासेन वान्वयः स्यादिति वाच्यम् । सुब्विभक्तौ लक्षणानङ्गीकारात् । तद्व्यत्यासे यस्येति षष्ठ्यन्तेन रामस्य पुनरन्वयायोगात् । अतोऽयमभवन्मतयोगः । यथा वा—

त्वमेवंसौन्दर्या स च रुचिरतायाः परिचितः
कलानां सीमानं पुनरिह युवामेव भजथः ।
अपि द्वन्द्वं दिष्ट्या तदिति सुभगे ! संवदति वा-
मतः शेषं यत्स्याज्जितमिह तदानीं गुणितया ॥

अत्र 'यत्तदान'पदयोरकालार्थककालार्थकयोरभेदान्वयो न सम्भवति, अयोग्यत्वात् । किन्तु यदित्यस्याकाङ्क्षापूरकं तदिति, तदानीमित्यस्य तु यदेति आकाङ्क्षापूरकं स्यात् । न च तयोरध्याहारः । यत्तदानीमितिपदद्वयसत्त्वे तयोरन्वय एव तात्पर्यग्रहात् । अन्यथा सर्वत्राध्याहारसम्भवादयोग्यवाक्योच्छेदापत्तिः । अतोऽत्रापि विवक्षितान्वयासम्भवः । अत्र काव्यप्रकाशेनाऽनभिहितवाच्यतादूषणमुक्तम् । तन्न्यूनपदान्तर्गतमिति चिन्त्यम् । केचित्तु—अवश्यवक्तव्यानभिधायकपदाभिधानम् अनभिहितवाच्यत्वम्, अवश्यवक्तव्याभिधायकपदानभिधानं न्यूनपदत्वमिति भेदमाहुः । तन्न, विनिगमकाभावेन वैपरीत्येनापि सुवचत्वात् । यथा वा—

इदं यदि क्ष्मापतिपुत्रि ! तत्त्वं पश्यामि तन्न स्वविधेयमस्मिन् ।

त्वामुच्चकैस्तापयता नृपं च पङ्क्तेगुणैवाऽजनि योजनेयम् ॥

अत्र तदिति तदेत्यर्थकम् ॥ २३ ॥

अस्थानस्थसमासमाह—

**द्विषां सम्पदमाच्छिद्य यः शूरान्समपूरयत् ।**
**अस्थानस्थसमासं न विद्वज्जनमनोरमम् ॥ २४ ॥**

द्विषामिति । अत्र रौद्ररसानुगुणो दीर्घः समासस्तद्व्यञ्जकपदेषु 'सम्पदमाच्छिद्ये'-त्यादिषु न कृतस्तदनभिव्यञ्जककवेरुक्तौ 'विद्वज्जने'त्यत्र कृत इति भावः । इदमुप-लक्षणमस्थानस्थपदस्यापि । उदाहरणमपीदमेव । 'न विद्वज्जनमनोरम'मित्यत्र न ञो-ऽन्ते उचितस्य 'अविद्वज्जनमनोरम'मितिबुद्ध्यापादकतयाऽस्थानस्थत्वात् । यथा वा—

चत्वारो वयमृत्विजः स भगवान् कर्मोपदेष्टा हरिः
सङ्ग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता ।
कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलं
राजन्योपनिमन्त्रणाय रसति स्फीतं यशोदुन्दुभिः ॥

अत्राऽध्वरपदस्य समासेऽन्तर्भावे ऋत्विगादीनां तदन्वयबोधः क्लेशेनेत्यस्थानस्थ-समासत्वम् ॥ २४ ॥

**मिथः पृथग्वाक्यपदैः सङ्कीर्णं यत्तदेव तत् ।**
**वक्त्रेण भ्राजते रात्रिः कान्ता चन्द्रेण राजते ॥ २५ ॥**
**ब्रह्माण्डं त्वद्यशःपूरगर्भितं भूमिभूषण ! ।**
**आकर्णय पयःपूर्णसुवर्णकलशायते ॥ २६ ॥**

मिथ इति । सङ्कीर्णं द्विविधं प्रोक्तं पदसङ्कीर्णं वाक्यसङ्कीर्णं च । वाक्यान्तरपदानां वाक्यान्तरानुप्रवेशे आद्यम् , वाक्यस्य वाक्यान्तरानुप्रवेशे द्वितीयमित्यर्थः । आद्यो-दाहरणं वक्त्रेणेति । अत्र वक्त्रचन्द्रपदे सङ्कीर्णे । द्वितीयोदाहरणं ब्रह्माण्डमिति । अत्र 'भूमिभूषण ! आकर्णये'ति वाक्यस्य महावाक्यान्तः पातः । अत्र काव्यप्रकाशे प्रसिद्धिहतत्वं दोषान्तरमुक्तम् । यथा—

मञ्जीरादिषु रणितप्रायं पक्षिषु च कूजितप्रभृति ।
स्तनितमणितादि सुरते मेघादिषु गर्जितप्रमुखम् ॥

इतिनियमातिक्रमरूपम् । तस्याप्रयुक्तमध्येऽन्तर्भावान्मूलेऽनुक्तिः ॥ २५–२६ ॥

**भग्नप्रक्रममारब्धशब्दनिर्वाहहीनता ।**
**अक्रमः कृष्ण ! पूज्यन्ते त्वामनाराध्य देवताः ॥ २७ ॥**

भग्नेति । आकाङ्क्षितप्रकारकस्यार्थस्यानुक्तिरित्यर्थः । अक्रम इत्युदाहरणम् । अक्रमोऽनुचितम् । पूज्यन्ते अनाराध्येति प्रक्रमभङ्गः । तथाहि—अत्राऽनाराध्येति

वाक्यं साकाङ्क्षम् । तत्रोचितापि देवतान्तरपूजा अनुचितत्वेनोच्यमाना क्रियान्तरापेक्षया ऽनुचितत्वेन प्रतिभासत इति क्रियान्तराकाङ्क्षा उत्थापिता । सा चाकाङ्क्षा पूर्वोक्तशब्द-विशिष्टकृष्णपूजनाभावमेव विषयीकरोति । सा च अनाराध्येति धातुना तेन प्रकारेण न निर्देश्यत इति प्रक्रमभङ्गः ।

न सोऽस्ति प्रत्ययो लोके यत्र शब्दो न भासते ।
ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा ॥

इत्यादिवक्ष्यमाणनयेन शब्दविशिष्टार्थस्य प्रातिपदिकार्थत्वमित्याशयः । 'असम्पू-ज्ये'ति पाठे तु न दोषः । नन्वेवमेकस्य पदस्य द्विःप्रयोगात्कथितपदत्वं दोष इति चेन्न, उद्देश्यप्रतिनिर्देश्यकातिरिक्तपद एव तस्य दोषत्वात् । यथा—

रामो जागर्ति देवेषु रामं भज सदा सखे ! ।
रामेण निहता दैत्याः स ते दास्यति सत्फलम् ॥

यथा वा—

हितगिरं न शृणोषि किमाश्रवे ! प्रसभमप्यव जीवितमात्मनः ।
सखि ! हिता यदि मे भवसीदृशी मदरिमिच्छसि वा मम जीवितम् ॥

इत्यादौ उद्दिष्टस्य विधेयान्तरे उद्देश्यतया विहितस्य, विधेयान्तरे उद्देश्यतया एकोद्देशेन विहितस्योद्देशान्तरे विधेयतया वा प्रतिनिर्देशे तु तत्पदप्रयोगस्य सर्वनाम-प्रयोगस्य चोक्तप्रकारेण गुणत्वात् । अयं च प्रत्ययसर्वनामवचनपर्यायकारकाणामुन्नेयः । यथात्रैव क्त्वान्तस्य पूर्वता युक्ता । अत्र काव्यप्रकाशोक्तमक्रमत्वमस्थानस्थपदत्वा-न्तर्गतमिति नोक्तम् ॥ २७ ॥

अमतार्थान्तरं मुख्येऽमुख्येनार्थे विरोधकृत् ।
त्यक्तहारमुरः कृत्वा शोकेनालिङ्गिताऽङ्गना ॥ २८ ॥

अमतेति । मुख्येऽर्थे प्रकृतरसे अमुख्येन विरुद्धेन तदुद्दीपनविभावानुभावव्यभि-चारिभावादिरूपेण वा विरोधकृत् । प्रकृतरसविरुद्धरसव्यञ्जकसमभिव्याहार इत्यर्थः । वाक्यगतविरुद्धमतिकृति तु न रसो विरुद्धोऽपि तु वाक्यार्थ एव ।

आद्यौ शृङ्गारबीभत्सौ तथा वीरभयानकौ ।
रौद्राद्भुतौ हास्यरसकरुणौ वैरिणौ मिथः ॥

इति विरोधो ज्ञेयः । त्यक्तहारेति लक्ष्यम् । अत्र प्रकृतकरुणबीभत्सरसविरोधि-शृङ्गारव्यञ्जकमङ्गनालिङ्गनम् । यथा वा—

राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥

अत्र बीभत्सरसविरोधिशृङ्गारव्यञ्जनात् । अत्र च त्यक्तहारमित्युदाहरणव्याजेन, व्यभिचारिरसस्थायिभावानां शब्दवाच्यता ।

क्लिष्टकल्पनया व्यक्तिरनुभावविभावयोः ॥
प्रतिकूलविभावादेर्ग्रहोऽनुचितबन्धता ।'

इति रसदोषचतुष्टयमप्युपलक्षितम् । तथाहि—शोकेनेति स्थायिभावः शब्देनोक्तः । त्यक्तहारमुरः कृत्वेत्यनेन शृङ्गारकरुणसाधारणेन करुणरसानुभावचित्तविक्षेपस्य शृङ्गारोद्दीपनविभावस्य च क्लेशेन कल्पनं करुणरसानुभावप्रतिकूलशृङ्गारादिविभावाङ्गनालिङ्गनादिकथनं चेति । यथा वा—

लसदूव्रीडाः सकरुणाः सेर्ष्या अथ सविस्मयाः ।
निपतन्ति भवद्रूपे कामिनीनयनाञ्चलाः ॥

अत्र स्थानम्रत्वादिकार्यमुखेन वाच्यानां व्रीडादीनामुक्तिः । अयं च दोषो व्यभिचारिणां स्वातन्त्र्येणोपादान एव । रसव्यञ्जनार्थमुपादाने तु न दोषः । यथा 'लज्जावनम्रमुखी'त्यादौ ।

जनकस्य सुता राम ! कथमूढेति सस्मिताः ।
रामस्य जानकीसख्यः परिहासं प्रचक्रिरे ॥

अत्र हासस्य शब्देनोक्तिः । 'स्मेरयामासुराननम्'मिति युक्तम् ।

अम्बरसंवरणच्छलकृतकङ्कणझङ्कृतिर्बाला ।
उन्निद्रयति निशीथे निर्भरनिद्राकुलस्य रतिम् ॥

अत्र स्थायिनो रतेः शब्देनोक्तिः ।

कर्पूरधूलिधवलद्युतिपूरधौतदिङ्मण्डले शिशिररोचिषि तस्य यूनः ।
लीलाशिरोंऽशुकनिवेशविशेषक्लृप्तिव्यक्तस्तनोन्नतिरभून्नयनाऽवनौ सा ॥

अत्रोद्दीपनालम्बनरूपाः पदार्थाः शृङ्गारयोग्यविभावानुभावपर्यवसायिनः स्थिता इति क्लिष्टकल्पना ।

गता रतिर्मतिर्लूना भूयो विपरिवर्तते ।
अवस्था तस्य विषमा देहं परिभवत्यदः ॥

अत्र स्वभावादीनां करुणादिसाधारण्यात्कामिनीरूपो विभावः प्रकरणालोचनादिकल्प्यः ।

विमुञ्च मानं सातङ्कं कर्षं त्यज मुदं कुरु ।
प्रसीद बाले ! कालेऽस्मिन् गतः कालो न यास्यति ॥

अत्रानित्यताप्रकाशनरूपो विभावस्तत्प्रकाशितो निर्वेदश्च शृङ्गारप्रतिकूलो व्यभिचारिभावः ।

कुप्यतु नाम ननान्दा पतिरपि मन्द्यादरो भवतात् ।
उच्चैरिदं वदामो मम सखि ! दामोदरः सर्वस्त्रं ॥

अत्र निःशङ्कत्वं वीरानुभावः । अनुचितबन्धता तु दिव्यनायकेषु विष्ण्वादिषु गुर्वादिषु च सम्भोगादिवर्णनम् । अदिव्येषु समुद्रलङ्घनं सद्यःकोपफलादिवर्णनम् । एवं

धीरोदात्तादिषु कातर्यादिवर्णनम्। एवं नायिकाया अनेककामुकविषयरत्यादिवर्णनम्। इदं च शाब्दबोधजनकेच्छाप्रतिबन्धकतया शाब्दबोधप्रतिबन्धद्वारा रसोद्बोधप्रतिबन्धकमिति दिक् ॥ २८ ॥

अर्थदोषानाह—

अपुष्टोऽर्थो विशेष्ये चेन्न विशेषो विशेषणात्।
विशन्ति हृदयं कान्ताकटाक्षाः खञ्जनत्विषः ॥ २९ ॥

अपुष्ट इति। एतेषामर्थान्वयव्यतिरेकानुविधायित्वादर्थदोषत्वम्। विशेष्योत्कर्षानाधायकविशेषणत्वमपुष्टत्वम्। खञ्जनत्विष इति लक्ष्यम्। एतदनुपादाने बाधाभावात् ॥ २९ ॥

कष्टः स्पष्टावबोधार्थमक्षमो वाच्यसन्निभः।
व्याहतश्चेद्विरोधः स्यान्मिथः पूर्वापरार्थयोः ॥ ३० ॥
सहस्रपत्रमित्रं ते वक्त्रं केनोपमीयते।
कुतस्तस्योपमा यस्य पुनरुक्तः सुधाकरः ॥ ३१ ॥

कष्ट इति। आसत्त्यादिसत्त्वेऽपि विलम्बबोध्यत्वं कष्टत्वम्। वाच्यसन्निभ इति लक्ष्यम्। वाचि वचने न सम्यक् शीघ्रं निभासत इत्यर्थः। वाच्यसदृश इति प्रतीतेरुक्तार्थबोधे विलम्बः। यथा वा—

रविरुचिरचामीकारेषु स्फुटामलबिन्दुतां
रचयितुममूरुच्चीयन्ते, विहायसि तारकाः।
स्वरविरचनायाऽऽसामुच्चैरुदात्ततया हृताः
शिशिरमहसो बिम्बादस्मादसंशयमंशवः ॥

व्याहतइति। पूर्वार्थस्य स्तुतेर्निन्दाया वा परार्थेन स्तुत्या निन्दया वा विरोधो व्याहत इत्यर्थः। स्तुत्यरूपेण निन्दायां निन्द्यरूपेण वा स्तुतौ व्याहतिरिति भावः। सहस्रेति। कमलसादृश्येन स्तुत्यस्य मुखस्योपमानाभावप्रदर्शनेन कमलसादृश्यमेव निन्द्यतारूपं प्रतीयते, तत्र विरोध इति।

'देवि! त्वन्मुखपङ्कजेन शशिनः शोभातिरस्कारिणा।
पश्याऽब्जानि जितानि तानि सहसा गच्छन्ति विच्छायताम् ॥'

इत्युदाहरणं स्पष्टम्। अत्र पङ्कजत्वेनैव स्तुत्यस्य तेनैव निन्द्यत्वात्।

निन्द्यत्वेनैव स्तुतौ यथा—

गोस्तनी मधु पीयूषमस्तु लोकमनोमुदे।
मदनोन्मत्तचार्वङ्गीवचोमधु मुदे मम ॥

अत्र मधुत्वेन निन्दा स्तुतिश्च। पुनरुक्तमाह—कुत इति। अत्र केनोपमीयत

इत्यस्यानुषङ्गः, पुनरुक्त इत्यस्यावृत्तिश्च । चन्द्रो यस्य मुखस्य पुनरुक्तो व्यर्थः, तस्य मुखस्य कुत उपमा । अयमर्थः 'केनोपमीयत' इत्यनेन पुनरुक्त इत्याशयः । यद्वा 'केनोपमीयत' इत्यनुषङ्गं विनापि 'कुतस्तस्योपमा' इत्यनेनोपमानिषेधात्तद्बाधकस्य व्यर्थत्वमर्थसिद्धमिति श्लोके तदुक्तिः पुनरुक्तिरित्यर्थः । यथा वा—

नाभूदभूमिः स्मरसायकानां नासीदगन्ता कुलजः कुमारः ।
नाऽस्थादपन्था धरणेः कणोऽपि व्रजेषु राज्ञां युगपद् व्रजत्सु ॥

अत्र 'व्रज'त्स्विति 'नासीदगन्ते'ति पुनरुक्तम् । अयं च भीताश्वासनादौ गुण इत्यनित्यदोषः ॥ ३०–३१ ॥

दुष्क्रमग्राम्यसन्दिग्धास्त्रयो दोषाः क्रमादमी ।
त्वद्भक्तः कृष्ण ! गच्छेयं नरकं स्वर्गमेव वा ॥ ३२ ॥
एकं मे चुम्बनं देहि तव दास्यामि कञ्चुकम् ।
ब्रूत किं सेव्यतां चन्द्रमुखीचन्द्रकिरीटयोः ॥ ३३ ॥

दुष्क्रमेति । अनुचितक्रमेणाभिधानविषयत्वं दुष्क्रमत्वम् । वैदग्धीराहित्येनोच्यमानार्थत्वं ग्राम्यत्वम् । वक्तृतात्पर्यनिश्चये प्रमाणान्तरापेक्षित्वं सन्दिग्धत्वम् । क्रमेणोदाहरणान्याह । त्वद्भक्त इति । अत्र नरकस्यादावुक्तिः । 'स्वर्गं नरकमेव वे'ति युक्तम् । यथा वा—

भूपालरत्न ! निर्दैन्यप्रदानप्रथितोत्सव ! ।
विश्राणय तुरङ्गं मे मातङ्गं वा मदालसम् ॥

अत्र प्रार्थितबहुमूल्यवस्तुप्राप्तव्यत्वसम्भावनयाऽल्पमूल्यवस्तुप्रार्थनस्योचितत्वेन मातङ्गयाचनोत्तरं तुरङ्गयाचनस्य युक्तत्वम् । 'एकं मे' इति ग्राम्योक्तिः । अत्र चुम्बनादिपदानामग्राम्यत्वेऽपि तादृशार्थस्याविदग्धपुरुषवाक्यार्थतया ग्राम्यत्वमित्याशयः । ब्रूतेति । अत्र तात्पर्यविषयनिश्चये प्रमाणान्तरापेक्षा ॥ ३२–३३ ॥

अनौचित्यं कीर्तिलतां तरङ्गयति यः सदा ।
प्रसिद्ध्या विद्यया वापि विरुद्धं द्विविधं मतम् ॥ ३४ ॥
न्यस्तेयं पश्य कन्दर्पप्रतापधवलद्युतिः ।
केतकी शिखरे शम्भोर्धत्ते चन्द्रकलातुलाम् ॥ ३५ ॥

अनौचित्यमिति । अनौचित्यम् अयोग्यसम्बन्धः । कीर्तिलतायास्तरङ्गसम्बन्धाऽयोग्यत्वात् । प्रसिद्ध्येति । कविप्रसिद्ध्येत्यर्थः । तेन कविप्रसिद्धिविरोध एव दोषो न लोकान्तरप्रसिद्धिविरोध इत्याशयः । विद्ययेति । शास्त्रेणेत्यर्थः । आद्योदाहरणम्—न्यस्तेति । अत्र प्रतापस्य धवलद्युतिः कविप्रसिद्धिविरुद्धा । प्रतापद्युतिस्तु कवि-

प्रसिद्धेति लोकप्रसिद्धिविरोधेपि न दोषः । यथा वा--

जानेऽमुना कर्णलतामयेन पाशद्वयेन च्छिदुरेतरेण ।
एकाकिपाशं वरुणं विजिग्येऽनङ्गीकृतायासततो रतीशः ॥

कामस्य पाशः कविप्रसिद्धिविरुद्धः । द्वितीयोदाहरणम्- केतकीति । शम्भुशेखरे केतकी पुराणविरुद्धा ।

विधाय दूरे केयूरमनङ्गाङ्गणमङ्गना ।
बभार कान्तेन कृतां करजक्षतमालिकाम् ॥

अत्र कामशास्त्रविरोधः । एवं शास्त्रान्तरविरोध ऊह्यः । अत्र काव्यप्रकाशे अनवीकृतत्वं दोषः । तच्च बहुशः प्रतिपाद्यस्यार्थस्यैकयोक्त्या कथनम् । यथा—

प्राप्ताः श्रियः सकलकामदुघास्ततः किं
दत्तं पदं शिरसि विद्विषतां ततः किम् ।
सन्तर्पिताः प्रणयिनो विभवैस्ततः किं
कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥

इति । तत्तु कथितपदान्तर्गतमिति नोक्तम् ॥ ३४-३५ ॥

सामान्यपरिवृत्तिमाह—

**सामान्यपरिवृत्तिः स्यात्कुण्डलच्छविविग्रहा ।**
**विशेषपरिवृत्तिः स्याद्वनिता मम चेतसि ॥ ३६ ॥**

सामान्येति । अपेक्षितार्थसमर्थकसामान्यरूपोक्तित्यागेनाऽनपेक्षितविशेषोपादानमित्यर्थः । कुण्डलच्छवीति लक्ष्यम् । कनकालङ्कारविशेषः कुण्डलम् । विग्रहे कनककान्तेर्विवक्षणेनाऽपेक्षितकनकसामान्यरूपत्यागेन विशेषरूपकुण्डलोक्तिः । यथा वा—

कल्लोलवेल्लितदृषत्परुषप्रहारै रत्नान्यमूनि मकरालय ! मा वमंस्थाः ।
किं कौस्तुभेन विहितो भवतो न नाम याच्ञाप्रसारितकरः पुरुषोत्तमोऽपि ॥

अत्र सर्वरत्नसाधारणधर्मेण कौस्तुभस्योपकारकत्वे वाच्ये कौस्तुभत्वविशेषधर्मेणोक्तमिति सामान्यपरिवृत्तिः । 'एकेन किं न भवतो विहितो न नामे'ति युक्तम् । विशेषपरिवृत्तिरिति । अपेक्षितविशेषत्यागेनाऽनपेक्षितसामान्याभिधानमित्यर्थः । वनितेति लक्ष्यम् । अत्र वनितात्वसामान्येन सर्ववनितानामिच्छाविषयत्वासम्भवात् वल्लभात्वादिरूपेणापेक्षितविशेषाभिधानत्यागः । यथा वा—

श्यामां श्यामलिमानमानयत भोः ! सान्द्रैर्मषीकूर्चकै-
स्तन्त्रं मन्त्रमथ प्रयुज्य हरत श्वेतोत्पलानां श्रियम् ।
चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके
येन द्रष्टुमहं क्षमे दश दिशस्तद्वक्त्रमुद्राङ्किताः ॥

अत्र तमस्विन्याः श्यामतया श्यामीकरणासम्भवात् रात्रिविशेषो विरहिदुःखदो

वाच्यस्तत्परित्यागः । एतेन काव्यप्रकाशोक्तयोः सनियमानियमपरिवृत्तिदोषयो-रप्यत्रैवान्तर्भावः । अनियमः सामान्यं सनियमो विशेषः तत्परिवृत्तिस्तत्त्यागः । तथा साकाङ्क्षदोषस्यापि न्यूनपदत्वेऽन्तर्भावः । तथा अनुपयुक्तस्थाने समर्पितार्थकत्वरूपा-ऽपदयुक्तत्वमपि व्याहतान्तर्गतमित्येते नोक्ताः ॥ ३६ ॥

द्वौ स्तः सहचराऽचारुविरुद्धान्योन्यसङ्गती ।
ध्वाङ्क्षाः सन्तश्च तनयं स्वं परं वा न जानते ॥ ३७ ॥
सरोजनेत्र ! पुत्रस्य मुखेन्दुमवलोकय ।
पालयिष्यति ते गोत्रमसौ नरपुरन्दरः ॥ ३८ ॥

द्वाविति । सहचराचारुत्वं विरुद्धान्योन्यसम्बन्धश्चेति द्वौ दोषावित्यर्थः । सह-चरेति भावप्रधानो निर्देशः । अचारुसाहचर्यमित्यर्थः । तच्च स्तूयमानैरुत्कृष्टैः सह निकृष्टस्य, निन्द्यमानैर्निकृष्टैः सहोत्कृष्टस्य चैकक्रियान्वयः । ध्वाङ्क्षा इति लक्ष्यम् । ध्वाङ्क्षाः काकाः । स्तूयमानैः सद्भिः काकैः साहचर्यं निकृष्टसाहचर्यम् । यथा वा—

दुष्टसङ्गेन दौःशील्यं विपत्तिर्व्यसनेन च ।
अपथ्यचर्यया व्याधिर्विद्याऽभ्यासेन वर्धते ॥

*अयमलङ्कारदोषेऽन्तर्गतः* (१) । विरुद्धसम्बन्धमुदाहरति—सरोजनेत्रेति । अयमेव प्रकाशितविरुद्ध इति काव्यप्रकाशोक्तिः । अत्र सरोजानामिन्दुसम्बन्धो विरुद्धः पुरन्दरस्य गोत्रपालनं च । अत्र विध्ययुक्तत्वमनुवादायुक्तत्वं च दोषद्वयमधिक-मुक्तं काव्यप्रकाशे, तदविमृष्टविधेयांशाद्भग्नप्रक्रमाद्वा न भिन्नम् । अश्लीलत्वं च नार्थदोष इत्यङ्गीकृत्य नोक्तम् ॥ ३७–३८ ॥

पदे पदांशे वाक्यांशे वाक्ये वाक्यकदम्बके ।
यथावकाशमभ्यूहेद्दोषान् शब्दांशसंश्रयान् ॥ ३९ ॥

पद इति । पदे सुबन्ततिङन्तादौ, पदांशे प्रत्ययादौ, वाक्यांशे समासे खण्ड-वाक्ये च, वाक्ये महावाक्ये, वाक्यकदम्बके प्रबन्धे, यथावकाशं यथासम्भव-मित्यर्थः । श्रुतिकटुत्वं पदादिसर्वगतम् । च्युतसंस्कृतित्वासमर्थत्वनिरर्थकत्वानां पद-निष्ठत्वमेव । *वाक्ये वाच्यभावेन अवाचकत्वमपि पदतदेकदेशनिष्ठमेव*(२)। क्लिष्टत्वं समासनिष्ठमेव । अविमृष्टविधेयांशत्वं विरुद्धमतिकृत्त्वमपि तथैव । 'न्यक्कारो ह्ययमेव मे यदरयः' इत्यत्र वाक्यगतमविमृष्टविधेयांशत्वम् । सङ्कीर्णत्वं तु वाक्यगतमेव । अस्थानस्थपदत्वं पदगतमेव *न वाक्यगतम् । दूरान्वयरूपस्य पदस्य पदे 'सङ्कीर्णे

(१) *एतच्चिह्नाङ्कितं नास्ति क-पुस्तके ।
(२) चिह्नाङ्कितोंऽशो नास्ति क-पुस्तके ।

वाऽन्तर्भावात्* (१)। एवमन्यदप्यूह्यम्। क्रमेणोदाहरणानि—वीप्सोत्सर्पन्मुखाद्राद्रिं बर्हीं जहे कुशस्तृणम्।' अत्र समासगतम् 'आद्राद्रि'मिति, पदैकदेशगतं 'बर्हीं जहे' इति। 'दैवत' इत्युदाहृतमप्रयुक्तं प्रत्ययगतमिति पदैकदेशनिष्ठम्। समासगतं तु—

स रातु वो दुश्च्यवनो भावुकानां परम्पराम्।
अनेडमूकताद्यैश्च द्यतु दोषैरसंमतान्॥

अनेडमूकता मूकबधिरतेति समासोऽप्रयुक्तः। बहुधाऽन्यानि उक्तोदाहरणेष्वेव समासगतान्युदाहृतानि। तान्येव विश्लेषे पदद्वारेणैव वाक्यगतानीति न भिन्नान्युदाह्रियन्ते। वाक्यगतमविमृष्टविधेयांशं यथा—

आनन्दजाश्रुभिरनुस्रियमाणमार्गान्
प्राक् शोकनिर्गमितनेत्रपयःप्रवाहान्।
चक्रे स चक्रनिभचङ्क्रमणच्छलेन
नीराजनां जनयतां निजबान्धवानाम्॥

अत्र द्वितीयचरणार्थस्योद्देश्यस्य प्राथम्यमपेक्षितमिति रचनानिष्ठो दोषः। पदांशे तु समासनिष्ठमेव। पदांशे निरर्थकं यथा—

आदावञ्जनपुञ्जलिप्तवपुषां श्वासानिलोल्लासित-
प्रोत्सर्पद्विरहानलेन च ततः सन्तापितानां दृशाम्।
सम्प्रत्येव निषेकमश्रुपयसा देवस्य चेतोभुवो
भल्लीनामिव पानकर्म कुरुते कामं कुरङ्गेक्षणा॥

अत्र 'दृशा'मिति बहुवचनमात्मनेपदं च।

दमस्वसुः सेयमुपैति तृष्णा जिष्णोर्जगत्यग्रिमलेखलक्ष्मीम्।
दृशां यदङ्घिस्तव नाम दृष्टिस्त्रिभागलोभातिमसौ बिभर्ति॥

अत्र न निरर्थकम्। अवाचकं यथा—

चापाचार्यस्त्रिपुरविजयी कार्तवीर्यो विजेयः
शस्त्रव्यस्तः सदनमुदधिर्भूरियं हन्तकारः।
अस्त्येवैतत्किमु कृतवता रेणुकाकण्ठबाधां
बद्धस्पर्धस्तव परशुना लज्जते चन्द्रहासः॥

अत्र 'विजेय' इति कृत्यप्रत्ययः क्तप्रत्ययार्थस्यावाचकः। विरुद्धमतिकृद्यथा—

दृशाद्वयी ते विधिनाऽस्ति वञ्चिता मुखस्य लक्ष्मीं तव यन्न वीक्षते।
असावपि श्वस्तदिमां नखानने विलोक्य साफल्यमुपैतु जन्मनः॥

अत्र द्विवचनं नेत्रचतुष्टयप्रतीतिकृत्। एवमन्यान्युदाहर्तव्यानि। वस्तुतोऽप्रयुक्तनिहतार्थावाचकान्यसमर्थान्तर्गतान्येवेति न भिन्नान्युदाहर्तव्यानि॥ ३९॥

---

(१) इयानंशो नास्ति ख-पुस्तके।

इदानीमुक्तदोषाणामपवादं वक्तुं दोषाङ्कुशलक्षणमाह—

दोषमापतितं स्वान्ते प्रसरन्तं विशृङ्खलम् ।
निवारयति यस्त्रेधा दोषाङ्कुशमुशन्ति तम् ॥ ४० ॥

दोषमिति । स्वान्ते आपतितं ज्ञातं विशृङ्खलं प्रसरन्तं प्रतिबन्धकाभावेनार्थाऽवबोधरसोत्पत्तिप्रतिबन्धेन वा दोषत्वेन निश्चितं त्रेधा प्रकार(त्रय)रूपेण निवारयति, स दोषाङ्कुशो दोषापवाद इत्यर्थः ॥ ४० ॥

प्रकारत्रयमाह—

दोषे गुणत्वं तनुते दोषत्वं वा निरस्यति ।
भवन्तमथवा दोषं नयत्यत्याज्यतामसौ ॥ ४१ ॥

दोष इति । गुणत्वज्ञानं कविसमयकृतदोषाभावत्वज्ञानं श्लेषानुप्रासादिनिर्वा तयाऽऽवश्यकत्वरूपात्याज्यत्वज्ञानं वेत्यर्थः ॥ ४१ ॥

तत्राद्योदाहरणमाह—

मुखं चन्द्रश्रियं धत्ते श्वेतश्मश्रुकराङ्कुरैः ।
अत्र हास्यरसोद्देशे ग्राम्यत्वं गुणतां गतम् ॥ ४२ ॥

मुखमिति । हास्यरसपोषकत्वाद् ग्राम्यत्वस्य गुणत्वम्, स्त्रीविदूषकाद्युक्तौ च । एवं कुपितोक्तौ वर्णनीये नृसिंहादौ रौद्ररसपोषकत्वात् श्रुतिकटुत्वं कष्टत्वं च गुणः । एवं तत्तच्छास्त्राभिज्ञे बोद्धरि वक्तरि वाऽप्रतीतत्वम् । एवमश्लीलं सुरतगोष्ठीषु शमकथासु वैराग्यजनिकासु शापाद्युक्तौ च गुणः । *नियतार्थप्रतिपत्तेर्व्याजस्तुत्यादिपर्यवसायित्वे सन्दिग्धं गुणः* (१) । हर्षभयादियुक्तवक्तृवाक्ये न्यूनाधिकपदत्वं वा गुणः । यथा—

ममासनार्धं भव मण्डनं, न न, प्रिये ! मदुत्सङ्गविभूषणं भव ।
अहं अ[illegible]दाऽलपमङ्ग ! मृष्यतां विना ममोरः कतमत्तवासनम् ॥

लाटानुप्रासेऽर्थान्तरसङ्क्रमितवाच्ये विहितानुवादे च कथितपदत्वं गुणः । स्वरूपाख्यापको यत्रान्तिमो भावस्तत्र पतत्प्रकर्षं गुणः । एवमन्यत्राप्यूह्यम् ॥ ४२ ॥

द्वितीयस्य 'दोषत्वं वा निरस्यति' इत्यस्योदाहरणमाह—

तव दुग्धाब्धिसम्भूतेः कथं जाता कलङ्किता ।
कवीनां समयाद्विद्याविरुद्धोऽदोषतां गतः ॥ ४३ ॥

तवेति । चन्द्रस्य दुग्धसमु सम्भवस्य कविसमयेन दोषाभावमात्रं न गुणत्वम्, रसादिपरिपोषकत्वाभावात् । एवं पुनरुक्तिरपि क्वचिन्न दोषः । यथा—अवतंसकुण्डलशेखरज्यादिपदानां कर्णावतंसकर्णभूषणशिरोऽवतंसधनुर्ज्यावाचित्वेऽपि । 'अस्याः कर्ण-

(१) चिह्नान्तर्गतं नास्ति क-पुस्तके ।

वतंसेन जितं सर्वं विभूषणम् ।' इत्यादौ पुनः कर्णादिपदप्रयोगे कर्णस्थितित्वरूपार्थ-विशेषगमकतया दोषाभावः । अत एव 'ज्याबन्धनिष्पन्दभुजेने'त्यादौ न धनुरारूढत्व-प्रत्ययः । एवं नीरसे श्रुतिकटुत्वकष्टत्वयोर्न दोषत्वम्, दूषकताबीजाभावात् । एवं यत्रान्तिमो भागो वाक्यार्थान्तरप्रतिपत्तिकृत्, यत्र वा हेतुप्रतिपादकं विशेषणम्, तत्र समाप्तपुनरात्तत्वं न दोषः ॥ ४३ ॥

तृतीयोदाहरणमाह—

**दधार गौरी हृदये देवं हि—मकराङ्कितम् ।**
**अत्र श्लेषोदयान्नैव त्याज्यं हीति निरर्थकम् ॥ ४४ ॥**

दधारेति । हिकारस्य श्लेषनिर्वाहकतया आवश्यकत्वात् । यथा वा—

पत्यौ वृते तयाऽन्यस्मिन् यदर्थं गतवानसि ।
उद्वेगेन विमानेन किमनेनापि—धावता ॥

अत्र अपि पदं 'न विद्यते पिधा यस्ये'ति श्लेषनिर्वाहकम् । एवमप्रयुक्तनिहतार्थयो-रपि न दोषत्वम् । यथा—

येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृता
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गां च योऽधारयत् ।
यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामाऽमराः
पायात्स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः ॥

अत्र माधवपक्षे शशिमदन्धकक्षयकरशब्दावप्रयुक्तनिहतार्थौ । एवमन्यदप्यूह्यम् । इदमुपलक्षणम्, अनुकरणे सर्वेषां दोषाणामदूषकत्वात् । यथा—

भवद्दासो दीनः क्षुदुपशमहेतोः प्रतिदिनं
भवान् भिक्षां देहीत्यविरतमवोचं यदवचः ।
न तत्ते लज्जायै भवति नटतः प्रोज्झ्य वसनं
परं त्वां वा मृष्यत्यहह ! जगदम्बा कथमिव ॥

अत्र भवच्छब्दयोगे मध्यमपुरुषच्युतसंस्कृतिरनुकरणत्वान्न दोषः । न चाऽनुक-रणस्य परोक्त्यनुवादरूपतया नेदमनुकरणमिति वाच्यम्, लाववादुक्त्यनुवादस्यैवानु-करणत्वात् । 'भिक्षां यच्छत्विति परमवोच'मिति पाठे तु न दोषः । एवमन्यत्राप्यू-ह्यम् । एवम् उक्तरसदोषाणां क्वचिदपवादो मूलेऽनुक्तोऽपि सुधीभिरूह्यः । कश्चित्तूच्यते—

अन्याङ्गत्वेन बोध्यत्वेनोक्तौ दोषो न कस्यचित् ।

कस्यचिद् व्यभिचारिणो रसस्य स्थायिभावादेः शब्देनोक्तौ न दोष इत्यर्थः । यथा—

औत्कण्ठ्यलज्जादरमन्थरं ते प्रेङ्खत्पदाब्जं शयने रसेन ।
निद्राभरं मोचयितुं न्यवेशि हा ! हन्त !! तत्तन्वि ! मयैव दग्धम् ॥

अत्र व्यभिचारिभावानामौत्कण्ठ्यादीनामन्याङ्गत्वात् शृङ्गारस्य करुणाङ्गत्वात्

करुणरसस्य बोध्यत्वेन वा शब्देनोक्तावपि न दोषो रसावबोधप्रतिबन्धाभावादङ्गिनो रसस्य पोषाच्च । एवमलङ्कारदोषा मूलेऽनुक्ता अपि स्वयमूह्याः । केचिदुच्यन्ते । तत्र शब्दालङ्कारदोषाः—

प्रसिद्ध्यभावो वैफल्यं प्रातिकूल्यं रसस्य च ।
पादहीनत्वमित्येषां शब्दालङ्कारदुष्टता ॥

यथा—

कुबेरः कूबराग्रं च चक्री चक्रे हारहरीन् ।
यस्य स्तौति, स वो दद्यात् शिवस्य स्यन्दनः शिवम् ॥

अत्रेदृशी स्तुतिरनुप्रासानुरोधेनैव कृता न तु पुराणादिषु प्रसिद्धेति प्रसिद्ध्यभावः। येनानुप्रासादिना वाच्यस्य चारुत्वं न प्रतीयते स विफलः । यथोदाहरिष्यमाणे वृत्त्यनुप्रासे 'अमन्दानन्दसन्दोहस्वच्छन्दास्पन्दमन्दिरम् ।' इति रसप्रतिकूलवर्णघटिताऽनुप्रासादित्वं रसप्रातिकूल्यम् । यथोदाहरिष्यते ।

वीप्सोत्सर्पन्मुखार्द्रार्द्रे बर्ही जह्रे कृशस्तृणम् ।
ललना रसस्धं धत्ते घनाटोपे महीयसि ॥

अत्र शृङ्गारप्रतिकूलवर्णता । अनुप्रासयमकादेरेकस्मिन् पादादाववृत्तित्वं पादहीनत्वम् । यथाऽत्रैवोत्तरार्धेऽनुप्रासहीनत्वम् । एवं यमकादिहीनत्वमवसेयम् । यथा वा—

अहह ! सह मयोना श्रीप्रतिष्ठासमाने
निलयमपि नलेऽथ स्वं प्रतिष्ठासमाने ।
अपतदमरभर्तुर्मूर्ध्नि तिबद्धेव कीर्ति-
र्गलदलिमधुबाष्पा पुष्पवृष्टिर्नभस्तः ॥

एते च प्रसिद्धिविरुद्धाऽपुष्टार्थत्वाप्रयुक्तत्वान्तर्गता इति काव्यप्रकाशः । एवमर्थालङ्कारदोषाः ।

जातिप्रमाणधर्माणां न्यूनत्वाधिक्ययोरपि ।
अप्रसिद्ध्या च वचनलिङ्गभेदेन वा पुनः ॥
कालस्य पुंसश्च विधेर्भेदो वैरूप्यमेव च ।
उपमानस्य दुष्टत्वमुपमादिषु दुष्टता ॥

क्रमेणोदाहरणानि—

चण्डालैरिव युष्माभिः साहसं परमं कृतम् ।
वह्निस्फुलिङ्गक इव भानुरस्ति प्रकाशकृत (१) ॥

इदं न्यूनोपमम् ।

अयं पद्मासनासीनश्चक्रवाको विराजते ।
युगादौ भगवान् वेधा विनिर्मित्सुरिव प्रजाः ॥

१ वह्निस्फुलिङ्ग इव भानुरयं चकास्ति–इति ख ।

पातालमिव नाभिस्ते स्तनौ क्षितिधरोपमौ ।
वेणीदण्डः पुनरपि कालिन्दीपातसन्निभः ॥

इदमधिकोपमम् ।

पिशङ्गमौञ्जीयुजमर्जुनच्छविं वसानमेणाजिनमञ्जनद्युति ।
कर्पूरसारद्युतिराजिहश्रियं विडम्बयन्तं शितिवाससस्तनुम् ॥

अत्रोपमानस्य मौञ्जीस्थानीयो धर्मो नोक्तः, उपमेये च गौरत्वमनुक्त्वैवोपमाने उक्तमिति धर्मतो न्यूनाधिकोपमत्वम् । 'सुवर्णसूत्राकलिताधराम्बरा'मिति पाठे तु न दोषः । 'चिन्तारत्नमिव च्युत' इत्यादौ लिङ्गभेदः । 'सक्तवो भक्षिता देव ! शुद्धाः कुलवधूरिव ।' इत्यादौ वचनभेदः ।

अतिथिं नाम काकुत्स्थात्पुत्रमाप कुमुद्वती ।
पश्चिमाद्यामिनीयामात्प्रसादमिव चेतना ॥

इत्यत्र यथा चेतना प्रसादमाप्नोति तथेयं पुत्रमापेति कालभेदः । 'विभ्राजसे मकरकेतनमर्चयन्ती बालप्रवालविटपप्रभवा लतेव ।' इत्यत्र 'लता विभ्राजते' इति सम्बोध्यमाननिष्ठत्याऽसम्बोध्यमानोपमाननिष्ठतया व्यत्यासात् पुरुषभेदः । 'गङ्गेव प्रवहतु ते सदैव कीर्ति'रित्यादौ 'प्रवहतो'ति विधिभेदः । 'नक्तेन भायाः शशिना निशेव त्वया स भायान्निशया शशीव ।' इति च । 'ग्रथ्नामि काव्यशशिन'मित्यादौ प्रसिद्धय-भावाद्विरूपता, 'जाज्वल्यमाना इव वारिधाराः' इत्यादावसम्भवात् । इत्युपमा-दोषाः । एवमुत्प्रेक्षायां साधर्म्यमात्रवाचकसम्भावनाद्यवाचकयथापदसमभिव्याहारो दोषः । बहुधा सर्वेऽप्यलङ्कारा उपमागर्भा एवेति तद्दोषैरेव सर्वेषामलङ्काराणां दोषा ज्ञेयाः । एतेषां चाऽनुचितार्थत्वन्यूनाधिकपदत्वभग्नप्रक्रमत्वष्वन्तेति काव्य-प्रकाशः ॥ ४४ ॥

**महादेवः सत्रप्रमुखमखविद्यैकचतुरः**
**सुमित्रा तद्भक्तिप्रणिहितमतिर्यस्य पितरौ ।**
**द्वितीयस्तेनासौ सुकविजयदेवेन रचिते**
**चिरं चन्द्रालोके सुखयतु मयूखः सुमनसः ॥ ४५ ॥**

इति श्रीपीयषवर्षपण्डितजयदेवविरचिते चन्द्रालोकालङ्कारे दोषविचारो नाम द्वितीयो मयूखः ।

विश्वेश्वरापराख्यस्य गागाभट्टमनीषिणः ।
चन्द्रालोकमयूखेऽभूद् द्वितीये विवृतिः शुभा ॥

इति मीमांसकगागाभट्टकृतौ चन्द्रालोकटीकायां राकागमे द्वितीयो [मयू]खः

## तृतीयो मयूखः ।

काव्यलक्षणोद्देशक्रमेण लक्षणान्याह—

**अल्पाक्षरा विचित्रार्थख्यातिरक्षरसंहतिः ।**
**उषाकान्तेनाऽनुगतः शूरः शौरिरयं पुनः ॥ १ ॥**

अल्पाक्षरेति । बह्वर्थप्रत्यायकाल्पाक्षरत्वमक्षरसंहतित्वम् । उदाहरणम्—उषाकान्तेनेति । अनिरुद्धेनेत्यर्थः । उषाकान्तपदं बाणपुरवृत्तपौरुषस्मारकम् ।

अपायि मुनिना पुरा पुनरमायि मर्यादया
व्यतारि कपिना पुरा पुनरशोषि कल्पाग्निना ।
अमन्थि सुरवैरिणा पुनरबन्धि लङ्कारिणा
क्व नाथ ! वसुधापते ! तव यशोऽम्बुधिः काम्बुधिः ॥

अत्र तैस्तैः पदैर्नानापुराणस्थकथानां स्मरणम् । अयं समासोक्तिभेद इति कश्चित् ॥ १ ॥

**शोभा ख्यातोऽपि यद्दोषो गुणकीर्त्या निषिध्यते ।**
**मृषा निन्दन्ति संसारं कंसारिर्यत्र पूज्यते ॥ २ ॥**

शोभेति । गुणकथनेन दोषतिरस्कारः शोभेत्यर्थः । यथा वा—

श्यामानां खलु गोकुलेषु वसतिः सख्यं गवामर्भकैः
किञ्च ग्राम्यजनैः समं व्यवहृतिः श्लिष्टा तथाऽश्लीलगीः ।
आसां यद्यपि दुग्धगन्धि वसनं रूपं विदग्धेतरं (?)
वैदग्ध्यं न, तथाप्यमूः स्मरचमूप्राया हरिप्रेमतः ॥

**अभिमानो विचारश्चेदूहितार्थनिषेधकृत् ।**
**इन्दुर्यदि कथं तीव्रः सूर्यो यदि कथं निशि ॥ ३ ॥**

अभिमान इति । कल्पितार्थप्रतिषेधकयुक्त्युपन्यासोऽभिमान इत्यर्थः । यथा वा—

न मन्मथस्त्वं स हि नास्तिमूर्तिर्न चाश्विनेयः स हि नाऽद्वितीयः ।
चिन्हैः किमन्यैरथवा तवेयं श्रीरेव ताभ्यामधिको विशेषः ॥–॥३॥

**हेतुस्त्यक्त्वा बहूनर्थान् यत्रैकस्यावधारणम् ।**
**नेन्दुर्नार्कोऽयमौर्वाग्निः सागरादुत्थितो दहन् ॥ ४ ॥**

हेतुरिति । अन्यदूषणेनैकपक्षावधारणं हेतुरित्यर्थः । अत्र चन्द्रत्वस्य 'दहन्'नित्यनेनार्कत्वस्य 'सागरादुत्थित' इत्यनेन निरासपूर्वकमौर्वत्वस्थापनम् । अयमपन्हुतिभेद इति कश्चित् ॥ ४ ॥

प्रतिषेधः प्रसिद्धानां कारणानामनादरः ।
न युद्धेन भ्रुवोः स्पन्देनैव वीरा निवारिताः ॥ ५ ॥

प्रतिषेध इति । प्रसिद्धकारणाऽनादरेणाप्रसिद्धकारणादरः प्रतिषेध इत्यर्थः । युद्धस्य प्रसिद्धं कारणत्वं भ्रूस्पन्दस्य त्वप्रसिद्धम् । अयं हेत्वपन्हुत्यन्तर्गतः ॥ ५ ॥

निरुक्तं स्यान्निर्वचनं नाम्नः सत्यं तथाऽनृतम् ।
ईदृशैश्चरितै राजन् ! सत्यं दोषाकरो भवान् ॥ ६ ॥

निरुक्तमिति । नाम्नो निर्वचनमवयवार्थकथनद्वारा तदुत्पत्तिदर्शनं निरुक्तम् । तद् द्विधा—व्याकरणसाध्यं सत्यं प्रसिद्धावयवार्थकं वा, तदसाध्यं मिथ्या स्वकल्पितावयवार्थकं वा । ईदृशैरिति । अत्र 'दोषाणामाकर' इति व्याकरणसाध्यत्वात्सत्यम् । रञ्जनाद्राजेति व्युत्पत्तिं मनसि निधाय 'राज'न्निति तदसाध्यत्वान्मिथ्या । 'राजृ दीप्ता'विति धातो राजपदस्य निष्पत्तेः ।

यत्तव स्तवविधौ विधिरास्यैश्चतुरीं चरति तच्चतुरास्यः ।
त्वय्यशेषविदि जाग्रति शर्वः सर्वविद्ब्रुवतया शितिकण्ठः ॥

यथा वा—

हरिं परित्यज्य नलाभिलाषुका न लज्जसे वा विदुषिब्रुवा कथम् ।
उपेक्षितेक्षोः करभाच्छमीरतादुरुं वदे त्वां करभोरु ! ओरिति ॥

इदं सत्यम् ।

यस्माच्चण्डं च मुण्डं च गृहीत्वा त्वमुपागता ।
चामुण्डेति ततो लोके ख्याता देवि ! भविष्यसि ॥

इति मिथ्या ।

यथा प्रह्लादनाच्चन्द्रः प्रतापात्तपनो यथा ।
तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात् ॥

इति च ॥ ६ ॥

स्यान्मिथ्याध्यवसायश्चेदसती साध्यसाधने ।
चन्द्रांशुसूत्रग्रथितां नभःपुष्पस्रजं वह ॥ ७ ॥

स्यादिति । साध्यसाधनयोर्मिथ्याभूतयोः कथनं मिथ्याध्यवसायः । चन्द्रकिरणसूत्रग्रथनं कारणमाकाशपुष्पमाला कार्यम् , उभयोरप्यसत्यत्वादित्यर्थः । तथा च—

स्वर्भानुप्रतिवारपारणमिलद्दन्तौघयन्त्रोद्भव-
श्वभ्रालीपतयालुदीधितिसुधासारस्तुषारद्युतिः ।
पुष्पेष्वासनतल्पियापरिणयानन्दाभिषेकोत्सवे
देवः प्राप्तसहस्रधारकलशश्रीरस्तु नस्तुष्टये ॥—॥ ७ ॥

सिद्धिः ख्यातेषु चेन्नाम कीर्त्यते तुल्यतोक्तये ।
युवामेवेह विख्यातौ त्वं बलैर्जलधिर्जलैः ॥ ८ ॥

सिद्धिरिति । तुल्यतासिद्ध्यर्थं प्रसिद्धसाहचर्येण कथनं सिद्धिरित्यर्थः । यथा वा—

दुदोह गां स यज्ञाय सस्याय मघवा दिवम् ।
सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयम् ॥

अयमपि 'गुणोत्कृष्टैः समीकृत्य वचोऽन्या तुल्ययोगिते'ति तुल्ययोगितालङ्कारान्तर्गत इति कश्चित् ॥ ८ ॥

युक्तिर्विशेषसिद्धिश्चेद्विचित्रार्थान्तरान्वयात् ।
नवस्त्वं नीरदः कोऽपि स्वर्णैर्वर्षसि यन्मुहुः ॥ ९ ॥

युक्तिरिति । विचित्रकर्मकथनेनोपमानापेक्षयोपमेये चमत्काराधायकविशेषसिद्धिर्युक्तिरित्यर्थः । नव इति । जलदान्तरादस्य स्वर्णवृष्ट्या वर्णनीये नीरदापेक्षया विशेषसिद्धेः । यथा वा—

एषा रतिः स्फुरति चेतसि कस्य यस्याः
सूते रतिं द्युतिरथ त्वयि वा तनोति ।
त्रैयक्षवीक्षणखिलीकृतनिर्जरत्व-
सिद्धायुरध्वमकरध्वजसंशयं कः ॥

अयं व्यतिरेकालङ्कारभेद इति कश्चित् ॥ ९ ॥

कार्यं फलोपलम्भश्चेद् व्यापाराद्वस्तुनोऽथ वा ।
असावुदेति शीतांशुर्मानच्छेदाय सुभ्रुवाम् ॥ १० ॥

कार्यमिति । व्यापाराद्वस्तुनो वा यत्र कार्यकथनं तत्कार्यम् । असाविति । चन्द्रस्य स्वतः उदयव्यापारेण च मानच्छेदफलजनकत्वं प्रसिद्धम् । नायके तत्फलवर्णनम् । अयं परिणामालङ्कारान्तर्गत इति कश्चित् ॥ १० ॥

इत्यादि लक्षणं भूरि काव्यस्याहुर्महर्षयः ।
स्वर्गभ्राजिष्णुभालत्वप्रभृतीव महीभुजः ॥ ११ ॥

इत्यादीति । लक्षणं काव्यत्वज्ञापकम् । तेनैतादृशोक्तौ काव्यत्वं ज्ञेयम् । 'शुष्को वृक्षस्तिष्ठत्यग्रे' 'अग्निरत्र प्रज्वलत्यधिकच्छैः' इत्यादिषु न काव्यत्वम् । आदिना भङ्ग्यन्तरेणाप्युक्तिषु काव्यत्वाक्षतिः ।

इतो सिया भूपतिभिर्वृतं वनादटद्भिरुच्चैरटवीत्वमीयुषी ।
निजापि साऽवापि चिरात्पुनः पुरी पुनः स्वमध्यासि विलासमन्दिरम् ॥

इत्यादिषु अज्ञानादिवर्णनम् । यथा कनकतेजस्विललाटतादीनि राजचिन्हानि तथा काव्यलक्षणान्यपि बहूनीत्यर्थः ॥ ११ ॥

महादेवः सत्रप्रमुखमखविद्यैकचतुरः
सुमित्रा तद्भक्तिप्रणिहितमतिर्यस्य पितरौ ।
तृतीयस्तेनासौ सुकविजयदेवेन रचिते
चिरं चन्द्रालोके सुखयतु मयूखः सुमनसः ॥ १२ ॥

इति श्रीपीयूषवर्षपण्डितजयदेवविरचिते चन्द्रालोकालङ्कारे लक्षणविचारो नाम तृतीयो मयूखः ।

विश्वेश्वरपराख्यस्य गागाभट्टमनीषिणः ।
चन्द्रालोकमयूखेऽभूत्तृतीये विवृतिः शुभा ॥

इति मीमांसकगागाभट्टकृतौ चन्द्रालोकटीकायां राकागमे तृतीयो मयूखः ।

---

## चतुर्थो मयूखः ।

गुणान् निरूपयति—

श्लेषो विघटमानार्थघटमानत्ववर्णनम् ।
स तु शाब्दः सजातीयैः शब्दैर्बन्धः सुखावहः ॥ १ ॥

उल्लसत्तनुतां नीतेऽनन्ते पुलककण्टकैः ।
भीतया मानवत्यैव श्रियाऽऽश्लिष्टं हरिं स्तुमः ॥ २ ॥

श्लेष इति । श्लेषो द्विधा—अर्थश्लेषः शब्दश्लेषश्च । असम्भावितार्थस्य सिद्धत्वेन कथनमाद्यः, बहूनां पदानामेकवद्भासनं द्वितीय इत्यर्थः। उभयविधमुदाहरति—उल्लसदिति । इदं मानवत्या असम्भावितस्यालिङ्गनस्य सिद्धत्वेन कथनादाद्योदाहरणम् । 'नीतेऽनन्ते श्रियाऽऽश्लिष्ट'मित्येकपदवद्भानाद् द्वितीयोदाहरणम् । इदमेवानुसृत्य सरस्वतीकण्ठाभरणेऽपि श्लेषादिगुणानभिधाय,

'उक्ताः शब्दगुणा वाक्ये चतुर्विंशतिरित्यमी ॥
अथैतानेव वाक्यार्थगुणत्वेन प्रचक्ष्महे ।
तेषां श्लेष इति प्रोक्तः संविधानं सुसूत्रता' ॥

इति श्लेषस्यार्थगुणत्वमुक्तम् । न चैतस्यालङ्कारान्तर्गतिः । तस्य पर्यायपदोपस्थाप्यपृथगर्थयोरेकोच्चारणविषयत्वरूपार्थश्लेषात् पर्यायपदानुपस्थाप्यपृथगर्थयो(१)-

---

( १ ) 'पर्यायपदानुपस्थाप्यपृथगर्थयो'रित्यत्र 'भिन्नयोः शब्दयो'रिति क-पुस्तके ।

रेकोच्चारणविषयत्वरूपशब्दश्लेषादपि भेदेन प्रतीतेः । अर्थश्लेषो यथा वा—

उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो विलुलितकबरीभारमंसे वहन्त्याः ।
भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः
शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥

साहित्यदर्पणे तु—"श्लेषः क्रमकौटिल्यानुज्ज्वलत्वोपपत्तियोगरूपघटना । क्रमः क्रियासन्ततिः, विदग्धचेष्टितं कौटिल्यम्, अप्रसिद्धवर्णनाभावोऽनुज्ज्वलत्वम्, उपपादकक्रिया उपपत्तिः, एतत्प्रतिपादकसन्दर्भः श्लेषः । यथा—

दृष्ट्वा कश्चित्प्रियतमे सहकासनसंस्थिते ।
निमीलय नेत्रे कस्याश्चित् चुचुम्बान्यां रसाकुलः ॥

अत्र दर्शनादयः क्रियाः, उभयसमर्थनरूपं कौटिल्यम्, लोकव्यवहाराविरोधोऽनुज्ज्वलत्वम्, नेत्रनिमीलनादिकमुपपादकक्रिये"ति । इदमपि पूर्वोक्तश्लेषान्तर्गतमेव । "अल्पप्राणाक्षरबाहुल्यरूपशैथिल्याभावः श्लेषः । स च वैदर्भरीत्यामावश्यको न गौड-रीत्याम् । तत्रानुप्रासमात्रस्य गुणत्वात् । तेन, 'ममालि ! मालती माला लोलालि-कलिला यथा' इति गौडरीत्यां काव्यमेव, वैदर्भरीत्यां तु न काव्यम् । किन्तु 'वैदर्भ-मालतीदाम लङ्घितं भ्रमरैरिति' काव्यम् ।" इति काव्यादर्शः ॥ १-२ ॥

## यस्मादन्तःस्थितः सर्वः स्पष्टमर्थोऽवभासते ।
## सलिलस्येव सूक्तस्य स प्रसाद इति स्मृतः ॥ ३ ॥

यस्मादिति । सूक्तस्यान्तःस्थितोऽवभासते चमत्कारजनको भवति । स प्रसाद इत्यर्थः । एवं च प्रसादस्य वाक्यनिष्ठत्वमुक्तम् । अन्ये तु—"गुणानां वक्ष्यमाणरीत्या रसधर्मत्वादन्तःस्थितोऽर्थो रसो भासते तदाकारा चित्तवृत्तिर्भवतीति यावत् । तेन रसे झटिति प्रतीयमानत्वं झटिति प्रत्यायकत्वं च रचनायां स्वच्छतारूपः प्रसाद इत्यर्थः । अयं च सर्वरससाधारणः । तदुक्तम्—

समर्पकत्वं काव्यस्य यतः सर्वरसान्प्रति ।
स प्रसादो गुणो ज्ञेयः सर्वसाधारणक्रियः ॥

इति । शब्दार्थयोस्तु रसव्यञ्जकतया प्रसादवत्त्वमौपचारिक"मित्याहुः । दण्डी तु—"प्रसिद्धार्थत्वं प्रसादः । यथा—'मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोती'ति कलङ्क-वर्णनम् । अयं दाक्षिणात्यरीत्याम् । गौडरीत्यां तु निन्द्राप्रसिद्धत्वादिदं न वर्णनम् । किन्तु 'यथाऽनत्यर्जुनाऽब्जन्मसदृक्षाङ्को वलक्षगु(१)'रिति वर्णनं युक्तमित्याह ॥ ३ ॥

(१) अनत्यर्जुनं नातिश्वेतमर्थान्नीलम् अब्जन्म कमलं तेन सदृक्षस्तुल्योऽङ्कः कलङ्को यस्य तादृशो वलक्षगुश्चन्द्र इत्यर्थः ।

समताऽल्पसमासत्वं वर्णाद्यैस्तुल्यताऽथ वा ।
श्यामला कोमला बाला रमणं शरणं गता ॥ ४ ॥

समतेति । बहुसमासाभावः समता, प्रक्रान्तप्रकृतिप्रत्ययाऽविपर्यासेनार्थस्याऽविसंवादो वा समतेत्यर्थः । उभयविधस्योदाहरणं 'श्यामले'ति । यथा वा—

महो कृतार्थो यदि मानवोऽसि जितं दिवा यद्यमरेषु कोऽपि ।
कुलं त्वयाऽलङ्कृतमौरगं चेन्नाधोऽपि कस्योपरि नागलोकः ॥
यशोऽधिगन्तुं सुखमीहितुं वा मनुष्यसंख्यामतिवर्तितुं वा ।

इति । दण्डी तु—"काव्यबन्धस्त्रेधा, मृद्वक्षरस्फुटाक्षरमिश्राक्षरघटितः । मृदुत्वं चाल्पप्राणाक्षरत्वम् , स्फुटत्वं महाप्राणत्वम् । तत्तद्बन्धेषु वैषम्याभावः समत्वम् । इदमपि गौडरीत्यां नावश्यक"मित्याह ॥ ४ ॥

समाधिरर्थमहिमा लसद्घनरसात्मना ।
स्यादन्तर्विशता येन गात्रमङ्कुरितं सताम् ॥ ५ ॥

समाधिरिति । येनार्थमहिम्ना लसद्घनरसात्मना प्रतिभासमाननिबिडरसरूपेणाऽन्तर्विशता ज्ञातेन सतामालङ्कारिकाणां गात्रमङ्कुरितं रोमाञ्चवद्भवति सोऽर्थमहिमा समाधिः । तेनान्यधर्मस्यान्यत्रारोपः समाधिरित्यर्थः । रसधर्मोऽन्तःप्रवेशनादिरर्थे आरोप्यत इति । अयं च द्वेधा, अयोनिरन्यच्छायायोनिश्च । अयोनिरकारणकः । यथा—

एतद्यशःक्षीरधिपूरगाहि पतत्यगाधे वचनं कवीनाम् ।
एतद्गुणानां गणनाङ्कपातः प्रत्यर्थिकीर्तीः खटिकाः क्षिणोति ॥

द्वितीया यथा—

निजनयनप्रतिबिम्बैरम्बुनि बहुशः प्रतारिता कापि ।
नीलोत्पलेऽपि विमृशति करमर्पयितुं कुसुमलावी ॥

'अत्र नीलोत्पलनयनयोरतिसादृश्यं काव्येनोक्त'मिति साहित्यदर्पणः । आरोहाऽवरोहरूपशब्दनिष्ठोऽपि समाधिः । आरोहावरोहश्च समासतदभावौ । उदाहरणमिदमेव ॥ ५ ॥

माधुर्यं पुनरुक्तस्य वैचित्र्यं चारुतावहम् ।
वयस्य ! पश्य पश्यास्याश्चञ्चलं लोचनाञ्चलम् ॥६ ॥

माधुर्यमिति । पुनस्त्वर्थे । माधुर्यं तु उक्तस्य काव्यस्य चारुतावहं चित्तद्रवीभावजनकं वैचित्र्यमित्यर्थः । द्रवीभावश्च—स्वाभाविककाठिन्य, मन्युक्रोधादिकृतदीप्तत्व,-हासादिकृतविक्षेपाभाव एव माधुर्यरचनाविशिष्टरत्याद्याकाराऽनुविद्धानन्दोद्बोधरूपः । 'स च शृङ्गारकरुणशान्तजन्य' इति काव्यप्रकाशः । 'द्रवीभाव एव माधुर्यं रचनाजन्यं चे'ति दर्पणः । रचना च टवर्गं विना वर्गान्त्यानां वर्ग्यमूर्धस्थितिरूपा । 'वयस्ये'त्युदा-

हरणम् । अत्र 'चञ्चल'मित्यादौ नकारस्य वर्ग्यमूर्धस्थता स्फुटैव । यद्वा पुनरुक्तस्य चारुताजनकवैचित्र्यं माधुर्यमित्यर्थः । 'पश्य पश्ये'त्युदाहरणम् । 'ग्राम्यत्वाभावो माधुर्य'मिति दण्डी ॥ ६ ॥

**ओजः स्यात्प्रौढिरर्थस्य संक्षेपो वाऽतिभूयसः ।**
**रिपुं हत्वा यशः कृत्वा त्वदसिः कोशमाविशत् ॥ ७ ॥**

ओज इति । अर्थनिष्ठमोजः प्रौढोक्तिरूपम् । शब्दनिष्ठं संक्षेपरूपम् । अनाश्रयस्याश्रयत्वेन कथनं प्रौढोक्तिः । 'रिपुं हत्वे'त्युदाहरणम् । हननकर्तृत्वाऽनाश्रयस्य खड्गस्याश्रयत्वोक्तेः । संक्षेपोक्तिः स्फुटैव । काव्यप्रकाशदर्पणौ तु—

"ओजश्चित्तस्य विस्ताररूपदीप्तत्वमुच्यते ।
वीरबीभत्सरौद्रेषु क्रमेणाधिक्यमस्य तु ॥

सोऽपि रचनानिष्ठ एव । रचना च माधुर्यवर्गसहिता समासबहुला । यथा—

चञ्चद्भुजभ्रमितचण्डगदाभिघात-
सञ्चूर्णितोरुयुगलस्य सुयोधनस्य ।
स्त्यानाऽवनद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि ! भीमः ।"

इत्याहतुः । 'समासभूयस्त्वमोज' इति दण्डी ॥ ७ ॥

**सौकुमार्यमपारुष्यं पर्यायपरिवर्तनात् ।**
**स कथाशेषतां यातः समालिङ्ग्य मरुत्सखम् ॥ ८ ॥**

सौकुमार्यमिति । अमङ्गलशब्दपरित्यागेन तत्पर्यायशब्दप्रयोगः सौकुमार्यम् । 'स कथाशेषता'मित्युदाहरणम् । अग्नौ प्रविश्य मृत इत्यर्थस्य पर्यायेणाभिधानात् । वस्तुतस्त्वय(१)मश्लीलत्वाभावो न गुणान्तरम् ॥ ८ ॥

**उदारता तु वैदग्ध्यमग्राम्यत्वात्पृथङ् मता ।**
**मानं मुञ्च प्रिये ! किञ्चिल्लोचनान्तमुदञ्चय ॥ ९ ॥**

उदारतेति । अग्राम्यत्वादिति, *ग्राम्यत्वाभावापेक्षया भिन्नेत्यर्थः*(२) । 'मानं मुञ्चे'त्यादि लक्ष्यम् । 'विलोकये'त्युक्तावपि ग्राम्यत्वाभावसत्त्वे उदारताया अभावाद्भिन्नेत्याशयः । दर्पणस्तु—"उदारता विकटत्वम्, तच्च पदानां नृत्यत्प्रायत्वम् । तच्चौजस्येवान्तर्गत"मित्याह । "व्यङ्ग्यात्कर्षप्रत्यायकत्वमुदारत्वम् । यथा—

अर्थिनां कृपणा दृष्टिस्त्वन्मुखे पतिताऽसकृत् ।
तदवस्था पुनर्देव ! नान्यस्य मुखमीक्षते ॥

(१) इ' नास्ति ख-पुस्तके ।
(२) चिह्नान्तर्गतः पाठो नास्ति ख-पुस्तके ।

अत्र दावृतोत्कर्षप्रतीते''रिति दण्डी ॥ ९ ॥

एवमष्टौ गुणानभिधाय वामनोक्तदशगुणान्तर्गतकान्त्यर्थव्यक्त्योरन्यत्रान्तर्भावं दर्शयन्नष्टौ गुणान् दृढीकरोति—

**शृङ्गारे च प्रसादे च कान्त्यर्थव्यक्तिसङ्ग्रहः ।**
**अमी दश गुणाः काव्ये पुंसि शौर्यादयो यथा ॥ १० ॥**
**तिलकाद्यमिव स्त्रीणां विदग्धहृदयङ्गमम् ।**
**व्यतिरिक्तमलङ्कारं प्रकृतेर्भूषणं गिराम् ॥ ११ ॥**

शृङ्गारे चेति । शृङ्गाररसान्तर्गतः कान्तिगुणः । अर्थव्यक्तिश्च प्रसादगुणान्तर्गतेत्यर्थः । कान्तिरुज्ज्वलत्वम् । तच्च दीप्तरसत्वम् । अतो रसान्तर्गतेत्याशयः, "कान्तिः प्रसिद्धिविरोधाभावः । निषिद्धलाक्षणिकत्वरूपनेयार्थत्वाभावोऽर्थव्यक्तिः । आद्यं यथा—

गृहाणि नाम तान्येव तपोराशिर्भवादृशः ।
संभावयति यान्येव पावनैः पदपांसुभिः ॥
अनयोरनवद्याङ्गि ! स्तनयोर्जृम्भमाणयोः ।
अवकाशो न पर्याप्तस्तव बाहुलतान्तरे ॥

इति ।

'अल्पं निर्मितमाकाशमनालोच्यैव वेधसा ।
इदमेवंविधं भावि भवत्याः स्तनजृम्भणम् ॥'

इति प्रत्युदाहरणम् । इयमतिशयोक्तिरिति केचित् । द्वितीयं यथा—'मही महावराहेण लोहितादुद्धृतोदधे'रिति । प्रत्युदाहरणं तु—

'भूरिभारभरोन्मग्ना कालेन हरिणोद्धृता ।
भूः खुरक्षुण्णनागासृग्लोहितादुदधेरिह ॥'

इति । अत्र नागलोहितपदयो''रिति दण्डी । उपसंहरति–अमी इति । दशेति वामनमताभिप्रायेण । गुणालङ्कारविभागं सपादश्लोकेनाह–पुंसीति । यथा शौर्यकातरत्वादयो नियताः पुरुषधर्मास्तथा श्लेषादयो गुणाः काव्यधर्माः। तान् विना काव्यत्वं नास्तीत्याशयः । तिलकाद्यलङ्कारस्तु शरीरापेक्षया भिन्नः सकलशरीरशोभाजनको न तु शरीरधर्मः । एवमनुप्रासोपमादयोऽलङ्कारा इति भावः । यथा स्त्रीणां प्रकृतेः स्त्रीशरीरस्य तथा गिरां प्रकृतेः काव्यस्येत्यक्षरार्थः । एवं च काव्यधर्मत्वं गुणत्वम्, काव्यशोभाधायकत्वमलङ्कारत्वमिति भेदः । काव्यप्रकाश(कृत)स्तु–"गुणा न काव्यधर्माः ।

स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनी ।
अस्या रदच्छदरसो न्यक्करोतितरां सुधाम् ॥

इत्यादौ गुणाभावेऽपि विशेषोक्तिव्यतिरेकालङ्कारमात्रेण काव्यपदप्रयोगात् । 'अद्रावत्र प्रज्वलत्यग्निरुच्चै'रित्यादावोजोगुणसत्वेऽपि तदप्रयोगाच्च । अतो रसधर्मत्वं

गुणत्वं काव्यधर्मत्वमलङ्कारत्वमिति भेदः । तत्रापि माधुर्यौजःप्रसादाख्यास्त्रय एव गुणाः । शृङ्गारकरुणशान्तधर्मो माधुर्यम् । वीरबीभत्सरौद्ररस ओजः । सर्वरसधर्मः प्रसादः । श्लेषादयस्त्वत्रैवान्तर्गताः । केचित् समतादयस्तु दोषाभावरूपा न गुणाः" इत्याहुः ॥ ११ ॥

**वैचित्र्यलक्षणं व्यासो निर्वाहः प्रौढिरौचिती ।**
**शास्त्रान्तररहस्योक्तिः सङ्ग्रहो दिक् प्रदर्शिता ॥ १२ ॥**

वैचित्र्यमिति । वैचित्र्यलक्षणं वैचित्र्यज्ञापकमित्यर्थः । व्यासादयो जीर्णोक्ता न गुणाः, किन्तु वैचित्र्यज्ञापका इत्याशयः । पदार्थस्य वाक्येनाभिधानं व्यासः । यथा— चन्द्रपदार्थस्य 'अत्रिनयनसमुत्थं ज्योति'रिति वाक्येनाभिधानम् । निर्वाहो वर्णसमता । अन्यार्थकपदेन लक्ष्यनिर्देशः प्रौढिः । यथा-'हग्युग्मविपुला च से'ति । अत्र हग्युग्मे विपुला विस्तृतेत्यर्थकेन लक्ष्यानुष्टुप्छन्दोभेदविपुलाभिधानम् । औचिती कविसङ्केत-प्रसिद्ध्या वर्णनम् । शास्त्रान्तररहस्योक्तिर्यथा—

अवादि भैमी परिधाप्य कुण्डले वयस्यया स्यामभितः समन्वयः ।
त्वदाननेन्दोः प्रियकामजन्मनि श्रयत्ययं दौरुधरीं धुरं ध्रुवम् ॥

अत्र 'उभयस्थितैर्दुरुधरा(१)' इति दुरुधरायोगो ज्योतिःशास्त्रे प्रसिद्धः । सङ्ग्रहः समासः, स पदेन वाक्यार्थाभिधानम् । यथा--निदाघशीतलहिमकालोष्णछकुमार-शरीरावयवा योषिदिति वाक्यार्थे वक्तव्ये वरवर्णिनीति पदाभिधानम् । दिक् प्रदर्शिता, दिक्प्रदर्शनं साभिप्रायोक्तिविन्यास इत्यर्थः । यथा--

मनस्तु यं नोज्झति जातु यातु मनोरथः कण्ठपथं कथं सः ।
का नाम बाला द्विजराज-पाणिग्रहाभिलाषं कथयेदलज्जा ॥

अत्र चन्द्रपाणिग्रहाभिलाषतुल्यनलपाणिग्रहाभिलाष इति साभिप्रायोक्तिः । अत्र सरस्वतीकण्ठाभरणे चतुर्विंशतिगुणाः श्लेषादयो वाक्यनिष्ठा वाक्यार्थनिष्ठाश्चोक्ताः ।

"उक्ताः शब्दगुणा वाक्ये चतुर्विंशतिरित्यमी ॥
अथैतानेव वाक्यार्थगुणत्वेन प्रचक्ष्महे ।
तेषां श्लेष इति प्रोक्तः सविधानं सुसूत्रता ॥
यत्तु प्राकट्यमर्थस्य प्रसादः सोऽभिधीयते ।
अवैषम्यं क्रमवतां समत्वमिति कीर्तितम् ॥

(१) 'रविवर्ज्यं द्वादशगैरनफा चन्द्राद् द्वितीयगैः सुनफा ।
उभयस्थितैर्दुरुधरा केमद्रुमसंज्ञकोऽतोऽन्यः ॥'
इति पूर्णः श्लोकः स्वल्पजातके ।

माधुर्यमुक्तमत्रापि क्रोधादावप्यतीव्रता ।
अनिष्ठुरत्वं यत्प्राहुः सौकुमार्यं तदुच्यते ॥
अर्थव्यक्तिः स्वरूपस्य साक्षात्कथनमुच्यते ।
कान्तिर्दीप्तरसत्वं स्याद् भूत्युत्कर्ष उदारता ॥
आशयस्य च उत्कर्षस्तदुदात्तत्वमुच्यते ।
ओजः साध्यवसायस्य विशेषोऽर्थेषु यो भवेत् ॥
रूढाहङ्कारतौर्जित्यं प्रेयस्त्वर्थेष्वभीष्टता ।
अदारुणार्थपर्यायो दारुणेषु सुशब्दता ॥
व्याजावलम्बनं यत्तु स समाधिरिति स्मृतः ।
सौक्ष्म्यमित्युच्यते तत्तु यत् सूक्ष्मार्थाभिदर्शनम् ॥
शास्त्रार्थसव्यपेक्षत्वं गाम्भीर्यमभिधीयते ।
विस्तरोऽर्थविकासः स्यात्संक्षेपस्तस्य संवृतिः ॥
शब्दार्थौ यत्र तुल्यौ स्तः संमितत्वं तदुच्यते ।
साभिप्रायोक्तिविन्यासो भाविकत्वं निगद्यते ॥
गतिः सा स्यादवगमो योऽर्थादर्थान्तरस्य तु ।
रीतिः सा यस्त्विष्टार्थानामुत्पत्त्यादिक्रियाक्रमः ॥
उक्तिर्नाम यदि स्वार्थो भङ्ग्या भव्योऽभिधीयते ।
विवक्षितार्थनिर्वाहः काव्ये प्रौढिरिति स्मृता ॥"

इति । तेषामपि यथासन्निवेशमेष्वेवान्तर्भावो बोध्यः (१) ।

महादेवः सत्रप्रमुखमखविद्यैकचतुरः
सुमित्रा तद्भक्तिप्रणिहितमतिर्यस्य पितरौ ।
तुरीयस्तेनासौ सुकविजयदेवेन रचिते
चिरं चन्द्रालोके सुखयतु मयूखः सुमनसः ॥ १३ ॥

इति श्रीपीयूषवर्षपण्डितजयदेवविरचिते चन्द्रालोकालङ्कारे गुणनिरूपणाख्यश्चतुर्थो मयूखः ।

विश्वेश्वरापराख्यस्य गागाभट्टमनीषिणः ।
चन्द्रालोकमयूखेऽभूच्चतुर्थे विवृतिः शुभा ॥

इति गागाभट्टकृतचन्द्रालोकटीकायां राकागमे चतुर्थो मयूखः ।

---

(१) इति । तेषामपि यथा सन्निवेशो बुधैः कृतः—इति क ।

# पञ्चमो मयूखः ।

गुणान्निरूप्यालङ्कारान्निरूपयितुमलङ्कारसामान्यलक्षणमाह—

**शब्दार्थयोः प्रसिद्ध्या वा कवेः प्रौढिवशेन वा ।**
**हारादिवदलङ्कारः सन्निवेशो मनोहरः ॥ १ ॥**

शब्दार्थयोरिति । शब्दानामर्थानां चालङ्कारिकतात्पर्यविषयभूतो मनोहरश्चमत्कारकारकः सन्निवेशः समभिव्याहारः शब्दगतोऽर्थगतश्चालङ्कारः । अप्रसिद्धोऽपि प्रौढकविकल्पितोऽलङ्कारो भवतीत्याह- कवेः प्रौढीति । हारादिवदित्यनेन काव्यस्वरूपबहिर्भाव उक्तः । तेन गुणाद्भेदः सूचितः । शाब्दत्वमलङ्कारे शब्दान्वयव्यतिरेकानुविधायित्वम् । आर्थत्वं च अर्थबोधान्वयव्यतिरेकानुविधायित्वम् । तेन वक्रोक्तिश्लेषयोर्न शब्दालङ्कारत्वम् । अर्थानवबोधे तदबोधात् । अर्थानवबोधेऽप्यनुप्रासादीनां चमत्कारजनकत्वाद् युक्तं शब्दालङ्कारत्वम् । अत्रार्थबोधान्वयव्यतिरेकानुविधायित्वाभावे सतीति विशेषणीयम् अन्यथा समासोक्तिपरिकरादीनामपि शब्दान्वयव्यतिरेकानुविधानतौल्यात् स्याच्छब्दालङ्कारत्वमिति ॥१॥

छेकानुप्रासं लक्ष्यलक्षणाभ्यामाह—

**स्वरव्यञ्जनसन्दोहव्यूहाऽमन्दोहदोहदा ।**
**गीर्जगज्जाग्रदुत्सेका छेकानुप्रासभासुरा ॥ २ ॥**

स्वरेति । 'वर्णसाम्यमनुप्रास' इति सामान्यलक्षणम् । साम्यं च व्यञ्जनैरेव न स्वरैः । तेन स्वरवैसादृश्येऽपि 'स्पन्दमन्दीकृते'त्यादावनुप्रासत्वाक्षतिः । या गीर्वाणी, स्वरयुक्तानि व्यञ्जनानि तेषां सन्दोहः साम्यं तस्य व्यूह आवृत्तिर्यस्यां सा, छेका विदग्धास्तत्सम्बन्धी योऽनुप्रासो रसानुगुणो न्यासस्तेन भासुरा प्रसिद्धा, भवतीति शेषः । किंभूता, अमन्दः सम्यक् य ऊहो ज्ञानं तद्दोहदरूपा तज्जनिका, जगति जाग्रत् उत्सेक उत्कर्षो यस्या इत्यक्षरार्थः । अत्र स्वरेत्यविवक्षितम् । तेन व्यञ्जनसाम्यं छेकानुप्रास इत्याशयः । 'दोहव्यूहे'त्यत्र स्वरवैसादृश्येऽपि व्यञ्जनसाम्यात् 'दोहदोहे'त्यत्र स्वरव्यञ्जनसकृत्साम्याल्लक्ष्यमपीदमेव ॥ २ ॥

**आवृत्तवर्णसम्पूर्णं वृत्त्यनुप्रासवद्वचः ।**
**अमन्दानन्दसन्दोहस्वच्छन्दास्पन्दमन्दिरम् ॥ ३ ॥**

आवृत्तेति । आवृत्तवर्णैः पूरितं वचो वृत्त्यनुप्रासवत् । किंभूतम्, अमन्दो भूयान् आनन्दसन्दोह आनन्दस्तोमस्तस्य स्वच्छन्दास्पन्दः स्वच्छन्दव्यवहारस्तस्य गृहम् । तेनाऽसकृदेकवर्णावृत्तिर्वृत्त्यनुप्रासः । दकारावृत्तेर्लक्ष्यमपि ॥ ३ ॥

वर्णानुप्रासमुक्त्वा पदानुप्रासमाह—

**लाटानुप्रासभूर्भिन्नाभिप्रायपुनरुक्तता।**

**यत्र स्यान्न पुनः शत्रोर्गर्जितं तर्ज्जितं जितम् ॥ ४ ॥**

लाटेति। यत्राभिप्रायभेदेनाभिन्नार्थकपदावृत्तिः सा लाटदेशस्थविचक्षणप्रियाऽनुप्रासस्थानमित्यर्थः। यथा वा—

सत्सङ्गनिरतो वत्स! भविष्यसि भविष्यसि।

अथ सत्सङ्गगोष्ठीषु पतिष्यसि पतिष्यसि ॥

अभिप्रायाभेदेनाभिन्नार्थकपदावृत्तिरिति लक्षणम्। द्वितीय'जित'पदस्य साफल्याभिप्रायकत्वाल्लक्ष्यत्वम्। अयं च पञ्चधा—पदस्य, पदानां, समासे, समासद्वये, समासाऽसमासयोश्चेति। पदस्योक्तः। पदानां यथा—

यस्य न सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य।

यस्य च सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य (१) ॥

समासादौ यथा—

सितकरकररुचिरविभा विभाकराकार! धरणिधर! कीर्तिः।

पौरुषकमला कमला(२) सापि तवैवास्ति नान्यस्य ॥

'सितकरकरे'तिसमासे 'रुचिरविभा–विभाकराकारे'ति समासयोः, 'पौरुषकमला-कमले'ति समासतदेकदेशयोर्वृत्त्यनुप्रासोदाहरणम् ॥ ४ ॥

**श्लोकस्यार्धे तदर्धे वा वर्णावृत्तिर्यदि ध्रुवा।**

**तदा मता मतिमतां स्फुटानुप्रासता सताम् ॥ ५ ॥**

श्लोकस्येति। अर्धे पादे तदर्धे पादार्धे। उत्तरार्धे पादान्तरगततकारसाम्येन उत्तरार्धगतपूर्वपादार्धगततकारसाम्येन च लक्ष्यत्वम्। अयं च न पदनिष्ठः, किन्तु वर्णनिष्ठः। 'अयं वृत्त्यनुप्रासभेद' इति दर्पणः ॥ ५ ॥

**उपमेयोपमानादावर्थानुप्रास इष्यते।**

**चन्दनं खलु गोविन्दचरणद्वन्द्ववन्दनम् ॥ ६ ॥**

उपमेयेति। अत्र चन्दनवन्दनयोः समानबहुवर्णवत्पदप्रतिपाद्यत्वसाहचर्येनोपमानोपमेयभावः। तेनार्थद्वारा 'वन्दनं चन्दनमिवे'ति वाक्ये वर्णावृत्तेः शब्दनिष्ठोऽयं बोध्यः। तेन शब्दालङ्कारत्वाक्षतिः ॥ ६ ॥

---

(१) चन्द्रः शीतलोऽपि विरहोद्दीपकतया दुःखदो विरहिणां प्रियासहचराणां पुनः सुखदो भवति सन्तापकरोऽपि दावाग्निरिति भावः।

(२) पौरुषेण पुरुषार्थेन तद्द्वारात्प्राप्तेति यावत्, या कमला लक्ष्मीः सैव लक्ष्मीर्वास्तविकीत्याशयः। अन्यत्सुगमम्।

**पुनरुक्तप्रतीकाशं पुनरुक्तार्थसन्निभम् ।**
**अंशुकान्तं शशी कुर्वन्नम्बरान्तमुपैत्यसौ ॥ ७ ॥**

पुनरुक्तेति । भिन्नार्थकत्वे सत्येकार्थकपदवदाभासमानत्वम् । अंशुभिः कान्तं सुन्दरमम्बरान्तमाकाशान्तमिति लक्ष्यम् । यथा वा--

भुजङ्गकुण्डली (१)व्यक्तशशिशुभ्रांशुशीतलः ।
जगन्त्यपि सदाऽपायादव्याच्चेतोहरः शिवः ॥

अयं चालङ्कारो वाक्यनिष्ठत्वाच्छाब्दः । यद्यप्यत्रार्थबोधान्वयव्यतिरेकानुविधायित्वादर्थालङ्कारत्वमुचितम्, तथाप्यापाततः शाब्दालङ्कारत्वमुक्तमिति ध्येयम् । अयं च शब्दश्लेष एवेति युक्तम् ॥ ७ ॥

यमकमाह---

**आवृत्तवर्णस्तबकं स्तवकन्दाङ्कुरं कवेः ।**
**यमकं प्रथमा धुर्यमाधुर्यवचसो विदुः ॥ ८ ॥**

आवृत्तेति । 'भिन्नार्थकवर्णसमूहावृत्तिर्यमक'मिति लक्षणम् । वीप्सावारणाय भिन्नार्थकेति । स्तवकं स्तवकं माधुर्यमाधुर्यमिति लक्ष्यम् । कवेः स्तुतिकन्दस्य काण्डस्याऽङ्कुरं प्रथमाः पूर्वे कवयो विदुः । किंभूताः, धुर्यम् आद्यं माधुर्यं यस्य तादृशं वचो येषामित्यक्षरार्थः । यमकं च पदद्विपदचरणार्धावृत्त्या चतुर्विधम् । पदावृत्तिरूपं काञ्चीयमकादिभेदेनानेकविधम् । तत्र चरणान्तचरणाद्यपदयोरेकत्वे काञ्चीयमकम् । यथा--

बुबुधे जनेन स महाविषमो विषमोहवाहिविशिखप्रभटः ।
प्रभटप्रभापरिभवद्भुवनो भुवनोपरोधनकरः समरः(२) ॥

इति ।

न वलक्षयं गणयसीह तनोर्न वलक्षकेशनिवहं च मनः ।
नवलक्षणं न विजहासि मनाग् नवलक्षवारमुपदिष्टमपि(३) ॥

---

(१) भुजङ्गः सर्पः कुण्डलं कर्णभूषणं यस्यास्तीति तादृशः । व्यक्तस्य मस्तके विराजमानस्य कलात्मकस्य शशिनश्चन्द्रस्य शुभ्रैः श्वेतैरंशुभिः किरणैः शीतलः सन्तापहर इत्यर्थः । अत्राऽऽपाततोऽभिन्नरूपा इव प्रतीयमाना भुजङ्गकुण्डल्यादिशब्दाः पौनरुक्त्यमिव दर्शयन्ति, अर्थमुखप्रेक्षितया पुनस्तत्परिहारो भवतीति तत्त्वम् ।

(२) विषमोहवाहिनो विषाक्ता मूर्छाकराश्च विशिखा बाणा येषां तादृशाः प्रभटाः श्रेष्ठा योद्धारो यत्र सः, प्रभटप्रभया वीरवराणां तेजसा परिभवद्भुवनो जगद्विजयकरः, भुवनोपरोधनकरः-जगद्व्यापकः शरवर्षणेन जगदाच्छादको वा, एतादृशः समरो युद्धम् । युद्धमिदं लोकैरतिभयङ्करं ज्ञातमित्यर्थः । अत्र 'परिभूयमाने'त्यर्थे कृतः 'परिभव'दिति पदप्रयोगश्चिन्त्यः ।

(३) कुमार्गगामिनं कञ्चित्प्रति तद्धितैषिणो वृद्धस्य कस्यापि वचनमिदम् ।

नवपलाशपलाशवनं पुरः स्फुटपरागपरागतपङ्कजम् ।
मृदुलतान्तलतान्तमलोकयत् स सुरभिं सुरभिं सुमनोभरैः(१) ॥

इदंद्वयं पदयमकम् । पदद्वययमकं यथा—

अवलम्ब्य दिदृक्षयाम्बरे क्षणमाश्चर्यरसालसं गतम् ।
स विलासवनेऽवनीभृतः फलमैक्षिष्ट रसालसङ्गतम्

श्लोकार्धगतो यथा—

वर्जयन्त्या जनैः सङ्गमेकान्ततस्तर्कयन्त्या सुखं सङ्गमे कान्ततः ।
योषयैष स्मराऽऽसन्नतापाङ्गया सेव्यतेऽनेकया सन्नताऽपाङ्गया(२) ॥

चरणयमकं यथा—

यथासीत्कानने तत्र विनिद्रकलिका लता ।
तथा नलच्छलासक्तिविनिद्रकलिकालता (३) ॥

---

शरीरस्य बलहानिं न पश्यसि त्वम्, विषयलोलुपतया भवन्तमात्मनः शरीरशक्तेरुपक्षयमुपेक्षसे इत्यर्थः । मनश्च ते वलक्षकेशानां वृद्धानां निवहः समूहो यस्मिंस्तथाभूतं नास्ति, त्वदीये मनसि वृद्धा अवकाशं न लभन्ते, वृद्धजनवचांसि त्वं न विचारयसीति यावत् । किञ्च-नवलक्षवारमनेकवारम् उपदिष्टमपि मयोपदिष्टेऽपीति यावत्, मनाक् किञ्चिदपि नवलक्षणं नूतनं दुर्लक्षणं दुर्गुणान् न त्यजसि । अहो ! महीयान् विमोहस्तवेति भावः ।

(१) रैवतकपर्वतं गतो विहर्तुकामः श्रीहरिस्तत्र प्रादुर्भवन्तं वसन्तमवलोकयाञ्चक्रे । तमेव सर्वर्तुराजं वसन्तं वर्णयति माघः—नवेति । नवानि नूतनोत्पन्नानि पलाशानि पत्राणि येषु तादृशानि पलाशवनानि किंशुकवृक्षकाननानि यत्र तम् , स्फुटानि विकस्वराण्यतएव परागैस्तर्गतै रजोभिः परागतानि व्याप्तानि पङ्कजानि कमलानि यस्मिंस्तादृशम् , मृदुला नूतनोत्पन्नतया कोमला अत एव तान्ता आतपवशाम्म्लानाः लतानाम् अन्ताः प्रान्तभागाः पल्लवरूपा यत्र तादृशम्, सुमनोभरैर्विकचपुष्पसमूहैः सुरभिं सुगन्धि घ्राणतर्पणम्, सुरभिं वसन्तमित्यर्थः ।

(२) एकान्ततः एकान्ते, कान्ततः कान्तेन । सार्वविभक्तिकोऽयं तसिः, स चात्र क्रमेण सप्तम्यर्थे तृतीयार्थे च । सङ्गमे सुखं तर्कयन्त्या सम्भावयन्त्या, रहसि प्रियसमागमं सुखकरं मन्यमानयेति यावत्, अत एव जनैः सङ्गं वर्जयन्त्या लोकसहवासं त्यजन्त्या, स्मरेण कारणेन आसन्नतापानि सन्तप्तान्यङ्गानि शरीरावयवा यस्यास्तया, सन्नतौ सम्यङ्नतावपाङ्गौ नेत्रप्रान्तभागौ यस्यास्तथाभूतया, अनेकया योषयेति जातावेकत्वम्, अनेकाभियोषाभिः स्त्रीभिरिति यावत्, एष रैवतकपर्वतः सेव्यते । रैवतकपर्वतोऽयं बहूनां प्रियसमागमकाङ्क्षिणीनां स्त्रीणां विहारस्थानमस्तीति भावः ।

(३) विनिद्रा विकसिताः कलिकाः पुष्पकोरका यस्यां तादृशी लतेति जातावेकवचनम् । नले नलविषये या छलासक्तिः कपटाभिनिवेशस्तत्र विनिद्रो जागरूकः सावधान इति यावत् कलिकाः कलिसमयो यत्र तस्य भावस्तत्ता नलच्छलासक्ति-

एवमन्यानि स्वयमूह्यानि ॥ ८ ॥

चित्रकाव्येषु खड्गबन्धं श्लोकद्वयेनाह—

**काव्यविद्भवरैश्चित्रं खड्गबन्धादि लक्ष्यते ।**
**तेष्वाद्यमुच्यते श्लोकद्वयीसज्जनरञ्जिका ॥ ९ ॥**
**कामिनीव भवत्खड्गलेखा चारुकरालिका ।**
**काश्मीरसेकारक्ताङ्गी शत्रुकण्ठान्तिकाश्रिता ॥ १० ॥**

काव्यविदिति । सन्निवेशविशेषेण यत्र न्यस्ता वर्णाः खड्गाद्याकारं प्रकटयन्ति, तत्खड्गबन्धादि चित्रकाव्यम् । चित्रमेव तत्रालङ्कारः । करश्च अलिकं च चारु सुन्दरं यस्याः। काश्मीरसेकात् काश्मीरजलसेकेन कृताऽऽरक्ताङ्गी । अत्र मुष्टेरुपर्यधोदेशे दक्षिणोत्तरयोः शाखाद्वयं लेख्यम् । तत्र खड्गसंलग्नं शाखाद्वयमधिकं लम्बं तदधः शाखाद्वयं च ह्रस्वम्। एवं खड्गो लेख्यः। तत्र खड्गसंलग्नशाखाचतुष्टयमध्ये प्राथमिकः 'का'कारो लेख्यः । तदधः खड्गदक्षिणभागे 'व्यवि' दित्यादि'क्ष्य'कारान्तानि चतुर्दशाक्षराणि । खड्गाग्रे 'ते'कारश्च लेख्यः । ततस्तमेव 'ते'कारमादाय खड्गोत्तरभागे 'ष्वाद्ये'त्यादि'जि'कारान्तानि चतुर्दशाक्षराणि लेख्यानि। अन्तिमः 'का'कारः प्राथमिक एव । ततस्तमेव 'का'कारमादाय मुष्टिदक्षिणशाखायां 'मि'कारादीनि सप्त, उत्तरशाखायां च 'ले'कारादीनि सप्त लेख्यानि । अत्राप्यन्तिमः 'का'कारः प्राथमिक एव । ततस्तमेव 'का'कारमादाय मुष्टिवीथ्यां 'श्मी'त्यादि वर्णत्रयं लेख्यम् । तदधश्चतुष्पथे 'का'कारो लेख्यः । दक्षिणशाखायां 'रक्ते'त्यादि वर्णचतुष्टयम्, उत्तरशाखायां 'त्रुकण्ठान्ति'इति वर्णचतुष्टयं लेख्यम् । 'का'कारः पुनः स एव वाचनीयः । ततः 'श्रिते'ति वर्णद्वयं मुष्ट्यग्रे लेख्यमिति ।

अन्येऽपि केचन बन्धा उदाह्रियन्ते—

सङ्गतानि मुदा राजन्मदनामरविद्विषाम् ।
युगलानि तदा भ्राजदुदयामरविद्विषाम्(१) ॥

अयं गोमूत्रिकाबन्धः । अत्रार्धयोर्युग्माक्षरैक्यमेव बीजम् ।

विकारकारिकामाङ्का स्वाकारैकाऽभिकाऽऽसिका ।

---

विनिद्रकलिकालता । तद्वनं विकसितानां लतानामिव नलप्रतारणबद्धादरस्य कलेरपि निवासस्थानमासीदिति भावः ।

(१) राजन् विलसन् मदनः कामो येषु ते च तेऽमरविद्विषोऽसुराश्च तेषां राजन्मदनामरविद्विषाम्, भ्राजन् विराजमान उदयो येषां तादृशोऽमरा देवास्तेषां विद्विषः शत्रवस्ता सानां भ्राजदुदयामरविद्विषाम् ।कामिनां प्राप्तोदयेषु देवेषु द्वेषभावमाबिभ्रतां चेत्युभयेषामसुराणां युग्मानि तस्मिन्समये परस्परं मिलितान्यभूवन्नित्यर्थः । अत्र 'भ्राज'दिति परस्मैपदं चिन्त्यम् ।

चकार कार्मुकानीकाधिकारे कान्न कामुकान् (१) ॥

अयं षोडशदलकमलबन्धः । मध्ये 'का'कारः, षोडशदलेषु षोडशाक्षराणीति । अत्रापि तदेव बीजम् ।

शत्रुवीरशरच्छातशमीकालशतो नवः(२) ।
जानकीलक्ष्मणयुतः पातु वो रघुपुङ्गवः ॥

चक्रबन्धोऽयम् । अत्र गर्भितं वृत्तद्वयं रेखाद्वयेन चतुर्धा कृत्वा मध्यकर्णिकायां 'श'कारं लिखित्वा मध्यवीथिचतुष्टये निर्गमक्रमेण पूर्वादिषु 'त्रुवीरच्छामीकातोने'ति वर्णद्वयं लिखित्वा तकारोपरि बहिर्वृत्ते छेदगृहे 'वः' इति लिखित्वा लकारतकाररकारान् छेदगृहेषु, 'जानकी त्यादि वर्णानां त्रयं त्रयं वृत्तवीथीषु लेख्यम् ।

देवाऽऽकानिनि कावादे वाहिकास्वस्वकाहि वा ।
काकारेभभरेऽकाका ! निस्वभव्यव्यभस्वनि(३) ॥

( १ ) विकारकारी मनोविकारकरः कामोऽङ्कश्चिह्नं यस्यास्ताहशी कामान्धेति यावत्, स्वाकारस्य स्वीयरमणीयाकृतेः एका अद्वितीयाश्च तेऽभिका अभिलाषुकाः तेषु आसिका स्थितिर्यस्यास्तथाभूता, स्वसौन्दर्योपासकानां कामिनां मानसे विलसन्ती तन्मनोहारिणीति यावत्, यद्वा स्वाकारेण स्वस्वरूपेण एकाऽद्वितीया चासौ अभिकासिका प्रकाशमाना अद्वितीयसौन्दर्यशालिनीति यावत्, सा काचिदिति प्रकरणानुरोधाद्गम्यम्, कान् कामुकान् कामिनः, कार्मुकानीकाधिकारे, अत्र कार्मुकपदं कामधनुषोः कान्ताभ्रुवोरुपलक्षकम्, तयोरनीको युद्धं च विक्षेपरूपः, तदधिकारे तद्वशे, भ्रुविक्षेपवशंवदानित्यर्थः, न चकार, अपि तु सर्वान्कामयमानांस्तथा चकारेति सूक्ष्मं निरीक्ष्यम् ।

( २ ) शत्रुवीरशरच्छातशमीकालशतः—शत्रुषु वीराः पराक्रमवन्तो ये शराः स्वकीया बाणास्तैः छातानि छिन्नानि विनाशितानि शमीकालानां शमीवृक्षवत्कृष्णवर्णानां रक्षसामिति यावत् शतानि अनेकशतसंख्या येन ताहशः । नवः—उत्साही युवा वीरवर इत्यर्थः ।

( ३ ) युद्धक्षेत्रे युध्यमानान्निष्पौरुषान् स्वसैनिकान् प्रथमादिगणानुद्दिश्य कुमारकार्तिकेयस्य तन्निन्दापरं वचनमिदम् । हे अकाकाः ! काकशब्दोऽत्र निन्दाव्यञ्जकः, हे अनिन्द्या देवाः ! उच्चजातीयत्वात्पूज्याः ! अथवा हे काकाः! पौरुषहीनत्वात्काकवन्निन्द्या वीरम्मन्याः ! देवान् आकनयितुमुद्दीपयितुं शीलमस्येति देवाकानी तस्मिन् देवगणोत्साहप्रदे इति यावत्, कावादे कुत्सितवाक्कलहकारिणि, वाहिकया क्रमप्राप्तेन युद्धव्यापारेण सुष्ठु सम्यक् अस्वकान् परान् आजिहीतेऽभियातीति वाहिकास्वस्वकाहः तस्मिन् यथावसरं शत्रूनभिगच्छतीति यावत्, वा अपिच, कं मदजलम् आकिरन्ति स्रावयन्तीति काऽकाराः ता शानामिभानां गजानां भरः समूहो यत्र तथाभूते, भित्वा युद्धोत्साहवनहीनाः भव्या युद्धोत्साहपूर्णाश्च तानुभयान् नयन्ति संवृण्वन्त्याक्रामन्तीति ताहशैर्नरैः

एष सर्वतोभद्रबन्धोऽत्र पङ्क्तिचतुष्टयेन लेख्यः । अनुलोमप्रतिलोमक्रमेण चोपर्यधो-वर्णक्रमेण च पाठः ।

भासते प्रतिभासार ! रसाभाता हताऽविभा ।
भावितात्मा शुभा वादे देवाभा बत ! ते सभा(१) ॥

अयं काव्यप्रकाशोक्तोऽष्टदलपद्मबन्धः । अत्राष्टदिग्वितताष्टदलं लेख्यम् । तत्र कर्णिकामध्ये 'भा'कारः । पूर्वादिदलेषु निर्गमप्रवेशरीत्या द्वौ द्वौ वर्णौ लेख्यौ । तत्र प्राचि दले आदौ निर्गमः, श्लोकान्ते प्रवेशश्च । दक्षिणोत्तरयोर्दलयोर्निर्गत्यैव प्रवेशः । पश्चिमदले तु प्रविश्यैव निर्गमः । आग्नेयवायव्यदलयोः प्रवेश एव । नैर्ऋत्यैशानयोस्तु निर्गम एवेति ।

सरला बहुलारम्भतरलाऽलिबलाऽऽरवा ।
वारलाबहुलाऽमन्दकरला बहुलाऽमला(२) ॥

अयं मुरजबन्धः । अत्र मुरजषट्कोत्पत्तिः । एवमन्येऽपि सुधीभिरूह्याः । अन्ये च प्रातिलोम्याक्षरैकाक्षरद्व्यक्षराः तालव्याक्षरगूढचतुर्थाः च्युताक्षरदत्ताक्षरान्तर्लापिका-बहिर्लापिकाक्रियाकारकगुप्तादयोऽपि चित्रप्रकारा ग्रन्थगौरवभयान्नोक्ताः । दर्पणस्तु—

'रसस्य परिपन्थित्वान्नालङ्कारः प्रहेलिका ।
उक्तिवैचित्र्यमात्रं सा च्युतदत्ताक्षरादिका ।'

इत्याह ॥ ९–१० ॥

---

बभस्ति शोभत इति निस्बभव्यव्यभस्वा तस्मिन्नित्यर्थः । एतादृग्विशेषणविशिष्टे महा-समरे युष्माभिरत्युन्नतमात्मनः पौरुषं परित्यक्तमित्युत्तरेण सम्बन्धः ।

( १ ) राजानं कञ्चिदुद्दिश्य तत्सभां प्रशंसतः कस्याप्युक्तिरियम् । हे प्रतिभा-सार ! विकसन्ती बुद्धिः प्रतिभा तद्विषये श्रेष्ठ ! बुद्धिमत्तम ! राजन्नित्यर्थः, रसैः आसमन्तात् भाता शोभिता रससम्पत्तिसम्पूर्णा, हता दूरीभूता अविभा दान्त्यभावो यस्याः सा हताऽविभा, भावितात्मा—भावित आलोचितः आत्मा परमात्मा यस्याम् आत्मा स्वरूपं वा यस्याः, यत्र परमात्मविचारो भवति यत्स्वरूपं वाऽऽलोचयन्ति परे ता शीति यावत्, वादे वस्तुविचारे शुभा श्रेष्ठा, देवाभा देवसदृशी दिव्या ते सभा परिषत् भासते शोभते । बतेत्याश्चर्ये । विलक्षणगुणा त्वत्सभेयं विलसतीति भावः ।

( २ ) शरदो वर्णनमिदम् । सरला ऋजुः मेघादिकौटिल्यविरहिता, बहुलः प्रचुर आरम्भ उद्योगः पुष्परसपानरूपो येषां तादृशा अत एव तरलाश्चञ्चला इतस्ततो मक-रन्दलोभाद् भ्रमन्तो येऽलयो भ्रमरास्तेषां बलानि सैन्यानि तेषाम् आरवा गुञ्जितानि यस्मिंस्तादृशो, वारलाबहुला-वरला एव वारला हंस्यस्ताभिर्बहुला व्याप्तेति यावत्, अमन्दा बहवः करला राजग्राह्यभागग्राहिणो यस्यां सा, बहुलाऽमला अतिप्रसन्नेत्यर्थः ।

अर्थालङ्कारान्विवक्षुर्बहुशोऽलङ्कारव्यापित्वात्प्रथममुपमालङ्कारमाह—

उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः ।
हृदये खेलतोरुच्चैस्तन्वङ्गीस्तनयोरिव ॥ ११ ॥

पूर्णा लुप्ता द्विधाऽऽद्या तु शाब्दं यत्र चतुष्टयम् ।
उपमानं चोपमेयं सादृश्यं धर्म एव च ॥
द्वितीयैकद्वित्रिलोपे, उभय्यपि पुनर्द्विधा ।
श्रौत्यार्थीति, तयोराद्या यस्यां सादृश्यवाचकम् ॥
यथेवेत्यादिकं, सा स्यादन्त्या सदृशवाचिनी ।
अत्रोपपत्तिर्विज्ञेया सादृश्यस्य प्रकारता ॥
शीघ्रं प्रतीयते श्रौत्यां द्वितीयायां विलम्बतः ।
समासे तद्धिते वाक्ये द्विधा पूर्णेति षड्विधा ॥
इवेन च समासे तु वत्यादौ तद्धिते तथा ।
एकोनविंशधा(?) लुप्तोपमा धर्मादिलोपतः ॥
समासगा वाक्यगा च श्रौत्यार्थीति चतुष्टयम् ।
आर्थ्येका तद्धिते चेति धर्मलोपेन पञ्चधा ॥
सादृश्यवाचिलोपे तु सा षोढाऽथ समासगा ।
विहितेन क्यचा तद्वत्कर्त्रुत्तरपदात्क्यङा ॥
कर्मकर्त्रोश्च विहितणमुला चेति भेदतः ।
आथ्यवं चोपमानस्य लोपे वाक्यसमासगा ॥
धर्मोपमावाचिलोपे क्विङ्गा चाऽथ समासगा ।
धर्मोपमानयोर्लोपे वृत्तौ वाक्ये च सा मता ॥
उपमेयोपमालोपे क्वचि सैकभिदा मता ।
त्रिलोपेऽपि समासे सा पञ्चविंशतिधोपमा ॥

उपमेति । यत्र काव्ये द्वयोर्भिन्नयोः सादृश्यलक्ष्मीश्चमत्कारजनकं सादृश्यमुल्लसति वाच्यं भवति स स्वाश्रयबोधकतासम्बन्धेन काव्यनिष्ठ उपमालङ्कारः। उदाहरणमप्युक्तम् । अत्र द्वयोरित्युपमेयं, तन्वङ्गीस्तनयोरित्युपमानं, हृदये खेलनं साधारणधर्मः, इवेति सादृश्यवाचकमित्युपमा । अत्र 'द्वयो'रिति 'सागरः सागरोपम' इत्याद्यनन्वयव्यावृत्तये । 'उल्लसती'ति अलङ्कारध्वनिव्यावृत्तये । 'लक्ष्मी'रिति चमत्कारानाधायकवस्तुत्वप्रमेयत्वादिना सादृश्यव्यावृत्तये । तेनान्यनिरूपितमन्यनिष्ठं चमत्काराधायकं वाच्यं सादृश्यमुपमालङ्कार इत्यर्थः फलितः । न चार्थ्युपमायां सदृशस्य वाच्यतया सादृश्यस्याऽवाच्यत्वेनाव्याप्तिरिति वाच्यम् , शक्यतावच्छेदकसादृश्येऽपि शक्तिसत्त्वेन तस्यापि वाच्यत्वात् । केचित्तु—"न सादृश्यमुपमा, किन्तु उपमानतोपमा चका । सा च,

'चन्द्र इव मुखं, यथा चन्द्रस्तथा मुखं, चन्द्रो मुखं च तुल्यं, चन्द्रवन्मुख'मित्यादौ(१) चन्द्रनिष्ठसादृश्यप्रतियोगित्वमुपमा । न च प्रतियोगित्वस्य संसर्गतया न शाब्दत्वम् । उपमायास्तु इवादिपदार्थतया शाब्दस्य सादृश्यस्यैवोपमात्वमुचितमिति वाच्यम् । अव्ययानामन्विताभिधायित्वेन प्रतियोगित्वविशिष्टसादृश्यस्यैवादिवाच्यत्वात् । एवं 'घटो ने'त्यत्रापि प्रतियोगित्वविशिष्टाभावो नञादिवाच्यः । अन्यथा चन्द्रघट-पदार्थयोरिवादिपदार्थे प्रतियोगितासम्बन्धेन प्रकारतानुपपत्तेः । नामार्थयोर्भेदान्वयस्या-ऽव्युत्पत्तेः । निपाताव्ययातिरिक्तत्वविवक्षायां मानाभावात् । किञ्च सादृश्यमात्र-स्यैवादिवाच्यत्वे 'चन्द्रस्य सदृश' इत्यत्रेव 'चन्द्रस्येव घटस्य ने'त्यपि प्रयोगापत्तिः । अतः प्रतियोगित्वविशिष्टसादृश्यमेवेवादिवाच्यम् । तदेव चोपमा । अत एव-इवादौ तस्याः शाब्दत्वम्, सादृश्यवाचके तुल्यादिपदे तस्या आर्थत्व''मित्याहुः । तत्तुच्छम् । एवमपि प्रतियोगित्वविशिष्टसादृश्ये इतरपदार्थस्यान्वयासम्भवादेकदेशान्वयस्या-ऽव्युत्पत्तेः ।

अत्रेदमवधेयम् । उपमा द्विधा, शुद्धा दुष्टा च । द्वितीया दोषमयूखेऽभिहिता । शुद्धा द्विधा, पूर्णा लुप्ता च । उपमानोपमेयसाधारणधर्मोपमावाचकपदसमभिव्याहारे आद्या । एतेषामेकस्य द्वयोस्त्रयाणां वाऽनुपादाने लुप्ता । आद्या यथा—

हंसं तनौ सन्निहितं चरन्तं मुनेर्मनोवृत्तिरिव स्विकायाम् ।
ग्रहीतुकामा दरिणा शयेन यत्नादसौ निश्चलतां जगाहे ॥

अत्र दमयन्त्युपमेया, मनोवृत्तिरुपमानं, हंसग्रहणेच्छा साधारणो धर्मः, उपमा-वाचकं चेवादिपदम्, तेषां समभिव्याहारस्य सत्त्वात् । शुद्धा चेयं शाब्दी आर्थी चेति द्विधा । तथा हि—इवयथादिशब्दानां सादृश्यमात्रवाचित्वं निर्विवादम् । तुल्य-समसदृशादिपदानां तु न सादृश्यमात्रवाचित्वम् । किन्तु 'कमलेन तुल्यं मुख'मि-त्यादितृतीयान्तोपमानवाचकपदसमभिव्याहारे 'कमलनिरूपितसादृश्यवदभिन्नं मुख'-मिति बोधः । 'मुखस्य तुल्यं कमल'मित्यादौ षष्ठ्यन्तोपमेयवाचकपदसमभिव्याहारे 'मुखनिष्ठसादृश्यनिरूपकाभिन्नं कमल'मिति बोधः । 'कमलं मुखं च तुल्य'मित्यादौ प्रथमान्तोभयवाचकपदसमभिव्याहारे उभयविशेष्यकबोधश्चानुभाविकः । अतस्तेषां सादृश्यविशिष्टवाचित्वम् । तत्र इतरविशेषणतया तत्प्रतिपत्तिः । वतेस्तु 'तत्र तस्ये-वे'ति सूत्रेणेवार्थे विहितस्य विशेष्यीभूतसादृश्यमात्रवाचिता । 'तेन तुल्यं क्रिया चेद्-वति'रिति सूत्रेण तुल्यार्थे विहितस्य तुल्यादिपदवत् सादृश्यस्य विशिष्टवाचित्वमित्यु-भयार्थत्वम् । एवं च-"इतराविशेषणीभूतसादृश्यमात्रप्रतिपादने शाब्दी, इतरविशेषणी-भूतसादृश्यप्रतिपादकशब्दसमभिव्याहारे, अर्थात्सादृश्यस्य विशेष्यताप्रतिपत्तेरार्थी"-ति सम्प्रदायः । अन्ये तु-"चन्द्रेण तुल्यं मुखमाह्लादक'मित्यत्राह्लादकत्वस्य न

(१) इत उत्तरं 'वाक्येभ्यो यद्यपि 'चन्द्रप्रतियोगिसादृश्याश्रयो मुख'मिति वाक्यार्थबोधस्तथापि इत्यधिकः पाठः क पुस्तके ।

चन्द्रनिष्ठता प्रतीयते, भिन्नविभक्तिकत्वात् । एवं च चन्द्रस्योपमानताप्रतीतौ विलम्बः। 'मुखस्य तुल्यश्चन्द्र आह्लादक' इत्यत्र धर्मस्योपमेयनिष्ठत्वप्रतीतौ विलम्बः। 'चन्द्रो मुखं तुल्यमाह्लादक'मित्यत्र समानविभक्तिकत्वेन शीघ्रमुभयनिष्ठत्वप्रतीतावप्युपमानोपमेयत्वप्रतीतौ प्रकरणादिसहकार्यन्तरापेक्षेत्युपमाया आर्थत्व''माहुः । तथा च—इवयथावादिशब्दानां तदर्थविहितवतेश्च समभिव्याहारे शाब्दी । तुल्यसमसदृशपदानां तदर्थविहितवतेश्च समभिव्याहारे आर्थीति । उभयविधापि तद्धिते समासे वाक्ये चेति षड्विधा । शाब्दी यथा—

> अद्रिमा पदयोः सरोजवद् वदनं चन्द्र इव प्रकाशकम् ।
> रघुनाथ ! यथैव चन्द्रिका नयने शीतयति प्रियातनुः ॥

अत्र 'सरोजव'दिति वत्प्रत्ययरूपस्तद्धित इवार्थ विहित इति शाब्दी तद्धितगा पूर्णा । न चायं वत्प्रत्ययस्तुल्यार्थे सम्भवति । षष्ठ्यन्तोपपदसत्त्वेन 'तत्र तस्येवे'त्यनेन विधानात् । 'चन्द्र इवे'ति 'इवेन नित्यसमासो विभक्त्यलोपश्चे'ति समासगा । एवं च 'हरिसादृश्य'मित्यर्थक'सहरी'त्यव्ययीभावे 'सचन्द्र'मित्याद्यव्ययीभावेऽपि।तत्र 'अव्ययीभावे चाकाले' इति सहस्य सभावः। न ह्येवं 'सचन्द्रं मुख'मिति प्रयोगापत्तिः । इष्टापत्तेः। एवम् 'अनुगङ्गं वाराणसी'त्यव्ययीभावेऽपि गङ्गावदायतेत्यर्थः। अत्र आयाम एव सादृश्यं न त्वन्यदिति संक्षेपः । द्वितीयार्धे वाक्यगेति । आर्थी यथा—

> कठोरोऽशनिवच्चापः पद्मतुल्यः करो मृदुः ।
> राम ! ते चपले नेत्रे खञ्जनाभ्यां समे मते ॥

अत्र वतिस्तुल्यार्थे 'तेन तुल्यं क्रिया चेद्वति'रिति विहित इत्यार्थी तद्धितगा । 'पद्मतुल्य' इति समासगा । द्वितीयार्धे वाक्यगेति । लुप्ता धर्मवाचकपदलोपे पञ्चधा । वाक्यगा शाब्दी आर्थी च, एवं समासगा । तद्धितगा त्वार्थ्येव । यथा—

> मुखमिन्दुर्यथा पाणिः पल्लवेन समः प्रिये ! ।
> वाचः सुधा इवौष्ठस्ते बिम्बतुल्यं मनोऽश्मवत् ॥

अत्र यथेत्यन्ता श्रौती वाक्यगा, 'सम' इत्यन्ता वाक्यगार्थी 'सुधा इवे'ति समासगा श्रौती, 'बिम्बतुल्य'मिति समासगा आर्थी, 'अश्मव'दिति तद्धितगाऽऽर्थ्येव। एवं 'विषकल्पं मनो वेत्सी'ति ईषदसमाप्त्यर्थककल्पप्प्रत्ययेऽपि तद्धितगाऽऽर्थीति। यथा वा—

> बालकेलिषु तदा यदलावीः खर्परीभिरभिहत्य तरङ्गान् ।
> आविबाणभुजभेदनलीलासूत्रपात इव पातु तदस्मान् ।

अत्र यत्तच्छब्दनिर्देश्यधात्वर्थलवनमुपेयं, सूत्रपात उपमानम् । क्रमिकत्वं साधारणो धर्मस्तु नोक्तः । न च धात्वर्थस्याऽसत्त्वतया लिङ्गसंख्यान्वयायोग्यत्वेन यत्तच्छब्दनिर्देश्यत्वं न सम्भवतीति वाच्यम् , 'यत्करोषि यदश्नासी'त्यादिवद्गत्या तन्निर्देशोपपत्तेः । यथाकथञ्चित्तत्र कर्मनिर्देशासम्भवेऽपि प्रकृते तदसम्भवात् । तरङ्गाणां निर्देशकवचनानुपपत्तेः । अत एव न जलादिकर्मान्तरकल्पनापि । अतोऽत्र धात्वर्थलवनस्यैवो-

पमेयत्वम् । एतेन 'यत्करोषी'त्यादावपि कर्मनिदर्शोक्तिः परास्ता ।

हृत् तस्य यन्मन्मथते रहस्त्वां तद् व्यक्तमामन्त्रयते सुखं यत् ।
तद्वैरिपुष्पायुधमित्रचन्द्रसख्यौचिती सा खलु तन्मुखस्य ॥

इत्यादौ क्रियानिर्देशं विनाऽप्युपपत्तेश्च । वाचकलुप्ता षोढा- समासगम्या । उपमानवाचककर्माधारोभयोपपदाचारार्थविहितक्यच्प्रत्ययगम्या । 'धातोः कर्मणः' 'सुप आत्मनः क्यच्' इत्यनुवृत्तिविशिष्टम् 'उपमानादाचारे' इति पाणिनिसूत्रम्, 'अधिकरणाच्चेति वक्तव्य'मिति वार्तिकं च विधायकम् । उपमानवाचककर्तृपपदाचारार्थविहितक्यङ्प्रत्ययगम्या । 'उपमाने कर्मणि चे'तिसूत्रेणोपमानवाचककर्मोत्तरविहितणमुल्गम्या । तादृशकर्तृपपदोत्तरणमुल्गम्या चेति । यथा-'पल्लवस्निग्धपाटले'ति समासगम्या । 'पुत्रीयति गुरुः शिष्यम्' 'वनीयति छ्यागृहे' इति कर्माऽऽधारयोः क्यचि ।

यद्यशो राजहंसस्य ब्रह्माण्डं पञ्जरायते ।
ग्रासक्षीरायते चास्य पुरस्तात्क्षीरवारिधिः ॥

इति क्यङि ।

गृह्णाति चिकुरग्राहं तमःस्तोमं दिवाकरः ।
प्रातः स भीमसञ्चारं सञ्चरत्यतिभीषणः(१) ॥

इति णमुलि । उपमानलोपे वाक्ये समासे चार्थ्येवेति द्विधा । यथा-'सदृशं छतवाक्यस्य किञ्चिन्नास्ति मनोहरम् ।' इयं वाक्यगार्थी । 'न चन्द्रसदृशं तेजो भिन्नमस्ति प्रकाशकम् ।' इति समासगार्थी । इयं तद्धितगा न सम्भवति । उपमाप्रतिपादकस्य तद्धितस्य वतिकल्पबादेरुपमानादेव विधानेन तदनुपदानेऽसम्भवात् । न वा श्रौती, इवादीनामुपमानमात्रान्वितत्तया तदनुपदाने तेषामप्यनुपादानात् । 'त्वमिव कोऽपि पराऽपकृतौ कृती न दृदृशे न च मन्मथ ! शुश्रुवे ।' इत्यादावपि 'इवे'त्यस्य तुल्यार्थकतया आर्थीत्वाऽविवाद इति सम्प्रदायः । 'तवेव महिमा राम ! न कस्याप्यत्र दृश्यते ।' इत्यादौ श्रौत्यपि सम्भवतीति युक्तं प्रतीमः । ''अत्रोपमानस्यैवाभावान्नोपमात्वसम्भवः, तेन चिन्त्यमेत''दिति काव्यप्रदीपः । उपमानाऽभावबोध एव (२)उपमानलुप्तोपमेति युक्तम् । धर्मोपमावाचिपदद्वयलोपवती क्विब्गा समासगा च द्वेधा । क्विब्गा यथा—

कासारन्ति पयोधयो विषधराः कर्पूरहारन्ति च
श्रीखण्डन्ति दवानला मदगजाः सारङ्गशावन्ति च ।
वासन्त्युग्रटशत्रवः किमपरं पुष्पन्ति वज्राण्यपि
श्रीदामोदरसोदरे ! भगवति ! त्वत्पादनिष्ठात्मनाम् ॥

---

(१) 'अत्र चिकुरग्राह'मिति कर्मणि 'भीमसञ्चार'मिति च कर्तरि णमुल्प्रत्ययः।

(२) सादृश्याभावज्ञाने सति, अर्थादसमत्वप्रतीतौ सत्यामित्यर्थः । सादृश्याभावज्ञानमेवोपमानलुप्तत्वव्यवहारप्रयोजकमिति भावः । तत्त्वं तु—अत्राऽसमत्वे पर्यवसानम्, कल्पनीयं वोपमानं किञ्चिदुत्कृष्टमिति ।

सविता विधवति विधुरपि सवितरति तथा दिनन्ति यामिन्यः ।
यामिनयन्ति दिनानि च सुखदुःखवशीकृते मनसि ॥

समासगा यथा—

अयं क इत्यन्यनिवारकाणां गिरा मुहुर्द्वारि विमुच्य कण्ठम् ।
दृशं ददे विस्मयनिस्तरङ्गां स लङ्घितायामपि राजसिंहः ॥

अत्र 'राजसिंह' इति । उपमानधर्मवाचिपदद्वयलोपवती वाक्यगा समासगा चार्थी । आद्या यथा—'न तन्मुखस्य प्रतिमा चराचरे' इति ।

'भ्रमर ! भ्रमता दिगन्तराणि क्वचनाऽऽसादितमीक्षितं श्रुतं वा ।
वद सत्यमपास्य पक्षपातं, यदि जातीकुसुमानुकारि पुष्पम् ॥'

इति समासगा । उपमोपमेयवाचिपदद्वयलोपे यथा—'कृपाणोदग्रदोर्दण्डः स सहस्रायुधीयति ।' अत्र 'सहस्रायुधमिवात्मानमाचरती'त्युपमेयस्यात्मनोऽनुपादाना- दिवादेरनुपादानाच्च । एवमष्टादश भेदाः । 'हंसायते' इत्यादौ कवङा कर्तुरेवो- पमेयत्वोपादानेन द्विलोपवत्या इदमप्युदाहरणम् । यद्यपि उपमानोपमेययोरुपमाने- वाद्योर्लोपेनान्यदपि भेदद्वयं द्विलोपवत्याः सम्भवति, तथापि तत्रोपमायाः प्रसङ्ग एव नास्तीति नोदाहृता । उपमेयभिन्नत्रितयवाचिपदलोपे समासगा यथा-'मृग- नयना हरते मुनेर्मन' इति । अत्र 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिरुत्तरपदलोपश्चे'ति वार्तिकेन समासो विहितः । तस्य चायमर्थः—सप्तम्यन्तमुपमानं च पूर्वपदं यस्य तस्य समासस्य पदान्तरेण बहुव्रीहिः पूर्वसमासावयवस्य चोत्तरपदस्य लोप इति । 'हस्ते स्थितं धनं यस्य स हस्तधनः' 'मृगनयनमिव नयनं यस्याः सा मृगनयने'- त्युदाहरणे । न चात्र मृगस्योपमानत्वाभावात्कथमुपमानपूर्वपदत्वमिति वाच्यम् । अवयवधर्मेण समुदायव्यपदेशात् । एवं च मृगनयनस्योपमानस्यानुपादानात् त्रितय- लोपः । यदा तु मृगपदमेव लक्षणया तन्नयनपरं, मृग एव वा चञ्चलतयोपमानं, 'मृगस्येव नयने यस्या' इति वा समासः, तदा द्विलोप एव पूर्वोक्तो ज्ञेयः । अन्ये तु— "उपमेयधर्मोपमावाचकपदलोपेन 'अयःशूलदण्डदुराचारे'च्छावा'निति बोधात् त्रिलोप- वत्या उदाहरणम् 'आयःशूलिक' इति । अत्र हि 'अन्विच्छती'त्यनुवृत्तौ 'अयःशूल- दण्डाजिनाभ्यां ठक्ठञा'विति ठकि 'अयःशूलेनान्विच्छति आयःशूलिक' इति । अत्रायःशूलपदलक्षितदुराचार उपमेयः । तेनात्रोपमेयवाचिधर्मवाच्युपमावाचिपदत्रय- लोप" इत्याहुः । 'अध्यवसानप्राधान्येनातिशयोक्तिरूपत्वान्नेयमुपमे'ति काव्यप्रकाशः । तेन पूर्णोपमाभेदैः सह पञ्चविंशतिरुपमाभेदाः ।

इदमप्यवधेयम्—साधारणो धर्मः क्वचिदेकः, क्वचिद्भिन्नोऽप्येकवाचकानुप्रवेशेनैकवद् भासमानः, क्वचिद् भिन्नपदोपात्तोऽपि बिम्बप्रतिबिम्बभावेनैक्यमापाद्यमानो भासते । यथोक्तोदाहरणे दमयन्त्यां मनोवृत्तौ च निश्चलताया ऐक्यम् । द्वितीयस्तु—'हंसीव कृष्ण ! ते कीर्तिः स्वर्गङ्गामवगाहते' इत्यत्राकाशगङ्गावगाहनस्य स्वर्गपृथिव्यवगाह-

नस्य च वस्तुतो भिन्नत्वेऽप्येकवाचकानुप्रवेशेनैकवद्भानम् । तृतीयस्तु—

'गुणदोषौ बुधो गृह्णन्निन्दुक्ष्वेडाविवेश्वरः ।
शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति ॥'

इत्यत्र भिन्नपदोपात्तयोरपि गुणेन्द्वोर्दोषक्ष्वेडयोश्च बिम्बप्रतिबिम्बभावं प्रकल्प्य साजात्येनैक्यम् । भिन्नयोरपि धर्मयोः कल्पितसादृश्येनोपादानं बिम्बप्रतिबिम्बभाव इति दिक् ।

बहूनामुपमानानामेकस्मिन्नुपमेयके ।
अभिन्ने वाथ भिन्ने वा धर्मे मालोपमा मता ॥
अनयेनेव नृपतिर्धाष्ट्र्येनेव कुलाङ्गना ।
कार्पण्येनेव धर्मात्मा कल्पो (१) गर्वेण दूष्यते ॥
पीयूषमिव सुस्वादुर्भास्वानिव विबोधकृत् ।
ज्ञानीव तत्त्वनिष्णातः सतां वचनविस्तरः ॥
यत्र यात्युपमानत्वमुपमेयं यथोत्तरम् ।
सा भिन्नेनाप्यभिन्नेन धर्मेण रशनोपमा ॥
साधोर्धीवत् तता विद्या विद्यावद्दोषहा क्रिया ।
क्रियावत्प्रीतिकृद्वाणी वाणीवत्कीर्तिरुज्ज्वला ॥
यस्यास्ति विमलं शास्त्रं तद्वद्वित्तं तथा मनः ।
मनोवद् व्याहृति(२)स्तद्वद्यशो विश्वत्रयीमुदे ॥

'एते उपमान्तर्भूता एव नालङ्कारान्तर'मिति मूलकारः । यथा वा—

अङ्के विदर्भेन्द्रपुरस्य शङ्के न संममौ नैष तथा समाजः ।
यथा पयोराशिरगस्त्यहस्ते यथा जगद्वा जठरे मुरारेः ॥—॥ ११ ॥

अनन्वयालङ्कारमाह—

**उपमानोपमेयत्वे यत्रैकस्यैव जागृतः ।**
**इन्दुरिन्दुरिवेत्यादौ भवेदयमनन्वयः ॥ १२ ॥**

उपमानेति । यत्रैकस्यामुपमितौ उपमानोपमेययोरभेदस्तत्रानन्वय इत्यर्थः । एकस्यामिति विशेषणादुपमेयोपमायां रशनोपमायां च नातिव्याप्तिः । 'इन्दुरिन्दुरिवे'ति लक्ष्यम् । यथा वा—

आघूर्णितं पक्ष्मलमक्षियुग्मं प्रान्तद्युतिश्वैत्यजितामृतांशु ।
अस्या इवास्याश्चलदिन्द्रनीलगोलामलश्यामलतारतारम् ॥

अत्रानन्यसदृशत्वप्रतिपिपादयिषयोपमानोपमेयभावो वैवक्षिकः । न चैवं द्वितीयेन्दुपदस्यान्यसदृशव्यवच्छेदतात्पर्यकत्वाल्लाटानुप्रासान्तर्गतिरिति वाच्यम् । 'इन्दुश्चन्द्र इवे'त्यत्र लाटानुप्रासाभावेऽप्यनन्वयालङ्कारसम्भवात् । अत एवानन्वये तु शब्दैक्य-

(१) कल्पः—समर्थ इति यावत् । (२) व्याहृतिः—वचनम् ।

मौचित्यादानुषङ्गिकमित्युक्तम् । न चाऽपर्यायप्रवृत्तोपमेयोपमायामतिव्याप्तिः, उपमितिक्रियाया एकत्वादिति वाच्यम् । अनुगामिना साधारणधर्मेणोपमितेर्विशेषणीयत्वात् । न ह्युपमेयोपमायामनुगामी साधारणधर्मः किन्तु बिम्बप्रतिबिम्बभावापन्नः । अत एव—'धर्मार्थकामेषु समं प्रपेदे यथा तथैवाऽवरजेषु वृत्तिम् ।' इत्यादौ अवरजविषया वृत्तिर्धर्मार्थकामविषयवृत्तिसदृशीति वृत्तेरुपमानोपमेयत्वेऽप्यनुगामिना धर्मेण नेयमुपमा, किन्त्ववरजानां धर्मादीनां च बिम्बप्रतिबिम्बभावेनेति न तत्रानन्वयप्रसक्तिः । एवञ्च—उपमानतावच्छेदकोपमेयतावच्छेदकसाधारणधर्मावच्छेदकैक्यविशिष्टा यत्रैकोपमितिक्रिया तत्रानन्वय इति तत्त्वम् । व्यङ्ग्यानन्वयो यथा—

श्रीराम ! ताटकान्तक ! तव दर्शनसम्भवोऽद्य मे हर्षः ।
भाग्येन पुनर्भविता समये त्वद्दर्शनेनैव ॥

अत्र 'त्वद्दर्शनभवा प्रीतिः पुनरपि बहुना कालेन त्वद्दर्शनेनैव भवेद्भाग्येने'त्युक्तिभङ्ग्या 'त्वद्दर्शनजन्यप्रीतेः सैव सदृशी न त्वितरप्रभवे'ति व्यज्यते ॥ १२ ॥

उपमेयोपमामाह—

**पर्यायेण द्वयोस्तच्चेदुपमेयोपमा मता ।**
**धर्मोऽर्थ इव पूर्णश्रीरर्थो धर्म इव त्वयि ॥ १३ ॥**

पर्यायेणेति । अनन्वये द्वितीयसदृशव्यवच्छेदः उपमेयोपमायां तृतीयसदृशव्यवच्छेदः फलम् । इयं च पर्यायप्रवृत्ता अपर्यायप्रवृत्ता चेति द्विधा । आद्यामुदाहरति—धर्म इति । यथा वा—

अमलेव मतिर्मतिरिव कमला तनुरिव विभा विभेव तनुः ।
धरणीव धृतिर्धृतिरिव धरणी सततं विभाति बत ! यस्य ॥

द्वितीया यथा—

तद्वल्गुना युगपदुन्मिषितेन ताव-
त्सद्यः परस्परतुलामधिरोहतां द्वे ।
प्रस्पन्दमानपरुषेतरतारमन्त-
श्चक्षुस्तव प्रचलितभ्रमरं च पद्मम् ॥

अत्र सादृश्यस्यैकेन व्यापारेणोपादानात् । अत्राप्युपमावत्पूर्णादिभेदा उन्नेयाः १३॥

प्रतीपोपमामाह—

**विख्यातस्योपमानस्य यत्र स्यादुपमेयता ।**
**इन्दुर्मुखमिवेत्यादौ स्यात्प्रतीपोपमा तदा ॥ १४ ॥**

विख्यातस्येति । विख्यातस्येतिविशेषणात् स्वकल्पितोपमानस्योपमेयत्वे न प्रतीपोपमालङ्कारः । 'इन्दुर्मुखमिवे'ति लक्ष्यम् । इयं च वक्ष्यमाणप्रतीपापेक्षया भिन्ना, उपमाया वाच्यत्वात् ॥ १४ ॥

ललितोपमामाह—

**उपमाने च लीलादिपदाढ्ये ललितोपमा ।**
**त्वन्नेत्रयुगलं धत्ते लीलां नीलाम्बुजन्मनोः ॥ १५ ॥**

उपमाने चेति । उपमानं यत्र लीलादिपदेनाढ्यं सम्पन्नमित्यक्षरार्थः । अन्यलीलामन्यः कथं वहेदिति लीलादिपदसमभिव्याहृतोपमानवाचकपदेन यत्रोपमेये उपमानधर्मारोपकल्पनं तत्र ललितोपमेत्याशयः(१) । 'त्वन्नेत्र'इति लक्ष्यम्, नेत्रयुगले नीलकमलगतलीलापदार्थारोपात् । यथा वा—

राजौ द्विजानामिह राजदन्ताः संबिभ्रति श्रोत्रियविभ्रमं यत् ।
उद्वेगरादिमृजावदाताश्चत्वार एते तदवैमि मुक्ताः ॥

इयं चोपमेय(२)धर्मारोपेणापि । यथा—

रे सारङ्गा ! वनवसतयस्तत्त्वमाख्यात यूयं
कुत्राधीतं त्रिभुवनमनोहारि चाञ्चल्यमक्ष्णोः ।
आं ! जानीमो गमनसमये हन्त ! कान्तारसीम-
न्येकाकिन्याः कुवलयदृशो लुण्ठिता लोचनश्रीः ॥

इयं च पदार्थवृत्तिनिदर्शनेत्याहुः ॥ १५ ॥

स्तबकोपमामाह--

**अनेकार्थस्य युग्मस्य सादृश्ये स्तबकोपमा ।**
**श्रितोऽस्मि चरणौ विष्णोर्भृङ्गस्तामरसं यथा ॥ १६ ॥**

अनेकेति । अत्र भृङ्गेण स्वस्य तामरसेन चरणयोर्नोपमा, किन्तु विशिष्टस्येति स्तबकोपमात्वम् । यथा वा—

लक्ष्मीविलासवसतेः सुमनःसु मुख्या-
दस्माद्विकृष्य भुवि लब्धगुणप्रसिद्धिम् ।
स्थानान्तरं तदनु निन्युरिमां विमान-
वाहाः पुनः सुरभितामिव गन्धवाहाः ॥—॥ १६ ॥

सम्पूर्णोपमामाह—

**स्यात्सम्पूर्णोपमा यत्र द्वयोरपि विधेयता ।**
**पद्मानीव विनिद्राणि नेत्राण्यासन्नहर्मुखे ॥ १७ ॥**

स्यादिति । द्वयोरिति सप्तमी । उपमानोपमेययोर्यत्रैकस्य धर्मस्य विधेयता

---

(१) एतदनन्तरञ्च—'तेनोपमानोपमेययोरन्यतरत्र धर्मारोपे ललितोपमा । अत एव न रूपकेऽतिव्याप्तिः, तस्य तादात्म्यारोपरूपतया भेदात्' इत्यधिकं क-पुस्तके ।

(२) चोभय-इति क ।

वाच्यता अज्ञातज्ञाप्यता, तत्रेत्यर्थः । एकधर्मवत्त्वेनोपमानोपमेयभावो यत्रेत्याशयः । विनिद्रत्वलक्षितविकासस्योभयसाधारण्याल्लक्ष्यत्वम् । इयं च पूर्वोक्तपूर्णोपमातो भिन्ना । तत्रोपमानधर्मत्वेन ज्ञातस्योपमेयनिष्ठत्वबोधः । इह तु श्लेषेणैकदैवोभयनिष्ठत्व-बोध इति । 'अयं चोपमेयोपमाभेद' इति केचित् ॥ १७ ॥

रूपकमाह—

यत्रोपमानचित्रेण सर्वथाप्युपरज्यते ।
उपमेयमयी भित्तिस्तत्र रूपकमिष्यते ॥ १८ ॥

यत्रेति । उपमानरूपचित्रेणोपमेयरूपा भित्तिः सर्वथा स्वतादात्म्येनैवोपरज्यते आहार्यनिश्चयविषयीक्रियते यत्र, तत्र रूपकमित्यक्षरार्थः । उपमानाभिन्नत्वेनोपमेयस्या-ऽऽहार्यनिश्चयो रूपकमिति फलितार्थः । उपमाने चित्रतादात्म्यारोपाल्लक्ष्यमपीदमेव । अत्रेदं बोध्यम्— रूपकं त्रिधा, सावयवं निरवयवं परम्परितं च । अवयवो धर्मः । आद्यं समस्तवस्तुविषयमेकदेशविवर्ति चेति द्विधा । द्वितीयमपि शुद्धं मालारूपं चेति द्विधा । तृतीयमपि शुद्धं मालारूपं चेति द्विधेति । आरोप्यारोपविषयारोपणीयधर्माणां च शाब्दत्वे समस्तवस्तुविषयम् । अन्यतरस्य सामर्थ्यलभ्यत्वे एकदेशविवर्ति । आरोप्या-रोपविषययोरेव शाब्दत्वे शुद्धम् । एकस्मिन्ननेकारोपे मालारूपकं चतुर्थम् । आरोप्या-रोपविषययोर्धर्माणां चैकवाचकानुप्रवेशेन प्रकृतरूपकनिर्वाहकं यदप्रकृतरूपकं तत्परम्परि-तम् । एवंदर्शनं रूपकमिति । यथा—

तडिदियं क्षणलोचनगोचरा मम रहस्यमिथं हृदि वर्तते ।
किमपि वेद्मि दृगन्तनिरीक्षणान्मनसि रागलता मयि वर्धते ॥

इदं सावयवभेदद्वयस्य निरवयवशुद्धस्य चोदाहरणम् । अत्र प्रथमचरणे आरोप्या-रोपविषयारोपणीयधर्माणां शाब्दत्वात्समस्तवस्तुविषयं सावयवम् । इदं चात्र द्रव्य-साद्रव्यरूपकमिति मूले उक्तम् । द्वितीयचरणे रहस्यत्वारोपेण हृदये मञ्जूषात्वारोपस्या-र्थत्वात्तत्र स्थापनादिधर्माणामर्थलभ्यत्वादेकदेशविवर्ति सावयवम् । इदं च रूपितरूपक-मित्यत्रोक्तम् । उत्तरार्धे रागे लतात्वारोपस्य शाब्दत्वाद्धर्मारोपाभावाच्च शुद्धम् । इदं चाभासरूपकमित्यत्रोक्तम् । यथा वा—

सेयं मृदुः कौसुमचापयष्टिः स्मरस्य मुष्टिग्रहणार्हमध्या ।
तनोति नः श्रीमदपाङ्गमुक्तां मोहाय या दृष्टिशरौघवृष्टिम् ॥

अत्र दमयन्त्यां चापयष्टितादात्म्यम् । यथा वा—

केशान्धकारादथ दृश्यभालस्थलार्धचन्द्रा स्फुटमष्टमीयम् ।
एनां यदासाद्य जगज्जयाय मनोभुवा सिद्धिरसाधि साधु ॥

न चात्र 'केशा अन्धकारा इव, भालमर्धचन्द्र इव, इयमष्टमीवे'त्युपमासन्देहसङ्करा-लङ्कारोऽस्त्विति वाच्यम् । दमयन्त्यामष्टमीतादात्म्यारोपे सिद्धे तदुत्तरमेव धर्मत्व-

सिद्धया तदारोपात् । द्वितीयं यथा—

वेलामतिक्रम्य पृथुं मुखेन्दोरालोकपीयूषरसेन तस्याः ।
नलस्य रागाम्बुनिधौ विवृद्धे तुङ्गौ कुचावाश्रयतः स्म दृष्टी ॥

अत्र रागे समुद्रत्वारोपः शाब्दः । तेन कुचयोः कूलत्वारोपो दृष्ट्योर्मज्जमान(?)-मीनतादात्म्यारोपश्चार्थ इति । माला यथा—

चातुर्यस्य खनिर्नानागुणलीलागृहम् ।
मम विश्रामधरणी शृङ्गाराब्धिरियं प्रिया ॥

यथा वा—

अभ्याहारः स्मरहरशिरश्चन्द्रशेषस्य शेष-
स्याहेर्भूयःफणसमुचितः काययष्टीनिकायः ।
दुग्धाम्भोधेर्मुनिचुलुकनत्रासनाशाभ्युपायः
कायव्यूहः क्व जगति न जागर्त्यदःकीर्तिपूरः ॥

परम्परितं यथा—

तरङ्गिणी भूमिभृतः प्रसूता जानामि शृङ्गाररसस्य सेयम् ।
लावण्यपूरोऽजनि यौवनेन यस्यां तथोच्चैःस्तनता-घनेन ॥

अत्र 'भूमिभृदेव भूमिभृत्, घन एव घनः, उच्चैःस्तनतैव उच्चैःस्तनता' इति धर्माणामेकवाचकानुप्रवेशेन श्लेषेण च परम्परितम् । तात्पर्यवशात्समासविरुद्धानामपि श्लिष्टपदादुपस्थितौ तद्रूपनिरूपणात् । तस्य प्रकृतरूपकनिर्वाहकत्वात् । आरोप्यारोपविषययोः प्रकृताप्रकृतयोरेकवाचकानुप्रवेशेन परम्परितं यथा ।

पुरो हठाक्षिप्ततुषारपाण्डुरच्छदा वृतेर्वीरुधि बद्धविभ्रमाः ।
मिलन्निमीलं ससृजुर्विलोकिता नभस्वतस्तं कुसुमेषु-केलयः ॥

अत्र 'कुसुमेषु केलय एव कुसुमेषुकेलयः' इति रूपकेण लतायां स्त्रीरूपकनिर्वाहः । अत इदमेकदेशविवर्त्यपि । एवमन्यदप्यूह्यम् । केचित्तु-"रूपकं द्विविधम्, अभेदरूपकं ताद्रूप्यरूपकं च । आरोप्यारोपविषययोरभेदपर्यवसायि प्रथमम् । भेदे प्रतीयमान एव तदीयधर्मारोपमात्रपर्यवसितं द्वितीयम् । द्विविधमपि विषयिणोऽधिकन्यूनत्वानुभयोक्त्या च षड्विधम् । यथा—

विना पतत्रं विनतातनूजैः समीरणैरीक्षणलक्षणीयैः ।
मनोभिरासीदनणुप्रमाणैर्न लङ्घिता दिक्कतमा तदश्वैः ।

यथा वा—

शम्भुर्विश्वमवत्यद्य स्वीकृत्य समदृष्टिताम् ।
अयमास्ते विना शम्भुस्तार्तीयीकं विलोचनम् ॥
अयं हि धूर्जटिः साक्षाद्येन दग्धाः पुरः क्षणात् ।

इदमभेदरूपकं त्रिविधम् ।

अस्या मुखेन्दुना लब्धे नेत्रानन्दे किमिन्दुना ।

साध्वीयमपरा लक्ष्मीरसुधासागरोदिता ॥

अयं कलङ्किनश्चन्द्रान्मुखचन्द्रोऽतिरिच्यते ।

इदं त्रिविधं ताद्रूप्यरूपक"मित्याहुः । अत्र न्यूनत्वाधिकत्वोक्तौ कथमभेदभानम् । प्रतीपव्यतिरेकाभ्यां चास्य को विशेष इत्यपि चिन्त्यम् (१) । तस्मादाद्यमेकदेशविवर्ति रूपकम् । अन्यच्च विशेषोक्त्यत्युक्तिप्रतीपव्यतिरेकालङ्कारान्तर्गतमिति युक्तम् । एवञ्च 'एकगुणहानौ गुणसाम्याधिक्ययोर्विशेषोक्ति'रिति वामनोक्तिरपि सङ्गच्छते। अत एव,

किमसुभिर्ग्लपितैर्जड ! मन्यसे मयि निमज्जतु भीमसुतामनः ।

मम किल श्रुतिमाह तदर्थिकां नलमुखेन्दुपरां विबुधः स्मरः ॥

इत्यत्र प्रसिद्धचन्द्रो न निर्याणकालिकमनःप्रवेशतात्पर्यविषयः, किन्तु नलमुखचन्द्र एवेति व्यतिरेकालङ्कार एव ।

एतत्तरुस्तरुणि ! राजति राजजम्बूः

स्थूलोपलानिव फलानि विसृज्य यस्याः ।

सिद्धस्त्रियः प्रियमिदं निगदन्ति दन्ति-

यूथानि केन तरुमारुरुहुः पथेति ॥

इत्यादाविव रूपकव्यञ्जको वेति कृतमप्रसक्तचिन्तनया ॥ १८ ॥

**समानधर्मयुक्साध्यारोपात्सोपाधिरूपकम् ।**

**उत्सिक्तक्षितिभृल्लक्षपक्षच्छेदपुरन्दरः ॥ १९ ॥**

समानेति। समानधर्मयोगेन साध्यो यत्र प्रकृतारोपस्तत्सोपाधिरूपकम् । प्रकृतारोपनिर्वाहकोऽप्रकृतारोपो यत्रेत्याशयः । उत्सिक्तेति । अत्र 'क्षितिभृत एव क्षितिभृतः, पक्ष एव पक्षः' इत्यप्रकृतारोप एकवाचकानुप्रविष्टः प्रकृतपुरन्दरत्वारोपनिर्वाहकः । एतदेव परम्परितम् ॥ १९ ॥

**पृथक्कथितसादृश्यं दृश्यसादृश्यरूपकम् ।**

**उल्लसत्पल्लवशाखस्ते भ्राजते भुजभूरुहः ॥ २० ॥**

पृथगिति । आरोप्यारोपविषयारोपणीयधर्माणां शाब्दत्वे इत्यर्थः। उल्लसदिति ।

(१) न्यूनत्वाधिकत्वोक्तिस्थलेऽपकर्षोत्कर्षयोर्विभावनमपि तद्व्यतिरिक्तसकलगुणसाधारण्यप्रतीतेरभेददार्ढ्योपादकत्वेन चमत्कारातिशयमुत्पादयति । प्रतीपव्यतिरेकयोश्च सादृश्यगर्भितत्वात्सादृश्यस्यापि भेदघटितत्वाद्भेद एव पर्यवसानम् , अभेदरूपके त्वापाततः सादृश्यप्रतीतौ सत्यामपि तन्मूलकाऽभेदप्रतीतेरेव प्राधान्यमित्यभेद एव पर्यवसानम् । अयमेव च तास्मात्सेतस्य विशेषः सुस्पष्ट एवेति सर्वं सुस्थम् ।

भुजे वृक्षत्वारोपोत्तरमेव पञ्चाङ्गुलीषु शाखात्वस्यारोपसम्भवात् । इदमेव समस्तवस्तुविषयं सावयवम् ॥ २० ॥

**स्यादङ्गयष्टिरित्येवंविधमाभासरूपकम् ।**
**अङ्गयष्टिधनुर्वल्लीत्यादि रूपितरूपकम् ॥ २१ ॥**

स्यादिति । इदमेव निरवयवं शुद्धम् । सावयवैकदेशविवर्ति अङ्गयष्टीति । अत्राङ्गयष्ट्यां धनुर्वल्लीत्वारोपः शाब्दोऽङ्गे धनुष्ट्वारोप आर्थ इति । रूपितेनारोपेण रूपकमारोप इति योगः । यथा 'गुणसिन्धु'रित्यादौ गुणे जलत्वारोप आर्थ इति । मालारूपकं रशनारूपकं च 'नालङ्कारान्तराण्यमी' इति वक्ष्यमाणत्वान्न लक्षितम् ॥२१॥

**परिणामोऽनयोर्यस्मिन्नभेदः पर्यवस्यति ।**
**कान्तेन पृष्टा रहसि मौनमेवोत्तरं ददौ ॥ २२ ॥**

परिणाम इति । अनयोरारोप्यमाणारोपविषययोः, पर्यवस्यति क्रियान्वये फलितो भवतीत्यर्थः । आरोप्यस्यारोपविषयात्मनैव क्रियान्वय इति भावः । कान्तेनेति । मौनस्य उत्तरवचनात्मनैव दानक्रियान्वयात् । यथा वा—

प्लुष्टः स्वैश्चापरोपैरपि सह मकरेणात्मभूः केतुनाऽभू-
द्धर्ता नस्त्वत्प्रसादादथ मनसिजतां मानसो नन्दनः सन् ।
भ्रूभ्यां ते तन्वि ! धन्वी भवतु तव सितैर्जैत्रभल्लः स्मितैः स्ता-
दस्तु त्वन्नेत्रचञ्चत्तरशफरयुगाधीनमीनध्वजाङ्कः ॥

अत्र भ्रुवो धनुरात्मनैव क्रियान्वयः । यथा वा—'प्रसन्नेन दृगब्जेन वीक्षते मदिरेक्षणा' इत्यत्राब्जस्यैवारोप्यमाणस्यारोपविषयदृगात्मना वीक्षणान्वयो न तु अब्जात्मना दृशोः, 'मयूरव्यंसकादयश्चे'ति समासेनोत्तरपदार्थप्राधान्यावगमात् । यद्यप्युपमितसमासः स्यात् पूर्वपदप्राधान्यं च, स तु न सम्भवति । प्रसन्नेनेति साधारणधर्मवाचकपदप्रयोगात् । उपमितसमासस्यो'पमितं व्याघ्रादिभिः सामान्याप्रयोग' इत्यनुशासनेन साधारणधर्मवाचकपदाप्रयोगे विधानात् । एवं चात्र परिणाम एव । अयमपि रूपकवन्न्यूनाधिकधर्मविशिष्टो ज्ञेयः । यथा वा—

वनेचराणां वनितासखानां दरीगृहोत्सङ्गनिषक्तभासः ।
भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः ॥

अत्रौषधीनां दीपत्वेन सुरतोपयोग्यन्धकारनाशे उपयोगः । अतैलपूरत्वेनाधिक्यं च । 'अस्य रूपकान्तर्गति'रिति काव्यप्रकाशः ॥ २२ ॥

उल्लेखालङ्कारमाह—

**बहुभिर्बहुधोल्लेखादेकस्योल्लेखता मता ।**
**स्त्रीभिः कामः प्रियैश्चन्द्रः कालः शत्रुभिरैक्षि सः ॥ २३ ॥**

बहुभिरिति । एकस्मिन्नारोपविषयेऽनेककर्तृकोऽनेकरूपारोप उल्लेख इत्यर्थः ।

तेन रूपकपरिणामादिषु नातिव्याप्तिः । क्वचिदयं भ्रान्तिगर्भोऽपि । यथा—

अस्य क्षोणिपतेर्विहायसि यशोराशौ चमत्कुर्वति
द्राक् कर्पूररजोभ्रमेण वणिजो वीथीमुपस्कुर्वते ।
चञ्चुं चञ्चलयन्ति चन्द्रकिरणभ्रान्त्या चकोराः, पयो-
बुद्ध्या व्योम्नि नियोजयन्ति कलशीमाभीरवामभ्रुवः ॥

अन्यत्र—

एकेन बहुधोल्लेखेऽप्यसौ विषयभेदतः ।
गुरुर्वचस्यर्जुनोऽयं कीर्तौ भीष्मः शरासने ॥
अक्रशं कुचयोः कृशं वलग्ने विपुलं चक्षुषि विस्तृतं नितम्बे ।
अरुणाधरमाविरस्तु चित्ते करुणाशालि कपालिभागधेयम् (१) ॥
प्रसूनता तत्करपल्लवस्थितैरतुच्छविच्छेर्यौमविराजिभिः पथि ।
मुखेऽमराणामनले रदावलेरभाजि लाजैरनयोज्झितैर्द्युतिः ॥

तथा—

तथा प्रतिष्ठाहुतिधूमपद्धतिर्गता कपोले मृगनाभिशोभिताम् ।
ययौ दृशोरञ्जनतां श्रुतौ श्रिता तमालकीलामलिकेऽलकायिता ॥

अत्र काव्यप्रकाशः-'उपमेये उपमानतादात्म्यारोपरूपरूपक एवान्तर्भावा-न्मालारूपकादिवन्नेदमलङ्कारान्तर'मित्याह । यथा वा—

अलसं वपुषि श्लथं दुकूले चपलं चेतसि धूसरं कपोले ।
चकितं नयने स्तने विलोलं तव नामश्रवणं तनूदरीणाम् ॥

पूर्वोदाहरणेषु ग्राह्यगतधर्मभेदः, इह तु गृहीतगतधर्मारोपेण ग्राह्यभेद इति विवेकः॥२३

अपह्नुत्यलङ्कारमाह—

**अतथ्यमारोपयितुं तथ्याऽपास्तिरपह्नुतिः ।**
**नायं सुधांशुः किं तर्हि व्योमगङ्गासरोरुहम् ॥ २४ ॥**

अतथ्यमिति । तथ्यधर्मनिषेधपूर्वकाऽतथ्यधर्मारोपोऽपह्नुतिरित्यर्थः । निषेध-पूर्वकत्वमेव रूपकाद्भेदः । नायमिति । तथ्यचन्द्रत्वनिषेधपूर्वमतथ्यसरोरुहत्वा-रोपात् । तथ्यत्वं चात्र न प्रमाविषयत्वं, किन्तु निश्चयविषयत्वम् । तेन कविकल्पित-धर्मनिषेधेनान्यधर्मारोपेऽपह्नुत्यलङ्कारः । यथा—

अनवगतविभेदं सुन्दरं वस्तु किञ्चि-
ज्जडमतिरिह कश्चिन्मोक्ष इत्याचचक्षे ।
मम तु मतमनङ्गस्मेरताहण्यघूर्णं-
न्मदकलमदिराक्षीनीविमोक्षो हि मोक्षः ॥

(१) पद्यमिदं ख पुस्तके नास्ति ।

यथा वा—

द्विजपतिग्रसनाहितपातकप्रभवकुष्ठसितीकृतविग्रहः ।
विरहिणीवदनेन्दुजिघत्सया स्फुरति राहुरयं न निशाकरः ॥

निषेधश्च क्वचिच्छब्दतः क्वचिदर्थतोऽपि । तेन—

यदस्य यात्रासु बलोद्धतं रजः स्फुरत्प्रतापानलधूममञ्जिम ।
तदेव गत्वा पतितं सुधाम्बुधौ दधाति पङ्कीभवदङ्कतां विधौ ।

इत्यत्र 'तदेवे'त्येवकारेण कलङ्कनिषेधस्यार्थत्वेनापह्नुतिरलङ्कारः । यथा वा—

साक्षात्सुधांशुर्मुखमेव भैम्या दिवि स्फुटं लाक्षणिकः शशाङ्कः ।
एतद्भ्रुवौ मुख्यमनङ्गचापं पुष्पं पुनस्तद्गुणमात्रवृत्त्या ॥

अत्रापि निषेध आर्थः ॥ २४ ॥

पर्यस्तापह्नुत्यलङ्कारमाह—

**पर्यस्तापह्नुतिर्यत्र धर्ममात्रं निषिध्यते ।**
**नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम् ॥ २५ ॥**

पर्यस्तेति । धर्ममात्रं, धर्मिणि धर्मनिषेध इत्यर्थः । धर्मिणि धर्मनिषेधपूर्वक-तद्धर्मस्यान्यत्रारोपः पर्यस्तापह्नुतिः । पूर्वमन्यधर्मारोपः अत्रान्यत्र धर्मारोप इति भेदः । नायमिति । सति चन्द्रे चन्द्रत्वनिषेधेन कामिनीमुखे चन्द्रत्वारोपात् । यथा वा—

जानेऽतिरागादिदमेव बिम्बं बिम्बस्य च व्यक्तमितोऽधरत्वम् ।
द्वयोर्विशेषावगमाऽक्षमाणां नाम्नि भ्रमोऽभूदनयोर्जनानाम् ॥

अत्राधरेऽधरबिम्बत्वनिषेधपूर्वो बिम्बफले हेतूपन्यासपुरःसरोऽधरबिम्बत्वारोपः । अन्यत्र तु—

स एव युक्तिपूर्वश्चेदुच्यते हेत्वपह्नुतिः ।
नेन्दुस्तीव्रो न निश्यर्कः सिन्धोरौर्वोऽयमुत्थितः ॥

स एव, निषेध एवेत्यर्थः ।

अपह्नुतः स्वेदभरः करे तयोरपाङ्गुपोदानजलैर्मिलन्मुहुः ।
दृशोरपि प्रस्तुतमस्तु सात्विकं घनैः समाधीयत धूमलङ्घनैः ॥

अयं 'हेतुस्त्यक्त्वा बहूनर्थान् यत्रकस्यावधारणम् ।' इतिलक्षणान्तर्गतो नालङ्कार इत्याह कश्चित्(१) ॥ २५ ॥

भ्रान्तापह्नुत्यलङ्कारमाह—

**भ्रान्तापह्नुतिरन्यस्य शङ्कया तथ्यनिर्णये ।**
**तापं तनोति सोत्कम्पं ज्वरः किं न सखि ! स्मरः ॥ २६ ॥**

(१) इत्याकरः इति ख ।

भ्रान्तेति । अत्र तापस्य ज्वरसाधारण्यात् भ्रान्तसख्या 'ज्वरः किं'मिति पृष्टे 'न सखि! स्मर' इति सत्यकथनेन भ्रान्तिवारणम् । इयं च सम्भवद्भ्रान्तिपूर्विका कविकल्पितभ्रान्तिपूर्विका चेति द्विधा । आद्योदाहृता । द्वितीया यथा—

जटा नेयं वेणीकृतकचकलापो, न गरलं
गले कस्तूरीयं, शिरसि शशिलेखा न कुसुमम् ।
इयं भूतिर्नाङ्गे प्रियविरहजन्मा धवलिमा
पुराऽरातिभ्रान्त्या कुसुमशर ! किं मां प्रहरसि ॥

'इयं च तत्त्वाख्यानोपमे'ति दण्डी ॥ २६ ॥

छेकापह्नुतिमाह—

**छेकापह्नुतिरन्यस्य शङ्कया तथ्यनिह्नवे ।**
**प्रजल्पन्मत्पदे लग्नः कान्तः किं नहि नूपुरः ॥ २७ ॥**

छेकेति । अन्येन श्रुतायां रहस्योक्तौ तात्पर्यान्तरकथनेन निह्नवे छेकापह्नुतिः नर्मसखीं प्रति 'प्रजल्पन्मत्पदे लग्न' इति निवेद्यमाने 'कान्तः किं'मित्यन्यया पृष्टे 'न हि नूपुर' इति निह्नवः । यथा वा—

वदन्ती जारवृत्तान्तं पत्यौ धूर्ता सखीधिया ।
पतिं बुद्ध्वा 'सखि ! ततः प्रबुद्धास्मी'त्यपूरयत् ॥—॥ २७ ॥

कैतवापह्नुत्यलङ्कारमाह—

**कैतवं व्यज्यमानत्वे व्याजाद्यैर्निह्नतेः पदैः ।**
**निर्यान्ति स्मरनाराचाः कान्तादृक्पातकैतवात् ॥ २८ ॥**

कैतवमिति । आदिना छलादिपदम् । व्याजादिपदैर्यत्र निह्नुतिर्व्यज्यते तत्र कैतवापह्नुत्यलङ्कारः । यथा वा—

अस्या यदास्येन पुरस्तिरश्च तिरस्कृतं शीतरुचान्धकारम् ।
स्फुटस्फुरद्भृङ्गकचच्छलेन तदेव पश्चादिदमस्ति बद्धम् ॥

अत्र केचित्—"इयं सर्वापि स्वरूपापह्नुतिरुदाहृता । क्वचिद्धेत्वपह्नुतिः । यथा—।

आस्तामनङ्गीकरणाद्भवेन दग्धः स्मरो नेति पुराणवाणी ।
तवैव देहं श्रितया श्रियेति नवस्तु वस्तु प्रतिभाति वादः ॥

अत्र स्मरादग्धत्वे भवकर्तृको दाहो न हेतुः, किन्तु तव शोभेति श्लेषेण हेत्वपह्नुतिः । क्वचित्फलापह्नुतिर्यथा—

यदि मधुमथन ! त्वदङ्घ्रिसेवां हृदि विदधाति जहाति वा विवेकी ।
तदखिलमपि दुष्कृतं त्रिलोक्यां कृतमकृतं न कृतं कृतं च सर्वम् ॥

अत्र कृतस्याकृतत्वं तत्फलापह्नुतिः । एवमन्यदप्यूह्यम् । निषेधस्यापि शाब्दत्वार्थत्वकृतद्वैविध्येन भेदोऽपि ज्ञेय" इत्याहुः ॥ २८ ॥

उत्प्रेक्षालङ्कारमाह—

उत्प्रेक्षोन्नीयते यत्र हेत्वादिर्निह्नुतिं विना ।

त्वन्मुखश्रीकृते नूनं पद्मैर्वैरायते शशी ॥ २९ ॥

उत्प्रेक्षेति । उन्नीयते, अन्यधर्मसम्बन्धेनान्यतादात्म्येन सम्भाव्यते उत्कटकोटिकसन्देहविषयीक्रियते । आदिना फलस्वरूपे । निह्नुतिं विना, अन्यधर्मनिषेधं विनेत्यर्थः । एवं च—उपमानतादात्म्यसम्भावनमुत्प्रेक्षा हेतुफलस्वरूपविषया त्रिधा । त्रिविधाया उदाहरणं त्वदिति । अत्र स्वाभाविकचन्द्रपद्मविरोधे मुखकान्तिलिप्सा न हेतुरिति तत्र तद्धेतुत्वेन सम्भावना हेतूत्प्रेक्षा, कान्तावदनकान्तिप्राप्तेरफलस्यापि फलत्वेनोत्प्रेक्षणादियमेव फलोत्प्रेक्षापि , वस्तुतो वैराऽकर्तर्यपि वैरकर्तृतादात्म्योत्प्रेक्षा स्वरूपोत्प्रेक्षा चेति त्रैविध्यम् । यथा वा—

कल्प्यमानममुनाऽऽचमनार्थं गाङ्गमम्बु चुलुकोदरचुम्बि ।
निर्मलत्वमिलितप्रतिबिम्बद्यामयच्छदुपनीय करे नु ॥

अत्र प्रतिबिम्बिता द्यौर्देयत्वेनोत्प्रेक्षिता, अम्बु च दानकर्तृत्वेनोत्प्रेक्षितम् । ननु चाख्यातवाच्यस्य कर्तुर्भावप्राधान्यबोधकस्मृत्या धात्वर्थोपसर्जनतयान्वयेनान्यत्रोपमानतयाऽन्वयासम्भवः । तदुक्तम्—

कर्ता यद्युपमानं स्यान्न्यग्भूतोऽसौ क्रियापदे ।
स्वक्रियासाधनव्यग्रो नालमन्यद्व्यपेक्षितुम् ।

इति चेत्, अत्रागत्या उभयथोभयत्वेनान्वयाङ्गीकारात् । यद्वा न ह्यत्रोपमानत्वेनान्वयः । किन्त्वपह्नुताविवार्थिक उपमानभावः । अस्तु वा 'चन्द्र इवे'त्यादाविवार्थविशेषणस्यापि चन्द्रस्योपमानत्वेनान्वय इति दिक् । अन्ये तु—"नेयं कर्तृतादात्म्योत्प्रेक्षा, किन्तु क्रियातादात्म्योत्प्रेक्षारूपा स्वरूपोत्प्रेक्षैव । कमलसङ्कोचनस्योपमेयस्य वैरतादात्म्येनोत्प्रेक्षणात् । अत्र चोपमेयं कमलसङ्कोचनादि कल्प्यते । एवं 'लिम्पतीव तमोऽङ्गानी'त्यादौ व्यापनादिरूपमुपमेयं कल्प्यते । एवं च—वैरमिव करोतीति विवरणं न वैरं करोतीवेति । अत एवेयमनुपात्तोपमेयोत्प्रेक्षे"त्याहुः । इयं शाब्दी आर्थी चेति द्विधा ।

मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः ।
उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥

इत्युत्प्रेक्षाव्यञ्जकशब्दसत्त्वे शाब्दी, असत्त्वे आर्थीति । इयं च गूढोत्प्रेक्षेत्युदाहरिष्यते । पूर्वस्या उदाहरणान्तराणि—

पद्माङ्कसद्मानमवेक्ष्य लक्ष्मीमेकस्य विष्णोः श्रयणात्सपत्नीम् ।
आस्येन्दुमस्या भजते जिताब्जं सरस्वती तद्विजिगीषया किम् ॥

अत्र दमयन्तीमुखे सरस्वतीवासे विजिगीषा हेतुत्वेनोत्प्रेक्षिता ।

पुराकृतस्त्रैणमिमां विधातुमभूद्विधातुः खलु हस्तलेखः ।
येयं भवद्भाविपुरन्ध्रिसृष्टिः साऽस्यै यशस्तज्जयजं प्रदातुम् ॥

अत्र पूर्वकृतपुरन्ध्रिसृष्टेर्दमयन्तीनिर्माणहेतुत्वेन भाविपुरन्ध्रीसृष्टिनिर्माणं दमयन्तीनिर्माणफलत्वेनोत्प्रेक्षितम् ।

स्मरेन्धने वक्षसि तेन दत्ता संवर्तिका शैवलवल्लिचित्रा ।
चकास्ति चेतोभवपावकस्य धूमाविला कीलपरम्परेव ॥

अत्र स्वरूपोत्प्रेक्षा । अन्ये तु—"स्वरूपोत्प्रेक्षा उक्ताऽनुक्तविषयत्वेन द्विधा । उपमेयाक्तावुक्तविषया अनुक्तावपरा । हेतुत्प्रेक्षा फलोत्प्रेक्षा च प्रसिद्धाऽप्रसिद्धविषयत्वेन द्विविधे"त्याहुः । यथा—

विवस्वताऽनायिषतेव मिश्राः स्वगोसहस्त्रेण समं जनानाम् ।
गावोऽपि नेत्रापरनामधेयास्तेनेदमान्ध्यं खलु नान्धकारैः ॥

अत्राऽसदेव लोचननयनमान्ध्यहेतुत्वेनोत्प्रेक्षितम् ।

पूरं विधुर्वर्धयितुं पयोधेः शङ्केऽयमेणाङ्कमणिं कियन्ति ।
पयांसि दोग्धि प्रियविप्रयोगसशोककोकीनयने कियन्ति ॥

अत्र समुद्रवृद्धिहचन्द्रकृतकोकीनयनबाष्पस्रावणस्य फलत्वेनोत्प्रेक्षिता । एवमन्यदूह्यम् ॥ २९ ॥

गूढोत्प्रेक्षामाह—

**इवादिकपदाभावे गूढोत्प्रेक्षां प्रचक्षते ।**
**यत्कीर्तिर्विभ्रमश्रान्ता विवेश स्वर्गनिम्नगाम् ॥ ३० ॥**

इवेति । इवादिकेत्यादिनोत्प्रेक्षावाचकानां 'मन्ये शङ्के' इत्यादीनां ग्रहणम् । इयमपि पूर्ववत्त्रिधा । उदाहरणे असती भ्रान्तिर्हेतुत्वेनोत्प्रेक्षिता । वेशनकर्तृतादात्म्योत्प्रेक्षा फलोत्प्रेक्षा च पूर्ववत् । यथा वा—

रविविकिरचामीकारेषु स्फुटामलबिन्दुतां
गमयितुममूरुच्चीयन्ते विहायसि तारकाः ।
स्वरविरचनायाऽऽस्रासुच्चैरुदास्ततया हृताः
शिशिरमहसो बिम्बादस्मादसंशयमंशवः ॥

अत्र उत्तरभावित्वसामान्येन रविकान्त्युदयस्तारकाऽस्तफलत्वेनोत्प्रेक्षितः, चन्द्रनिष्प्रभता च सूर्यकिरणाधिक्यहेतुत्वेनोत्प्रेक्षिता, तारकास्वरूपं च वर्तुलत्वसामान्येन बिन्दुस्वरूपत्वेनोत्प्रेक्षितमिति । इयं क्वचिदपह्नुतिगर्भापि । यथा—

अनङ्गलीलाभिरपाङ्गधाविनः कनीनिकानीलमणेः पुनः पुनः ।
तमिस्रवंशप्रभवेन रश्मिना स्वपद्धतिः सा किमरक्षि नाञ्जनैः ॥

काव्यप्रकाशस्तु—"गूढोत्प्रेक्षा नालङ्कारान्तरम्, इवादिपदाभावे सम्भावनबोधाभावेन गूढरूपकस्याप्यलङ्कारान्तरत्वापत्ते"रित्याह ॥ ३० ॥

स्मृतिभ्रान्तिसन्देहालङ्कारानाह—

स्यात्स्मृतिभ्रान्तिसन्देहैस्तदेवाऽलङ्कृतित्रयम् ।
पङ्कजं पश्यतः कान्तामुखं मे गाहते मनः ॥ ३१ ॥
अयं प्रमत्तमधुपस्त्वन्मुखं वेद पङ्कजम् ।
पङ्कजं वा सुधांशुर्वेत्यस्माकं तु न निर्णयः ॥ ३२ ॥

स्यादिति । उपमानोपमेयभावकल्पकसदृशादर्शनेन सदृशान्तरस्मरणकथनं स्मरणालङ्कारः । आरोपविषयज्ञानतिरोधानविशिष्टारोप्यारोपो भ्रान्त्यलङ्कारः । तेन न रूपकेऽतिव्याप्तिः । तत्रारोपविषय(ज्ञान)तिरोधानाभावात् । सादृश्यज्ञानफलकैकाश्रितैकधर्मिकाऽनेकविरुद्धधर्मवत्ताकथनं संशय इत्यर्थः । एकाश्रितेत्युक्ते नोल्लिखितातिप्रसङ्गः । त्रितयोदाहरणानि क्रमेणाह—पङ्कजमिति । गाहते स्मरतीत्यर्थः । यथा वा—

एतेन ते स्तनभरेण हरेभकुम्भौ
पाणिद्वयेन दिविषद्द्रुमपल्लवानि ।
आस्येन स स्मरतु नीरधिमन्थनोत्थं
स्वच्छन्दमिन्दुमपि सुन्दरि ! मन्दराद्रिः ॥

क्वचिदयं व्यतिरेकमुखः । यथा—

श्रियौ नरेन्द्रस्य निरीक्ष्य तस्य स्मरामरेन्द्रावपि न स्मरामः ।
वासेन तस्मिन् क्षमयोश्च सम्यग्बुद्धौ न दध्मः खलु शेषबुद्धौ ॥

'अत्र श्रय'मिति केचित्(१) । "क्वचिद्वैसादृश्येनायमलङ्कारः । यथा—

सीता यदा यदा दुःखं प्रपेदेऽरण्यवर्तिनी ।
तदा सस्मार शर्माणि गद्गदबाष्पो रघूत्तमः ॥"

इति केचित् । अयं तु सादृश्यगर्भो बोध्यः । तेन,

प्रसादमासाद्य हरेः कृतं सा सस्मार सारस्वतसूक्तिसृष्टेः ।
देवा हि नान्यद्वितरन्ति किन्तु प्रसद्य ते साधु धियं ददन्ते ॥

इत्यत्र न स्मरणालङ्कारः । अयमिति भ्रान्त्युदाहरणम् । अयं क्वचिन्निश्चयान्तः । यथा—

वामे करे निहितवामकपोलपालिः
सा चिन्तितेति रघुवीर ! मयाऽनुमेने ।
श्वासैस्ततो विरहिणाकुलबालिकेति
हा ! राघवेति वचनादथ जानकीति ॥

(१) इदं नास्ति ख-पुस्तके ।

यथा वा—

पुनः पुनः कापन कुर्वती कचच्छटाधिया धूपजधूमसंयमम् ।
सखीस्मितैस्तर्कितनिजभ्रमा बबन्ध तन्मूर्धजचामरं चिरात् ॥
तच्छायसौन्दर्यनिपीतधैर्याः प्रत्येकमालिङ्गदमू रतीशाः ।
रतिप्रतिद्वन्द्विनमासु नूनं नामूषु निर्णीतरतिः कथञ्चित् ॥

इति व्यतिरेकमुखः । पङ्कजं वेति सन्देहोदाहरणम् । अयं च शुद्धो निश्चयान्तश्चेति द्वेधा । यथा—

पदे विधातुर्यदि मन्मथो वा ममाभिषिच्येत मनोरथो वा ।
तदा घटेतापि न वा घटेत प्रतिप्रतीकाऽद्भुतरूपशिल्पम् ॥

अयं शुद्धः ।

किं घनस्य जलधेरथवेवं नैव संशयितुमप्यलभन्त ।
स्यन्दनं परमदूरमपश्यन्निःस्वनश्रुतिसहोपनतं ते ॥

अयं निश्चयान्तः । केचित्तु—“संशयलक्षणेऽनेकधर्मप्रकारकत्वं न विवक्षणीयम् । किन्तु विशेषधर्माप्रकारकसामान्यधर्मप्रकारकत्वमेव विवक्षणीयम् । तेन ‘कोऽयं किमिदृ’मित्यादिज्ञानानामपि संशयत्वम् । यथा—

कान्ते स्वान्ते मदीये निवसति भवती सर्वदेति ब्रुवाणे
प्रेम्णा पत्यौ सहासं स्फटिकछविमलं (१)वीक्ष्य वक्षस्तदीयम् ।
प्रामाण्यादस्य वाचां प्रतिफलितमपि स्वीयमत्येति मत्वा
स्वात्मानं तर्कयन्ती किमिदमिति मुहुः पार्वती त्वां पुनातु ॥

अत्र ‘किमिद’मित्येककोटिकः संशय” इत्याहुः । काव्यप्रकाशस्तु—‘ससन्देहस्तु भेदोक्तौ तदनुक्तौ तु संशयः ।’ इति संशयसन्देहयोर्भेदमाह । ‘ससन्देह इत्येकं पदम्, तेन भेदोक्तौ सन्देहवदलङ्कारोऽग्रिमस्तु संशयालङ्कार’ इति व्याचक्षते । ‘अयं भेदकातिशयोक्तिर्व्यतिरेको वे’त्यपि केचित् ॥३१–३२॥

मीलितालङ्कारमाह—

**मीलितं बहुसादृश्याद् भेदवचेन्न लक्ष्यते ।**
**रसो नालक्षि लाक्षायाश्चरणे सहजारुणे ॥ ३३ ॥**

मीलितमिति । भेदवत् उपमानम् । समानधर्मोपादानेनोपमानस्वरूपाज्ञानपूर्वकमुपमेयवर्णनं मीलितमित्यर्थः । रस इति लक्ष्यम् । यथा वा—

गौर्याः शिवस्यापि विलोक्य वक्त्रमाह्लादकं चन्द्रपरागपाण्डु ।
नालक्षि रूपं खलु भालबालजैवातृकस्यापि सखीसमाजैः ॥

यथा वा—

काश्मीरजाङ्गरागश्चम्पकगौराङ्गि ! दृश्यते नैव ।
किमति वृथाञ्जनरेखामिन्दीवरलोचने ! कुरुषे ॥

(१) छविशदं—इति ख ।

काव्यप्रकाशे तु—

समेन लक्ष्मणा वस्तु वस्तुना यन्निगूह्यते ।
निजेनागन्तुना वापि तन्मीलितमिति स्मृतम् ॥

कृत्रिमेणाकृत्रिमेण वा साधारणेन धर्मेण किञ्चिद्वस्तु वस्त्वन्तरगोपकं वर्ण्यते यत्र तत्र मीलितालङ्कारः । यथा—

स्वभावचपले नेत्रे भयादर्धाक्षरं वचः ।
मदः कृतपदस्तन्व्यास्ताभ्यामपि न लक्ष्यते ॥

अत्र चपलत्वं स्वाभाविकम्, अर्धाक्षरत्वमागन्तुकम्, उभयमपि मदसाधारणम् । तेन मदस्य तिरोधानमिति युक्तम् ॥ ३३ ॥

सामान्यालङ्कारमाह—

**सामान्यं यदि सादृश्याद् भेद एव न लक्ष्यते ।**
**पद्माकरप्रविष्टानां मुखं नालक्षि सुभ्रुवाम् ॥ ३४ ॥**

सामान्यमिति । किञ्चिद्धर्मसादृश्येनोपमानभेदाज्ञानेनोपमेयवर्णनं सामान्यालङ्कार इत्यर्थः । पद्माकरेति लक्ष्यम् । यथा वा—

भैमीविनोदाय मुदा सखीभिस्तदाकृतीनां भुवि कल्पितानाम् ।
नातर्कि मध्ये स्फुटमप्युदीतं तस्यानुबिम्बं मणिवेदिकायाम् ॥

अत्र भिन्नव्यक्तिज्ञानेऽपि तद्गतभेदाज्ञानात्सामान्यम् । एवं चोपमानस्वरूपतिरोधानं मीलितं व्यावर्तकधर्माज्ञानकृतभेदतिरोधानं सामान्यमिति फलितम् । अन्ये तु—'उपमानाज्ञानं मीलितम् उपमेयाज्ञानं सामान्य'मित्याहुः । काव्यप्रकाशे तु—

"प्रस्तुतस्य यदन्येन गुणसाम्यविवक्षया ।
ऐकात्म्यं बध्यते योगात्तत्सामान्यमिति स्मृतम् ॥

अपरित्यक्तस्वगुणस्याप्रस्तुतपदार्थेन सम्बन्धादप्रस्तुततया निबन्धनं सामान्यालङ्कारः । अत्र तद्गुणालङ्कारव्यावृत्तये अपरित्यक्तेति, मीलितालङ्कारव्यावृत्तये अप्रस्तुततयेति । यथा—

कनकद्रवगौराङ्गी चञ्चलाचपला सखे ! ।
अविभाव्याऽभिन्नतया प्रियाङ्गणमुपाययौ ॥

अत्र नायिकाविद्युतोरभेदभान"मित्युक्तम् ॥—॥ ३४ ॥

उन्मीलितालङ्कारमाह—

**हेतोः कुतोऽपि वैशिष्ट्यात् स्फूर्तिरुन्मीलितं मतम् ।**
**लक्षितान्युदिते चन्द्रे पद्मानि च मुखानि च ॥ ३५ ॥**

हेतोरिति । उपमानादुपमेयोत्कर्षज्ञानाधायकहेतुकथनमुन्मीलितमित्यर्थः । कस्मादपि हेतोरुपमेयस्य वैशिष्ट्यादुपमानाधिक्यात् स्फूर्तिर्ज्ञानमित्यक्षरार्थः ।

लक्षितानीत्युदाहरणम् । चन्द्रोदये कमलानां सङ्कोचान्मुखानामसङ्कोचान्मुखनिष्ठवैशिष्ट्यज्ञानम् । यथा वा—

बालेषु सरयूतीरे समं खेलत्सु धूलिषु ।
याचके गाधिजे ज्ञातो रामः साकेतवासिभिः ॥-॥३५॥

अनुमानालङ्कारमाह—

**अनुमानं च कार्यादेः कारणाद्यवधारणम् ।**
**अस्ति किञ्चिद् यदनया मां विलोक्य स्मितं मनाक् ॥ ३६ ॥**

**अनुमानमिति** । कार्योक्त्या कारणज्ञानं यत्र तत्रानुमानालङ्कारः । आदिना सम्बन्धिपरिग्रहः । अस्तीति लक्ष्यम् । अत्र हास्येन कार्येणान्तःस्थितोऽभिलाषः कारणमनुमीयते । यथा वा—

नीवाराः शुकगर्भकोटरमुखभ्रष्टास्तरूणामधः
प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः ।
विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगा-
स्तोयाधारपथाश्च वल्कलशिखानिष्यन्दरेखाङ्किताः ॥

अत्र ऋष्याश्रमनैकट्यमनुमीयते । प्रदीपस्तु—"पक्षसम्बन्धः सपक्षवृत्तित्वं विपक्षव्यावृत्तिरिति रूपत्रयवान् हेतुः । व्यापकत्वेनाभिमतस्य पक्षेऽयोगव्यवच्छेदस्तदुभयवचनमनुमानम् । यथा—

मृगीदृशो यत्र निपातयन्ति दृशं स्मरस्यापि च तत्र बाणाः ।
पतन्ति यद्वक्रितचापहस्तो मारस्तदासां कुपितः पुरोऽस्ति ॥

अत्र 'एताः पुरो मनोभुवः निपतद्बाणफलकदृग्व्यापारवत्त्वात्' इति प्रयोग"
इत्याह । अयं व्यतिरेकादपि । यथा—

स्मरः स्वं सर्वस्वं कुचकलशयोः पङ्कजदृशो-
र्ध्रुवं धृत्वा मुद्रामकृत मुखयोर्नीलिममिषात् ।
न चेदित्थं व्यर्थं कथय कथमेताविह नरं
स्मरन्तं पश्यन्तं प्रहरति शरैरेष विषमैः ॥

क्वचिच्छाब्दः । यथा—

न तूणादुद्धारे न गुणघटने नाश्रुतिशिखं
समाकृष्टौ दृष्टिर्न वियति न लक्ष्ये न च भुवि ।
नृणां पश्यत्यस्य क्वचन विशिखान् किन्तु पतित-
द्विषद्वक्षःश्वभ्रैरनुमितिरमून् गोचरयति ॥-॥ ३६ ॥

अर्थापत्त्यलङ्कारमाह—

**अर्थापत्तिः स्वयं सिध्येत्पदार्थान्तरवर्णनम् ।**
**स जितस्त्वन्मुखेनेन्दुः का वार्ता सरसीरुहाम् ॥ ३७ ॥**

अर्थापत्तिरिति । यत्रैकस्य सिद्धावर्थान्तरमर्थात्सिध्यतीति वर्ण्यते, तत्रार्थापत्त्यलङ्कारः । चन्द्रे जिते तज्जितपद्मानां जयोऽर्थात्सिद्ध इति । यथा वा—

अयि ! ममैष चकोरशिशुर्मुनेर्व्रजति सिन्धुपिबस्य न शिष्यताम् ।
अशितुमब्धिमधीतवतोऽस्य वा शशिकराः पिबतः कति शीकराः ॥

यथा वा—

यतः पदाङ्गुष्ठनखौ मुखं च बिभर्ति पूर्णेन्दुचतुष्टयं या ।
कलाचतुःषष्टिरुपैतु वासं तस्यां कथं सुभ्रुवि नाम नाऽस्याम् ॥–॥३७॥

काव्यलिङ्गालङ्कारमाह—

**स्यात्काव्यलिङ्गं वागर्थो यत्र हेतुसमर्थकः ।**
**जितोऽसि मन्द ! कन्दर्प ! मच्चित्तेऽस्ति त्रिलोचनः ॥३८॥**

स्यादिति । यत्र वाच्य एव वाक्यार्थः पदार्थो वा प्रस्तुतवाक्यार्थे हेतुभूतस्तत्र काव्यलिङ्गालङ्कारः । चित्ते त्रिलोचनसत्त्वरूपवाक्यार्थस्य कन्दर्पदाहकतृतीयलोचनत्वाभिप्रायगर्भतया कन्दर्पजयरूपवाक्यार्थे हेतुत्वात् । *यथा वा—

मन्येऽमुना कर्णलतामयेन पाशद्वयेन च्छिदुरेतरेण ।
एकाकिपाशं वरुणं विजिग्येऽनङ्गीकृतायासततौ रतीशः ॥

अत्र पाशद्वयेनेति पदार्थो वरुणजयरूपवाक्यार्थे हेतुः*(१) । यथा वा—

भ्रूश्चित्रलेखा च तिलोत्तमाऽस्या नासा च रम्भा च यदूरुसृष्टिः ।
दृष्टा ततः पूरयतीयमेकाऽनेकाप्सरःप्रेक्षणकौतुकानि ॥–॥३८॥

परिकरालङ्कारमाह—

**अलङ्कारः परिकरः साभिप्राये विशेषणे ।**
**सुधांशुकलितोत्तंसस्तापं हरतु वः शिवः ॥ ३९ ॥**

अलङ्कार इति । सुधेति विशेषणस्य शैत्यप्रतीतिद्वारा तापनिवारणरूपवाक्यार्थोपयोगित्वम् । यथा वा—

मनसि सन्तमिव प्रियमीक्षितुं नयनयोः स्पृहयाऽन्तरुपेतयोः ।
ग्रहणशक्तिरभूदिदमीययोरपि न संमुखवास्तुनि वस्तुनि ॥

अत्रान्तर्गतत्वविशेषणस्य चक्षुःसंयोगाभावद्वारा प्रकृतवाक्यार्थोपयोगित्वम् । काव्यलिङ्गपरिकरयोः साभिप्रायपदार्थोक्तिरूपतया साम्येऽप्ययमेव भेदो, यत्काव्यलिङ्गे पदार्थो वाक्यार्थो वा साक्षाद्वाक्यार्थोपयोगी, परिकरे तु प्रस्तुतवाक्यार्थोपयोग्यर्थान्तरप्रतिपादनद्वारा विशेषणं प्रकृतवाक्यार्थोपयोगीति । अत्र केचित्–'इदं नालङ्कारान्तरम्, किन्तुनिष्प्रयोजनविशेषणत्वरूपापुष्टत्वदोषाभाव एवे'त्याहुः । अन्ये तु–'अपुष्टस्य श्लेषादौ दोषत्वाभावात्तत्र साभिप्रायविशेषणत्वस्यालङ्कारत्व'मित्याहुः ॥३९॥

(१) चिह्नाङ्कितं नास्ति ख–पुस्तके ।

**साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुरः ।**
**चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः ॥ ४० ॥**

साभिप्राय इति । अत्र 'देवश्चतुर्भुज' इति विशेष्यं पुमर्थचतुष्टयदानसामर्थ्याभिप्रायम् । यथा वा—

स जयत्यरिसार्थसार्थकीकृतनामा किल भीमभूपतिः ।
यमवाप्य विदर्भभूः प्रभुं हसति द्यामपि शक्रभर्तृकाम् ॥

अत्र भीम इति विशेष्यं शक्रजयोपयोगि ॥ ४० ॥

अतिशयोक्त्यलङ्कारमाह—

**अक्रमातिशयोक्तिश्चेद्युगपत्कार्यकारणे ।**
**आलिङ्गन्ति समं देव ! ज्यां शराश्च पराश्च ते ॥४१॥**

अक्रमेति । कार्यकारणयोर्यौगपद्यकथनमक्रमातिशयोक्तिः । बाणमौर्वीसन्धानस्य कारणस्य कार्यस्य शत्रुक्षितिनिपातस्य साहित्योक्तेः ॥ ४१ ॥

**अत्यन्तातिशयोक्तिस्तु पौर्वापर्यव्यतिक्रमे ।**
**अग्रे मानो गतः पश्चादनुनीता प्रियेण सा ॥ ४२ ॥**

अत्यन्तेति । कार्यकारणयोः पौर्वापर्यकथनमत्यन्तातिशयोक्तिः । 'अग्रे मान' इति प्रियानुनयमाननाशयोर्वैपरीत्येनोक्तेः ॥ ४२ ॥

**चपलातिशयोक्तिस्तु कार्ये हेतुप्रसक्तिजे ।**
**यामीति प्रियपृष्टाया वलयोऽभवदूर्मिका ॥ ४३ ॥**

चपलेति । हेतुप्रसक्तिर्भावित्वेन सम्भावना, तस्यां कार्योत्पत्तिकथने चपलाऽतिशयोक्तिः । ऊर्मिका बाहुभूषणम् । वियोगस्य कारणस्य सम्भावनयैव कार्यस्य कार्श्यस्योत्पत्तिकथनात् । यथा वा—

त्वद्रूपसम्पदवलोकनजातशङ्का
पादाब्जयोर्निजकराङ्गुलिलालनेन ।
भूयाच्चिराय कमला कलितावधाना
निद्रानुबन्धमनुरोधयितुं धवस्य ॥

अत्र दमयन्त्यासक्तेः स्वानादरशङ्कया तत्प्रयोज्यजागरणप्रतिबन्धकनिद्रानुकूलव्यापारकथनात् । अन्ये—तु 'स्वविरोधिकार्यशङ्कया स्वोक्तावपि चपलातिशयोक्तेरिदमुदाहरण'मित्याहुः । यथा वा—

यासि प्रेयसि ! वारिदागमदिने जानीहि मामागतं
चिन्तां चेतसि मा विधेहि कथयत्येवं सबाष्पे मयि ।

निःश्वासैः पवनायितं वरतनोरङ्गैः कदम्बायितं
कान्त्या केतकपत्रकायितमहो ! दृग्भ्यां पयोदायितम् ॥

**सम्बन्धातिशयोक्तिः सा तदभावेऽपि तद्वचः ।**
**पश्य सौधाग्रसंसक्तं विभाति विधुमण्डलम् ॥ ४४ ॥**

सम्बन्धेति । असम्बन्धे सम्बन्धकथनं सम्बन्धातिशयोक्तिः । सौधाग्राणामसत्यपि विधुमण्डलसम्बन्धे तत्कथनात् ॥ ४४ ॥

**भेदकातिशयोक्तिश्चेदेकस्यैवान्यतोच्यते ।**
**अहो ! अन्यैव लावण्यलीला बालाकुचस्थले ॥ ४५ ॥**

भेदकेति । असति भेदे भेदकथनं लोकप्रसिद्धपदार्थापेक्षया चमत्काराभिधायकं भेदकातिशयोक्तिः । लोकप्रसिद्धलावण्याभेदेऽपि भेदकथनात् । यथा वा—

तस्मिन्नियं सेति सखीसमाजे नलस्य सन्देहमथ व्युदस्यन् ।
अपृष्ट एव स्फुटमाचचक्षे स कोऽपि रूपातिशयः स्वयं ताम् ॥

इदं च पूर्वोक्तसर्वातिशयोक्तीनामुदाहरणम् । 'व्युदस्यन्नाचचक्षे स' इति सन्देहव्युदासाख्यानयोः कार्यकारणयोर्यौगपद्यस्य पौर्वापर्यस्याप्युक्तेः, अपृष्ट एवेत्यनेन प्रश्नस्य सम्भावनाकल्पनात् कर्तृत्वासम्बन्धे सम्बन्धकथनाच्च । भेदकं तु स्पष्टमिति ॥ ४५ ॥

**रूपकातिशयोक्तिश्चेन्निगीर्याध्यवसानतः ।**
**पश्य नीलोत्पलद्वन्द्वान्निःसरन्ति शिताः शराः ॥४६॥**

रूपकेति । आरोप्यारोपविषययोरारोप्यरूपात्मनैव कथनं रूपकातिशयोक्तिः । आरोपविषयनेत्रकटाक्षयोरारोप्यकमलशरत्वरूपेण आरोपविषयनिगरणेनारोप्यप्रतिपत्तिरिति यावत् । इयं च निगीर्याध्यवसानातिशयोक्तिरिति काव्यप्रकाशे कथिता । यथा वा—

विहायसि विहारिणी भवतु नाम सौदामिनी
हिमेद्धशिखराद्धः पततु नाम मन्दाकिनी ।
इदं तु महदद्भुतं यदयमेत्य भूमीतलं
नमन्नमृतदीधितिः कमलसारमाकर्षति ॥

अत्र चन्द्रत्वकमलत्वाभ्यामारोपविषययोर्मुखयोरध्यवसानम् । इयं च रूपकगर्भेति रूपकभेदैर्भेदोऽवसेयः । या तु काव्यप्रकाशे यद्यर्थोक्तिकल्पितातिशयोक्तिरुक्ता, सा वक्ष्यमाणसम्भावनान्तर्गतेति नोक्ता ।

अलङ्कारसर्वस्वे तु—

यद्यपह्नवगर्भत्वं सैव सापह्नवा मता ।
त्वत्सूक्तिषु सुधा राजन् ! भ्रान्ताः पश्यन्ति तां विधौ ॥

इत्यपह्नुतिगर्भातिशयोक्तिरुक्ता । तेनापह्नुतिभेदभिन्नात्यतिशयोक्तिरवसेया ॥४६॥

प्रौढोक्त्यलङ्कारमाह—

**प्रौढोक्तिस्तदशक्तस्य तच्छक्तत्वाऽवकल्पनम् ।**

**कलिन्दजातीररुहाः श्यामलाः सरलद्रुमाः ॥ ४७ ॥**

प्रौढोक्तिरिति । तत्राऽसमर्थस्य तत्र सामर्थ्यवर्णनं प्रौढोक्तिरित्यर्थः । यमुनातटरोहस्य नैल्यहेतुत्वाभावेऽपि तद्धेतुत्वेन कथनात् । यथा वा—

याभिरनङ्गः साङ्गीकृतः स्त्रियोऽस्त्रीकृताश्च ता येन ।
वाम्याचरणप्रवणौ प्रणमत तौ कामिनीकामौ ॥—॥४७॥

सम्भावनालङ्कारमाह—

**सम्भावनं यदीत्थं स्यादित्यूहोऽन्यप्रसिद्धये ।**

**सिक्तं स्फटिककुम्भान्तःस्थितिश्वेतीकृतैर्जलैः ॥ ४८ ॥**

**मौक्तिकं चेल्लतां सूते तत्पुष्पैस्ते समं यशः ।**

सम्भावनमिति । यदीत्थं स्यात्तदान्यत्कार्यं स्यादित्यर्थबोधकसमभिव्याहारः सम्भावनेत्यर्थः । सिक्तमिति लक्ष्यम् । स्फटिकघटान्तःस्थितपयःसिक्तमौक्तिकाङ्कुरविवृद्धलतापुष्पसमं ते यश इति । यदि तत्पुष्पं स्यात्तदा तत्साम्येन ते यशोवर्णनं स्यादिति । (१) कलिन्दजेत्यस्य क्वचित्पुस्तके पाठाभावात्, स्फटिककुम्भान्तःस्थितेर्जलश्वेतीकरणसामर्थ्याभावेऽपि तदुक्त्यैतदेवोदाहरणं प्रौढोक्तेरपि बोध्यम् । योगविभागेन सम्भावनस्यापीदमेवोदाहरणम् । यथा वा—

यदि त्रिलोकी गणनापरा स्यात्तस्याः समाप्तिर्यदि नायुषः स्यात् ।
पारेपरार्धं गणितं यदि स्याद् गणेयनिःशेषगुणोऽपि स स्यात् ॥

यथा वा—

विधाय मूर्धानमधश्चरं चेन्मुञ्चेत्तपोभिः स्वमसारभावम् ।
जाड्यं च नाञ्चेत्कदलीतरुर्यत्तदा यदि स्यादिदमूरुचारुः ॥

अयं क्वचिद् व्यतिरेकमुखोऽपि—

निजौजसोज्जासयितुं जगद् द्रुहामुपाजिहीथा न महीतलं यदि ।
समाहितैरप्यनिरूपितस्ततः पदं दृशः स्याः कथमीश ! मादृशाम् ॥

'अयमतिशयोक्तिभेद' इति काव्यप्रकाशः ॥ ४८ ॥

प्रहर्षालङ्कारमाह—

**वाञ्छितार्थाधिकप्राप्तिर्यत्नान्येन प्रहर्षणम् ॥४९॥**

**दीपमुद्द्योतयेद्यावत् तावदभ्युदितो रविः ।**

---

( १ ) इत आरभ्य 'सम्भावनस्यापीदमेवोदाहरण'मित्यन्तं नास्ति ख-पुस्तके ।

वाञ्छितेति । इच्छाविषयाधिकप्राप्तिबोधकपदसमुदायो यत्र, तत्र प्रहर्षालङ्कार इत्यर्थः । दीपमिति लक्ष्यम् । तदधिकप्रकाशप्राप्तेः । यथा वा—

भेकैः कोटरशायिभिर्मृतमिव क्ष्माऽन्तर्गतं कच्छपः
पाषाणैः पृथुपङ्कपीठलुठनाद्यस्मिन्मुहुर्मूर्छितम् ।
तस्मिन्नेव सरस्यकालजलदेनागत्य तच्चेष्टितं
यत्राकण्ठनिमग्नवन्यकरिणां यूथैः पयः पीयते(१) ॥

अन्यत्र—

उत्कण्ठितार्थसंसिद्धिर्विना यत्नं प्रहर्षणम् ।
तामेव ध्यायते तस्मै विसृष्टा सैव दूतिका ॥

यत्नमनपेक्ष्येत्यर्थः(२) । यथा वा—

परवति ! दमयन्ति ! त्वां न किञ्चिद्वदामि
द्रुतमुपनम किं मामाह सा शंस हंस ! ।
इति वदति नलेऽसौ तच्छशंसोपनम्रः
प्रियमनु सुकृतां हि स्वस्पृहाया विलम्बः ॥
यत्नादुपायसिद्धयर्थात्साक्षाल्लाभः फलस्य च ।
सिद्धाञ्जनौषधीमूलं खनताऽऽसादितो निधिः ॥–॥४९॥

विषादालङ्कारमाह—

**इष्यमाणविरुद्धार्थसम्प्राप्तिस्तु विषादनम् ॥५०॥**
**दीपमुद्द्योतयेद्यावत् तावन्निर्वाण एव सः ।**

यथा वा—

यत्प्रत्युत त्वन्मृदुबाहुवल्लिलसत्स्मृतिस्रजं गुम्फति दुर्विनीता ।
तता विधत्तेऽधिकमेव तापं तेनाश्रिता शैत्यगुणा मृणाली ॥

यथा वा—

रात्रिर्गमिष्यति भविष्यति सुप्रभातं
भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः ।
इत्थं विचिन्तयति कोशगते द्विरेफे
हा ! हन्त ! हन्त ! नलिनीं गज उज्जहार ॥–॥५०॥

तुल्ययोगितालङ्कारमाह—

**क्रियादिभिरनेकस्य तुल्यता तुल्ययोगिता ॥ ५१ ॥**
**सङ्कुचन्ति सरोजानि स्वैरिणीवदनानि च ।**

(१) पद्यमिदं नास्ति ख-पुस्तके । (२) यत्नकथनं विनेत्यर्थः–इति ख ।

प्राचीनाचलचूडाग्रचुम्बिबिम्बे सुधाकरे ॥ ८१ ॥

क्रियादिभिरिति। क्रियया गुणेन वा प्रस्तुतानामप्रस्तुतानां वा तुल्यधर्मसंयोगित्वं तुल्ययोगितेत्यर्थः । मुखानां कमलानां च चन्द्रोदये वर्णनीयत्वेन प्रस्तुतत्वादुदाहरणम् ।

यथा वा—

अपि लोकयुगं दृशावपि श्रुतदृष्टा रमणीगुणा अपि ।
श्रुतिगामितया दमस्वसुर्व्यतिभाते छतरां धरापते ! ॥

अप्रस्तुतानां यथा—

लोकोत्तरां मृगाक्ष्या निरीक्ष्य नेत्रश्रियं तस्याः ।
खञ्जनसरोजमीना मन्यन्ते स्वीयमफलत्वम् ॥

अत्राप्रस्तुतानां खञ्जनादीनामेकधर्मकथनम् (१) । एवञ्च–प्रस्तुतानामप्रस्तुतानां वैकधर्मकथने तुल्ययोगितेति सिद्धम् । अन्यत्र तु—

हिताहिते वृत्तितौल्यमपरा तुल्ययोगिता ।
प्रदीयते परा–भूतिर्मित्रशात्रवयोस्त्वया ॥

अत्र भूतिदानस्य पराभवदानस्य च श्लेषेणाभेदाध्यवसायाद्वृत्तितुल्यत्वम् ।

कण्ठाभरणे तु—

गुणोत्कृष्टैः समीकृत्य वचोऽन्या तुल्ययोगिता ।
लोकपालो यमः पाशी श्रीदः शक्रो भवानपि ॥

अत्र वर्णनीये राजनि लोकपालत्वेन यमादिसाम्यवर्णनात्तुल्ययोगिता । "अस्या-स्तुल्ययोगितायाः 'सिद्धिः ख्यातेषु चेन्नाम कीर्त्यते तुल्यतोक्तये ।' इत्युक्त'सिद्धि'-लक्षणगुणान्तर्गति"रिति कश्चित् ॥ ८१–८२ ॥

दीपकालङ्कारमाह—

प्रस्तुताप्रस्तुतानां च तुल्यत्वे दीपकं मतम् ।
मेधां बुधः सुधामिन्दुर्बिभर्ति वसुधां भवान् ॥ ८३ ॥

प्रस्तुतेति । अत्रापि क्रियादिभिरित्यनुषज्यते । तेन प्रकृताप्रकृतानामर्थादुपमानोपमेयानामन्येषां वा क्रियादिरूपैकधर्मकथनं यत्रैकपदेन, तत्र दीपकमित्यर्थः । प्रस्तुताप्रस्तुतानामित्यनेन तुल्ययोगिताव्यावृत्तिः । 'एकस्यैव धर्मस्य समस्ते वाक्ये दीपवदन्वयाद् दीपक'मिति नामयोगः । 'मेधां बुध' इति लक्ष्यम् । अत्र धारणरूप-

(१) इतोऽनन्तरञ्च—

'अबलस्वकुलाशिनो झषान् निजनीडद्रुमपीडिनः खगान् ।
अनवद्यतृणार्दिनो मृगान् मृगयाऽवाय न भूभृतां मताम् ॥'

इत्युपलभ्यते पद्यमधिकं क–पुस्तके ।

क्रियायाः प्रकृतराजवसुधयोरप्रकृतबुधेन्दुमेघासुधानां धर्मस्य सङ्कुरः । यथा वा (१)

स्थितस्य रात्रावधिशय्य शय्यां मोहे मनस्तस्य निमज्जयन्ती ।
आलिङ्ग्य या चुम्बति लोचने सा निद्राऽधुना न त्वदृतेऽङ्गना वा ॥

अत्र प्रस्तुताप्रस्तुतदमयन्तीनिद्रयोर्लोचनचुम्बकत्वादिनानन्ददायकत्वधर्मोक्तिः ।

यथा वा—

अवलम्बकुलाशिनो झषान् निजनीडद्रुमपीडिनः खगान् ।
अनवद्यतृणार्दिनो मृगान् मृगयाऽवाय न भूभृतां घ्नताम् ॥

अन्यत्र तु—'अनेकासु क्रियासु स्याद्दीपकः कारकान्वये ।' अनेकासु क्रियास्वेककारकान्वये दीपकम् । यथा—

हृतः कयाचित्पथि कन्दुकेन सङ्क्रम्य भिन्नः करजैः कयापि ।
कयाचनाऽक्तः कुचकुङ्कुमेन सम्भुक्तकल्पः स बभूव ताभिः ॥

एककर्तृकक्रियासु यथा—

प्रणमति पश्यति चुम्बत्याश्लिष्यति पुलकमुकुलितैरङ्गैः ।
प्रियसङ्गाय स्फुरितां वियोगिनी वामबाहुलताम् ॥

अत्रैकवियोगिनीरूपकारकस्यानेकक्रियासु उक्तिः । यथा वा—

शोभायशोभिर्जितशैवशैलं करोषि लज्जागुरुमौलिमैलम् ।
दृशौ हठश्रीहरणादुदस्तौ कन्दर्पमप्युज्झितरूपदर्पम् ॥—॥९३॥

आवृत्तिदीपकमाह—

**आवृत्ते दीपकपदे भवेदावृत्तिदीपकम् ।**
**दीप्त्याग्निर्भाति भातीन्दुः कान्त्या भाति रविस्त्विषा ॥९४॥**

आवृत्त इति । प्रस्तुताप्रस्तुतोपमानोपमेयनिष्ठक्रियारूपैकधर्मवाचकपदस्य कारकवाचकपदस्य कारककपार्थस्य वा यत्रावृत्तिस्तत्रावृत्तिदीपकमित्यर्थः । द्विविधस्योदाहरणमाह—दीप्त्येति । अत्र भातीति क्रियावाचिपदस्यावृत्तेर्दीप्तिकान्तिरूपकारकार्थावृत्तेश्च । कारकपदावृत्तेरुदाहरणं नानार्थस्थले । 'अयमुपमानोपमेयनिष्ठधर्मस्य तद्बोधकवाक्ययोर्भिन्नपदाभ्यां कथनरूपप्रतिवस्तूपमालङ्कारान्तर्गत' इति काव्यप्रकाशः ॥ ९४ ॥

प्रतिवस्तूपमालङ्कारमाह—

**वाक्ययोरर्थसामान्ये प्रतिवस्तूपमा मता ।**
**तापेन भ्राजते सूरः शूरश्चापेन राजते ॥ ९५ ॥**

वाक्ययोरिति । उपमानोपमेयबोधकवाक्यद्वयैकक्रियारूपसाधारणधर्मस्य पृथक्-

(१) 'यथा वा' इत्यतः '०धर्मोक्तिः' इति यावत् ख-पुस्तके नास्ति ।

निर्देशे प्रतिवस्तूपमा । तेन नावृत्तिदीपकान्तर्गतिः । 'उपमा सादृश्यं प्रतिवस्तु प्रतिवाक्यार्थं यस्या'मिति नामयोगः । तत्र च पदावृत्तौ कथितपदत्वापत्त्या पदभेदेन तदुक्तिर्बोध्या । तापेनेति । 'राजते' इत्येकस्य धर्मस्य पृथक्पदाभ्यां निर्देशाल्लक्ष्यत्वम् ।

यथा वा—

त्वयि वीर ! विराजते परं दमयन्तीकिलकिञ्चितं किल ।
तरुणीस्तन एव दीप्यते मणिहारावलिरामणीयकम् ॥

यथा वा—

कवयः परितुष्यन्ति नेतरे कविसूक्तिभिः ।
न ह्यकूपारवत्कूपा वर्धन्ते विधुकान्तिभिः ॥

अत्र तोषाभाववृद्ध्यभावधर्मेणेतरकूपयोरुपमा । वैधर्म्येण यथा—

षट्पद एव नितान्तं सम्प्रति सहकारसौरभाभिज्ञः ।
न हि भेकमीनपङ्क्तिः कमलाऽऽमोदं विजानाति ॥

'शब्दावृत्तावेव आवृत्तिदीपकम्, अर्थावृत्तौ तु प्रतिवस्तूपमे'त्याहुः ॥ ५५ ॥

दृष्टान्तालङ्कारमाह—

**चेद् बिम्बप्रतिबिम्बत्वे दृष्टान्तस्तदलङ्कृतिः ।**
**स्यान्मल्लप्रतिमल्लत्वे सङ्ग्रामोद्दामहुङ्कृतिः ॥ ५६ ॥**
**दृष्टाऽन्तश्चेद्भवन्मूर्तिस्तन्मृष्टा दैवदुर्लिपिः ।**
**जाता चेत्प्राक् प्रभा भानोस्तर्हि याता विभावरी ॥ ५७ ॥**

चेदिति । धर्मसहितस्योपमानस्य धर्मसहितस्योपमेयस्य च बिम्बप्रतिबिम्बभावबोधकसमभिव्याहारे साधारणधर्मोपमानोपमेयत्वानां सर्वेषां बिम्बप्रतिबिम्बभावप्रणिधानगम्यत्वे वा दृष्टान्तालङ्कारः । साधारणधर्मसहितस्येति विशेषणात्तुल्ययोगितादीपकप्रतिवस्तूपमानां व्यावृत्तिः । मल्लप्रतिमल्लत्वे सङ्ग्रामसम्बन्धिनी उद्दामहुङ्कृतिः स्यात् । अत्र पूर्ववाक्यार्थोत्तरवाक्यार्थयोर्बिम्बप्रतिबिम्बभावाल्लक्ष्यमपीदमेव । मल्लप्रतिमल्लत्वे यथा सङ्ग्रामोद्दामहुङ्कृतिः स्यात्तथा बिम्बप्रतिबिम्बत्वे दृष्टान्ताऽलङ्कृतिः स्यादिति पदान्वयः । दृष्टान्तसहितस्य बिम्बप्रतिबिम्बत्वस्य हुङ्कृतिसहितस्य मल्लप्रतिमल्लत्वस्य बिम्बप्रतिबिम्बभावः । अन्ये तु—'साधारणधर्मयोरुपमानयोरुपमेययोश्च बिम्बप्रतिबिम्बभावो न तु विशिष्टस्ये'त्याहुः । अस्य क्लिष्टत्वादक्लिष्टमुदाहरणान्तरमाह—दृष्टेति । अन्तर्हृदये भवन्मूर्तिर्दृष्टा तदा दैवदुर्लिपिर्मृष्टा, प्राक् प्राच्यां यदि भानोः प्रभा जाता तदा रात्रिर्गतेति । अत्र स्पष्टः साधारणधर्मादीनां बिम्बप्रतिबिम्बभावः । यथा वा—

वेलातिगस्त्रैणगुणाब्धिवेणिर्न योगयोग्यासि नलेतरेण ।
संदर्भ्यते दर्भगुणेन मल्लीमाला न मृद्वी भृशकर्कशेन ॥

यथा वा—

तवाहवे साहसकर्मशर्मणः पाणिं (करं) कृपाणान्तिकमानिनीषतः ।
भटाः परेषां विशरारुतामगुर्दधत्यवाते स्थिरतां हि पांसवः ॥—॥ ५७ ॥

निदर्शनामाह—

**वाक्यार्थयोः सदृशयोरैक्यारोपो निदर्शना ।**
**यद्दातुः सौम्यता सेयं सुधांशोरकलङ्कता ॥ ५८ ॥**

वाक्यार्थयोरिति । उपमानोपमेयभावकल्पनाफलको वाक्यार्थयोराहार्यतादात्म्यारोपो निदर्शनेत्यर्थः(१) । यद्दातुरिति लक्ष्यम् । दातृसौम्यतारूपवाक्यार्थस्य चन्द्राऽकलङ्कत्वरूपवाक्यार्थस्य च यत्तच्छब्दाभ्यामैक्यारोपात् । अत एव दृष्टान्तवैलक्षण्यम्, तत्रैक्यारोपाभावात् । यथा वा—

यत्प्रदेयमुपनीय वदान्यैर्दीयते सलिलमर्थिजनाय ।
साऽर्थनोक्तिविफलत्वविशङ्कात्रासमूर्छदसमृत्युचिकित्सा ॥

न च निदर्शना रूपकान्न भिन्ना, तादात्म्यारोपरूपत्वादिति वाच्यम् । पदार्थतादात्म्यारोपरूपत्वेन वाक्यार्थतादात्म्यारोपरूपत्वेन च तयोर्भेदात् । अन्यत्र तु—

'अभवन् वस्तुसम्बन्ध उपमापरिकल्पकः ।
स्वस्वहेत्वन्वयस्योक्तिः क्रिययैव हि सा परा ॥'

इति निदर्शनाद्वयम् । आद्या यथा—

स्वप्रकाश ! जड एष जनस्ते वर्णनं यदभिलष्यति कर्तुम् ।
नन्वहर्पतिमहः प्रति स स्यान्न प्रकाशनरसस्तमसः किम् ॥

द्वितीया यथा—

उन्नतं पदमुपैति यो लघुर्हेलयैव स पतेदिति ध्रुवम् ।
शैलशेखरगतो दृष(तः पृष)त्कणश्चारुमारुतधुतः पतत्यधः ॥

अत्र पातक्रियाया उन्नतपदप्राप्तिरूपकारणस्य तद्धेतोर्लाघवस्य च सम्बन्धः । इयमेव मालारूपा यथा—

कर्णे चन्द्रमादत्ते दोर्भ्यां तरति सागरम् ।
मेरुं लङ्घयते, यस्ते गुणान् गदितुमिच्छति ॥

अन्यत्र तु—'अपरां बोधनं प्राहुः क्रिययाऽसत्सदर्थयोः ।' विशिष्टक्रियया सतोऽसतो वार्थस्य बोधके समभिव्याहारेऽन्या निदर्शनेत्यर्थः । यथा—

मयि स्थितिर्नम्रतयैव लभ्यते दिगेव तु स्तब्धतया विलङ्घ्यते ।
इतीव चापं दधदाशुगं क्षिपन्नयं नयं सम्यगुपादिशद् द्विषाम् ॥

---

(१) एतदग्रे 'इयं च द्विधा, सम्बन्धनिबन्धना असम्भवद्वस्तुसम्बन्धनिबन्धना च । दातृसौम्यतासम्बन्धस्य सम्भवात्(?)' इत्यधिकं वर्तते क-पुस्तके ।

अत्र इषुक्षेपधनुर्धारणरूपक्रिययेष्टानिष्टजनकार्थावबोधनात् ॥ ९८ ॥

व्यतिरेकालङ्कारमाह—

**व्यतिरेको विशेषश्चेदुपमानोपमेययोः ।**
**शैला इवोन्नताः सन्तः किन्तु प्रकृतिकोमलाः ॥९९॥**

व्यतिरेक इति । यत्रोपमानापेक्षयोपमेयस्याधिक्यप्रतिपादनं तत्र व्यतिरेकालङ्कार इत्यर्थः । तच्चोपमेयाधिक्यप्रतिपादनेनोपमानन्यूनत्वप्रतिपादनेनोभयप्रतिपादनेन चेति । त्रिधाप्युपमानोपमेयभावे शाब्दे आर्थे चेति षोढा । आद्योदाहरणं शैला इवेति । उपमायाः शाब्दत्वात् प्रकृतिकोमला इत्युपमेयाधिक्यप्रतिपादनात् । 'अयं कलङ्कितश्चन्द्राद्कलङ्को विशिष्यते ।' इत्यादि द्वितीयाद्युदाहरणं बोध्यमिति प्राञ्चः। 'उपमानन्यूनताप्रतिपादने प्रतीपाख्यमलङ्कारान्तर'मिति मूलाशयः । केचित्तु—"हनूमदाद्यैर्यशसा मया पुनर्द्विषां हसर्दूत्यपथः सितीकृतः ।' 'मयाप्तं रामत्वं कुशलवसुता न त्वधिगता' इत्यादौ उपमानापेक्षयोपमेयस्य न्यूनत्वप्रतिपादनेऽपि व्यतिरेकालङ्कार" इत्याहुः "अस्य व्यतिरेकालङ्कारस्य चतुर्विंशतिभेदाः । उपमेयाधिक्यप्रतिपादकविशेषणोक्तौ उपमानन्यूनताप्रतिपादकविशेषणोक्तौ उभयोक्तावुभयानुक्तौ चेति चत्वारः । चत्वार उपमायां शाब्द्याम् आर्थ्यां व्यङ्ग्यायां चेति द्वादश । एवं श्लेषे द्वादशे"ति काव्यप्रकाशः । तन्न, उभयानुक्तौ उपमेयाधिक्यरूपव्यतिरेकज्ञानाऽसम्भवात् ॥९९॥

सहोक्त्यलङ्कारमाह—

**सहोक्तिः सहभावश्चेद्भासते जनरञ्जनः ।**
**दिगन्तमगमद्यस्य कीर्तिः प्रत्यर्थिभिः सह ॥६०॥**

सहोक्तिरिति । उपमानोपमेयभावकल्पकसहत्वोक्तौ सहोक्त्यलङ्कार इत्यर्थः । दिगन्तेति लक्ष्यम् । अत्र साहित्यबलेनैव कीर्तिनिष्ठदिगन्तगमनस्य वैरिनिष्ठत्वप्रतीतेरुपमानोपमेयभावकल्पनम् । अस्य साहित्यस्य 'वैरिणोऽपि दिगन्ते गता' इति वर्ण्यनिष्ठाऽतिपौरुषरूपचमत्काराधायकत्वात् । यथा वा—

क्षणादथैष क्षणदापतिप्रभः प्रभञ्जनाऽध्येयजवेन वाजिना ।
सहैव ताभिर्जनदृष्टिवृष्टिभिर्बहिः पुरोऽभूत् पुरुहूतपौरुषः ॥

(१)अत्र राजनिष्ठपुरबहिर्भावस्य दृष्टिनिष्ठताप्रत्ययेन कल्प्यसादृश्येनान्यविषयाऽदर्शनादिरूपचमत्काराधानात् । अयं च श्लेषगर्भोऽपि । यथा—

अनेन साध तव यौवनेन कोटिं परामच्छिदुरोऽध्यरोहत् ।
प्रेमाऽपि तन्वि ! त्वयि वासवस्य गुणोऽपि चापे सुमनःशरस्य ॥

अत्र कोटिपदस्यात्यन्ताधिक्यधनुःकोटिपरत्वात् श्लेषः ॥ ६० ॥

---

(१) इत आरभ्य 'प्रेमापि' इत्यन्तः पाठः ख-पुस्तके नास्ति ।

विनोक्तिमाह—

**विनोक्तिश्चेद्विना किञ्चित्प्रस्तुतं हीनमुच्यते ।**

**विद्या हृद्यापि साऽवद्या विना विनयसम्पदा ॥ ६१ ॥**

विनोक्तिरिति । यदभावोक्त्या वर्णनीयस्यासत्त्वापादनं, तादृश्योक्तौ विनोक्त्यलङ्कार इत्यर्थः । उदाहरणं विद्येति । वर्णनीयविद्याया विनयाभावेऽसत्त्वप्रतिपादनात् । यथा वा—

तव रूपमिदं तया विना विफलं पुष्पमिवाऽवकेशिनः ।
इयमृद्धधना वृथाऽवनी स्ववनी संप्रवदत्पिकाऽपि का ॥

अत्र वृथाशब्दकाकूक्तिभ्यामसत्त्वोक्तिः । 'विना खलैर्विभात्येषा राजेन्द्र! भवतः सभा' इति सत्त्वप्रतिपादनम् ॥ ६१ ॥

समासोक्त्यलङ्कारमाह—

**समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत् ।**

**अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः ॥ ६२ ॥**

समासोक्तिरिति । प्रस्तुते श्लिष्टैरश्लिष्टैर्वा पदार्थैर्वर्ण्यमाने चमत्काराधायकाऽप्रस्तुतार्थप्रत्ययः समासोक्तिः । 'समासः सङ्क्षेपस्तेनोक्ति'रित्यक्षरार्थः । अयमिति लक्ष्यम् । अत्र मुखशब्दः प्रारम्भवदनयोः, रक्तशब्दश्चाऽरुणकामुकयोः, चुम्बतिशब्दश्चुम्बनसम्बन्धयोः श्लिष्ट इति, ऐन्द्रीशब्दप्रतिपादितेन्द्रसम्बन्धिस्त्रीप्रतीतेः पुंलिङ्गचन्द्रमःशब्दप्रतिपादितपुमन्तरप्रतीतेश्च परनायिकासक्तपुरुषान्तरवृत्तान्तः प्रतीयत इति श्लेषेणोदाहरणम् । यथा वा—

वरुणरमणामाशामासादयन्तममुं रुची-
निचयसिचयांशांशभ्रंशक्रमेण निरंशुकम् ।
तुहिनमहसं पश्यन्तीव प्रसादमिषादसौ
निजमुखमितः स्मेरं धत्ते हरेर्महिषी हरित् ॥

अत्र महतोऽन्यस्त्रीनिषेवणे, वस्त्रादेराच्छिद्य ग्रहणेन विपद्ग्रस्तत्वदर्शने चान्यस्त्रीणां हास्यमित्यादिप्रतीतेः ॥ ६२ ॥

खण्डश्लेषमाह—

**खण्डश्लेषः पदानां चेदेकैकं पृथगर्थता ।**

**उच्छलद्भूरिकीलालः शुशुभे वाहिनीपतिः ॥ ६३ ॥**

खण्डश्लेष इति । श्लेषो द्विधा शब्दश्लेषोऽर्थश्लेषश्च । विजातीयोच्चारणयोग्यत्वेन भिन्नयोः शब्दयोरेकोच्चारणविषयत्वं शब्दश्लेषः । सोऽष्टधा, वर्णपदलिङ्गभाषाविभक्तिप्रकृतिप्रत्ययवचनभेदात् । वर्णभेदेन विरूपयोः पदयोरादेशादिवशेनैकरूप्ये वर्णश्लेषः । यथा—चन्द्राद्दष्टवाचकविधुविधिपदयोः 'विधा'विति सप्तम्यन्तम् । न्यूनाधिक-

तया भिन्नार्थयोः पदयोर्मिथोमेलनादेकार्थप्रतिपादकत्वं पदश्लेषः। यथा-'पृथुकार्तस्वर-पात्र'मिति। अत्र महत्सुवर्णपात्रवत्त्वं पृथुकार्थं य आर्तस्वरस्तस्य स्थानम् (इत्यर्थः)। विभिन्नलिङ्गार्थप्रतिपादकयोर्व्याकरणवशेनैकरूप्यं लिङ्गश्लेषः। यथा-'रामयो'रिति। भिन्नार्थयोः प्राकृतसंस्कृतयोरैकरूप्यं भाषाश्लेषः। यथा-

महदेसुरसंधम्मे तमवसमासंगमागमाहरणे।
हरबहुसरणं तं चित्तमोहमवसरउमे सहसा॥

'मम देहि रसं धर्मं तमोवशामाशां गमागमाद्धर नः, हरवधु! शरणं त्वं चित्तमोहोऽपसरतु मे सहसा' इति प्राकृतार्थः। 'महं ददाति सा महदा, उत्सवदात्रि! सुरसन्धं सुरान् सन्दधाति वशीकरोतीति सुरवशीकारिणं समासङ्गं सम्यगभ्यासम् अव रक्ष (हे आगमाहरणे!) बहुसरणं बहुविस्तारिणं चित्तमोहम् अवसरे समये उमे! पार्वति! हर दूरीकुरु' इति संस्कृतार्थः। भिन्नयोर्विभक्त्योर्नाम्नो धातोश्चैकरूप्यं विभक्तिश्लेषः। यथा—'हरा'दिपदे सुप्तिङन्तत्वम्। भिन्नधात्वोः प्रत्ययवशेनैकरूप्यं प्रकृतिश्लेषः। यथा—'वह प्रापणे' 'वच परिभाषणे' इति धात्वो'र्वक्ष्यती'ति। भिन्नयोरपि तृज्भाप्रत्यययोरकरूप्यं प्रत्ययश्लेषः। यथा-'नन्दिते'ति। नदिधातोर्नन्दिनो बलीवर्दस्य भावो नन्दिता, आनन्दाश्रय इति च। द्व्येकार्थप्रतिपादकयोर्व्याकरणवशेनैकरूप्यं वचनश्लेषः। यथा-'कुरुता'मिति परस्मैपदप्रथमपुरुषद्विवचने आत्मनेपदैकवचने च। अयमष्टविधः सभङ्गश्लेषः। पर्यायशब्दानुपस्थाप्यार्थद्वयोपस्थापकाऽभिन्नशब्दत्वमभङ्गशब्दश्लेषत्वम्। यथा—

क्षोणीभृतामतुलकर्कशविग्रहाणा-
मुद्दामदर्पहरिकुञ्जरकोटिभाजाम्।
पक्षच्छिदामयमुदग्रबलो विधाय
त्रासाद्विभग्नमखिलं जगदुज्जहार॥

इत्यादौ तात्पर्यग्रहेणोभयोपस्थापकत्वात्। पर्यायशब्दोपस्थाप्यार्थद्वयोपस्थापकशब्दवत्त्वमर्थश्लेषः। यथा—

स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम्।
अहो! सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च॥

अत्र 'अल्पेनोर्ध्वं समायाती'ति पाठेऽप्यर्थद्वयप्रतिभानस्य तुल्यत्वात्। न च श्लेषस्योपमाज्ञानजन्यतयोपमाया एव तत्रालङ्कारतया न श्लेषस्यालङ्कारत्वमिति वाच्यम्। श्लेषज्ञानात्पूर्वं सादृश्यज्ञानाभावेन श्लेषस्योपमाज्ञानजन्यत्वाभावात्। प्रथमोपस्थितिविषयतया श्लेषस्यैव तत्रोपमाज्ञापकतयाऽलङ्कारत्वात्। एवम्—यत्र श्लेषज्ञानजन्यो विरोधालङ्कारोऽलङ्कारान्तरं वा तत्रापि श्लेष एवालङ्कारो, मुख्यत्वात्। 'एतस्य शब्दान्वयव्यतिरेकानुविधायिज्ञानविषयत्वाच्छब्दालङ्कारत्व'मिति

काव्यप्रकाशः । 'अर्थालङ्कारत्व'मिति जीर्णाः । न चैतस्य गुणमध्यपाठान्नालङ्कारत्वमिति वाच्यम् । गुणान्तर्गतश्लेषस्य विसन्धित्वाभावरूपत्वात् । कीलालेति । कीलालपदेन जलरुधिरप्रवाहरूपार्थद्वयपरत्वात्, वाहिनीपतिपदस्य सेनापतिनदीपतिरूपार्थद्वयपरत्वाल्लक्ष्यत्वम् । अयं चाभङ्गश्लेषः । पर्यायशब्दानुपस्थाप्यार्थद्वयप्रतिपादकशब्दवत्त्वात् । यथा वा—

अत्याजि लब्धविजयप्रसरस्त्वया किं
विज्ञायते रुचिपदं न महीमहेन्द्रः ।
प्रत्यर्थिदानवशताहितचेष्टयासौ
जीमूतवाहनधियं न करोति कस्य ॥ ६३ ॥

सभङ्गशब्दश्लेषमाह—

भङ्गश्लेषः पदस्तोमस्यैव चेत्पृथगर्थता ।
अजरामरता कस्य नायोध्येव पुरी प्रिया ॥ ६४ ॥

भङ्गश्लेष इति । अर्थद्वयप्रतिपादकपदद्वयस्य मेलनादेकार्थप्रतिपादकत्वे सभङ्गश्लेष इत्यर्थः । अजरेति लक्ष्यम् । अत्र 'अजरामरते'ति द्वन्द्वोत्तरभावप्रत्ययस्योभयत्र सम्बन्धादजरामरतेत्यस्य 'अजश्च रामश्चे'ति द्वन्द्वगर्भषष्ठीतत्पुरुषेण 'अजरामविषयकप्रीतिमती'त्यर्थस्यापि प्रतिपादनात् ॥ ६४ ॥

अर्थश्लेषमाह—

अर्थश्लेषोऽर्थमात्रस्य यद्यनेकार्थ आश्रयः ।
कुटिलाः श्यामला दीर्घाः कटाक्षाः कुन्तलाश्च ते ॥ ६५ ॥

अर्थश्लेष इति । अर्थमात्रस्य न तु शब्दविशिष्टस्य । तेन पर्यायशब्दोपस्थाप्यत्वमुक्तम् । अनेकार्थे उपमानोपमेयरूपः यदि आश्रयत्वेन कथ्यते तत्रेत्यर्थः । तेन पर्यायशब्दोपस्थाप्यार्थद्वयोपस्थापकपदवत्त्वमर्थश्लेषः । कुटिलादिपदोपस्थाप्यार्थस्य वक्रादिपदैरप्युपस्थितेर्लक्ष्यत्वम् ॥ ६५ ॥

अप्रस्तुतप्रशंसामाह—

अप्रस्तुतप्रशंसा स्यात्सा यत्र प्रस्तुतानुगा ।
कार्यकारणसामान्यविशेषादेरसौ मता ॥ ६६ ॥
कमलैः कमलावासैः किं किं नासादि सुन्दरम् ।
अप्यम्बुधेः परं पारं प्रयान्ति व्यवसायिनः ॥ ६७ ॥

अप्रस्तुतेति । चमत्कारकारककार्योपस्थापककारणकथने तादृशकारणोपस्थापक-

कार्यकथने तादृशसामान्योपस्थापकविशेषकथने तादृशविशेषोपस्थापकसामान्यकथने सदृशोपस्थापकसदृशकथने अप्रस्तुतप्रशंसालङ्कार इत्यर्थः। कार्येति। आदिना तुल्यार्थग्रहणम्। अप्राकरणिकश्चार्थः कार्यरूपो हेतुरूपः सामान्यरूपो विशेषरूपः सदृशवस्तुरूपश्चेति पञ्चविध इत्यर्थः। तदुक्तम्—

'कार्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति।
तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा॥'

इति। निमित्ते कारणे तदन्यस्य कारणादेस्तुल्ये प्रस्तुते तुल्यस्य यद्वचनमित्यर्थः। कमलैरिति। 'कमलः सुन्दरम् आसादी'त्यन्वयः। अत्र कमलानां जलकार्यत्वात्कारणीभूतजलनिष्ठसौन्दर्यस्योपस्थितिः 'कमलावासैः किं किं आसादी'त्यन्वयः। अत्र कमलावासरिति करणोक्त्या सर्वमनोहरकार्योपस्थितिः। अप्यम्बुधेरिति। अत्र 'अम्बुधेः पार'मिति विशेषोक्त्या परदेशगमनाद्युद्योगसामान्योपस्थितिः। 'व्यवसायिन' इति सामान्योक्त्या प्रकृतकार्यविशेषोपस्थितिः। तुल्येन तुल्योपस्थितिरपि प्रकृतवाक्यार्थज्ञानोत्तरं समासोक्त्या जायत इति। यथा वा—

स्मारं ज्वरं घोरमपत्रपिष्णोः सिद्धागदङ्कारचये चिकित्सौ।
निदानमौनादविशद्विशाला साङ्क्रामिकी तस्य रुजेव लज्जा॥

अत्र नलनिष्ठलज्जारूपकार्योक्त्या कारणीभूतदमयन्तीविषयानुसरणोपस्थितिद्वारा स्मरेणवेयं याजना कृतेति प्रकृतोपपत्तिः।

पतगेन मया जगत्पतेरुपकृत्यै तव किं प्रभूयते।
इति वेद्मि, न तु त्यजन्ति मां तदपि प्रत्युपकर्तुमर्तयः॥

अत्र प्रत्युपकारेच्छारूपकारणोक्त्या प्रकृतगमनोपस्थितिः।

क्रमेलकं निन्दति कोमलेच्छुः क्रमेलकः कण्टकलम्पटस्तम्।
प्रीतौ तयोरिष्टभुजोः समायां मध्यस्थता नैकतरोपहासः॥

अत्र 'कोमलेच्छुक्रमेलकौ नोपहसनीयौ' इति विशेषोक्त्या 'सर्वोऽपि स्वेष्टेच्छुर्नोपहसनीय' इति सामान्योपस्थितिः।

नित्यं नियत्या परवत्यशेषे कः संविदानोऽप्यनुयोगयोग्यः।
अचेतना सा च न वाचमर्हेद्वक्ता तु वक्तश्रमकर्म भुङ्क्ते॥

अत्र अनुयोगकर्तृत्वसामान्योक्त्या तादृशसखीविशेषोपस्थितिः। तुल्योक्त्या तुल्योपस्थितिस्त्रिधा, श्लेषेण समासोक्त्या सादृश्यमात्रेणेति। यथा—

ध्वनिरतिमधुरः शुचित्वमुच्चैर्जनिरपि शङ्ख! नदीनतस्तवाभूत्।
अवगतमखिलं बहिस्तदेतत् कुटिलतरं पुनरन्तरं न विद्मः॥

समासोक्त्या यथा—

आगच्छतामपूर्णानां पूर्णानां प्रतिगच्छताम्।
यद्ध्वनि न सद्वद्धो घटानां, तद् वृथा सरः॥

साहश्येन यथा—

यत्कस्यामपि भानुमान्न ककुभि स्थेमानमालम्बते
जातं यद् वनकाननैकशरणं प्राप्तेन दावाग्निना ।
एतैस्तद्भुजतेजसा विजितयोस्तावत्तयोरौचिती
धिक् तं वाडवमम्भसि द्विषि भिया येन प्रविष्टं पुनः ॥

आरोपितसाहश्येन यथा—

अभ्यस्ता पदश्रृङ्खला, न गणिताऽध्याधोरणाऽधोगतिः
सोढा कापि सृणिव्यथा, परिजनाः प्राणोपमा विस्मृताः ।
वृत्तो वाचि तृणच्छदस्तदपि नो कश्चित्पुपूरे मना-
गेषा कुक्षिदरीति सम्प्रति पुनर्वाञ्छामि तत्काननम् ॥

एवमन्यान्युदाहरणान्यूह्यानि । प्रायेण सर्वेऽप्यन्यापदेशा उदाहरणम् । अत्र वाच्यार्थस्याप्रस्तुतत्वेनाऽवर्णनीयतया तत्राभिधायामपर्यवसितायां तेन प्रस्तुतार्थाभिव्यक्तिः । समासोक्त्यादौ प्रस्तुतस्य वर्णनीयत्वेनाभिधायां पर्यवसितायामर्थसौन्दर्यबलेनाप्रस्तुतार्थभानमिति । अन्यत्र तु-'अप्रस्तुतप्रशंसा स्यादप्रकाण्डे तु या स्तुतिः'। स्तुतिरित्युपलक्षणं निन्दाया अपि । तेन यत्राप्रस्तुतस्य स्तुत्या निन्दया वा प्रस्तुतस्य स्तुतिर्निन्दा वा प्रतीयते तत्राप्यप्रस्तुतप्रशंसालङ्कारः । न च तत्र व्याजस्तुत्यलङ्कार इति वाच्यम् । निन्दास्तुत्योरेकविषयत्व एव व्याजस्तुत्यलङ्कारङ्गीकारात् । यथा—

ये किल नाऽऽशादासाः सरसि सदा ये कृतावासाः ।
पानीयपानमुदितास्त एव धन्याः परं मीनाः ॥

अत्राप्रकृतमीनस्तुत्या प्रकृतराजसेवकानां निन्दा ।

उपचीयमानमनिशं बहुतरदुरितं कृतं तेन ।
यः खलुनितान्तकुटिलं सेवति (?) तरलं धराधीशम् ॥

अत्र सेवकनिन्दया प्रकृतोदासीनस्तुतिः ॥ ६७ ॥

अर्थान्तरन्यासमाह—

**भवेदर्थान्तरन्यासोऽनुषक्तार्थान्तराभिधा ।**
**हनुमानब्धिमतरद् दुष्करं किं महात्मनाम् ॥ ६८ ॥**

भवेदिति । अनुषक्त उपपादकः । यत्र प्रस्तुतस्य सामान्यरूपस्य विशेषरूपस्य वार्थस्योपपादनार्थं विशेषरूपस्य सामान्यरूपस्य वार्थस्याभिधानं तत्रार्थान्तरन्यासालङ्कार इत्यर्थः । अतश्चोक्तकाव्यलिङ्गालङ्काराद्भेदः । हेतुरूपार्थसमर्पकत्वस्य काव्यलिङ्गत्वात् । न ह्यत्र सामान्यरूपो विशेषरूपो वार्थो हेतुः, अपितूपपादकः । उपपादनं च निश्चयविषयत्वरूपदृढीकरणम् । काव्यलिङ्गे तु व्याप्तिपक्षधर्मताबलेनोपपादनमिति

भेदः । न चैवमनुमानात्काव्यलिङ्गस्य को भेदः ? उपपादनीयार्थोक्त्यनुक्तिभ्यां तयोर्भेदात् । हनुमानित्युदाहरणम् । 'महात्मनां सर्वं सुकर'मिति सामान्यार्थस्याब्धितरणरूपविशेषेणोपपादनात् । विशेषस्य च सामान्येनोपपादनात् । उपपादनं च साहश्येन वैधर्म्येण वा । अब्धितरणस्य दुष्करस्य च साहश्यात् । यथा वा—

त्वया निधेया न गिरो मदर्थाः क्रुधा कदुष्णे हृदि नैषधस्य ।
पित्तेन दूने रसने सितापि तिक्तायते हंसकुलावतंस ! ॥

अत्र 'क्रुद्धे नले मदीया वार्ता न वक्तव्ये'ति विशेषाभिधानस्योपपादकः पुरुषसामान्यस्य दोषेणान्यथावस्थितार्थस्यान्यथाभानरूप उक्तः ॥ ६८ ॥

विकस्वरालङ्कारमाह—

**यस्मिन् विशेषसामान्यविशेषाः स विकस्वरः ।**
**स न जिग्ये महान्तो हि दुर्धर्षाः क्ष्माधरा इव ॥ ६९ ॥**

यस्मिन्निति । उपन्यस्तस्य विशेषस्य समर्थनार्थं सामान्योपन्यासे कृते तावता परितोषाभावात्पुनरुपमानभूतार्थविशेषोपन्यासेन तत्समर्थने विकस्वरालङ्कार इत्यर्थः । उदाहरणं स इति । अत्र 'स न जित' इति विशेषरूपेणाभिधानोत्तरं 'महान्तो हि दुर्धर्षा' इति सामान्यरूपेणाभिधाने कृते 'क्ष्माधरा इवे'ति पुनरुपमानभूतविशेषरूपाभिधानम् । यथा वा—

अलं विलम्ब्य त्वरितुं हि वेला कार्ये किल स्थैर्यसहे विचारः ।
गुरूपदेशं प्रतिभेव तीक्ष्णा प्रतीक्षते जातु न कालमर्तिः ॥

अत्राद्यचरणेन कार्यविशेषे विलम्बवारण उपन्यस्ते सामान्येन च तत्समर्थने कृते पुनरुपमानीभूतविशेषोपादानम् ॥ ६९ ॥

पर्यायोक्त्यलङ्कारमाह—

**कार्याद्यैः प्रस्तुतैरुक्तं पर्यायोक्तं प्रचक्षते ।**
**तृणान्यङ्कुरयामास विपक्षनृपसद्मसु ॥ ७० ॥**

कार्याद्यैरिति । प्रकर्षेण स्तुतैः स्तुतिविषयैः कार्याद्यैरुक्तं गम्ये वक्तव्यार्थे इति शेषः । कार्यादीत्युपलक्षणं कारणसम्बन्ध्यादेरपि । एवञ्च-गम्यस्य विवक्षितस्वरूपादतिचमत्कारजनकसाधारणधर्मेणाभिव्यञ्जने पर्यायोक्तिरित्याशयः । तृणानीति लक्ष्यम् । य इत्यध्याहृत्य सोऽस्तीत्यादिना वाक्यार्थः पूरणीयः । अरिभवननिष्ठतृणाङ्कुरोत्पादकतया प्रस्तुतस्य राज्ञो गम्यत्वात् । यथा वा—

यस्तन्वि ! भर्ता कुसुमेन सार्यं दिशः समालम्भनकौतुकिन्याः ।
आशापतिस्ते दमयन्ति ! सोऽपि स्मरेण दासीभविता त्वदेशि ॥

यथा वा—

विद्यासन्ध्योदयोद्रेकादविद्यारजनीक्षये।
यदुदेति नमस्तस्मै कस्मैचिद्विश्वतन्त्विषे॥

अत्र सूर्यस्तत्कालीनोदयकर्म(कर्तृ)त्वेनासाधारणेन रूपेणाभिहितः। यथा वा—

येन त्रिःसप्तकृत्वो नृपबहलवसामांसमस्तिष्कपङ्क-
प्राग्भारेऽकारि भूरिश्च्युतरुधिरसरिद्वारिपूरेऽभिषेकः।
यस्य स्त्रीबालवृद्धावधिनिधनविधौ निर्दयो विश्रुतोऽसौ
राजन्योर्वीसकूटक्रथनपटुरटद्घोरधारः कुठारः॥

अत्र गम्यः परशुराम एकविंशतिवारक्षत्रियक्षयकारणत्वेन कुठारसम्बन्धित्वेनाभिहितः। यथा वा(१)—

तीर्णः किमर्णोनिधिरेष नैव सुरक्षितेऽभूदिह यत्प्रवेशः।
फलं किमेतस्य तु साहसस्य न तावदद्यापि विनिश्चिनोमि॥

अत्र 'किमर्थमागतोऽसी'ति गम्यं भङ्ग्यन्तरेणाभिहितम्। एवञ्च–गम्यस्यार्थस्य भङ्ग्यन्तरेणाभिधानं पर्यायोक्तिरिति सम्प्रदायः। भिन्नकारकप्रकारकयोर्वाच्यव्याञ्जनिकयोरर्थयोरैक्यं पर्यायोक्तिः।

यं प्रेक्ष्य चिररूढापि निवासप्रीतिरुज्झिता।
मदनैरावणमुखे मानेन हृदये हरेः॥

अत्र मदमानयोः प्रेक्षणप्रीत्यसम्भवादुक्तकारकप्रकारेण तात्पर्याभावाद्वाच्यानामेव मदमानैरावणेन्द्राणां कारकान्तरप्रकारेण व्यङ्ग्यता। मदमानहीनत्वरूपोऽर्थ उभयत्राप्येक एव। यथा निर्विकल्पकसविकल्पकयोर्विशेषणविशेष्यभेदसंसर्गाविषयकतद्विषयकयोर्विषयैक्यम्। 'अत्र 'ऐरावणशक्रौ मदमानमुक्तौ जातौ'विति व्यङ्ग्यम्'। इति काव्यप्रकाशः। यथा वा—'स्ववृत्तितत्तज्जनयन्त्रणार्तिविश्रान्तिमायुः ककुभां विभागाः।' अन्यत्र तु—'पर्यायोक्तं तदप्याहुर्यद् व्याजेनेष्टसाधनम्।' यथा—

विमातृपुत्रस्य करस्थकेतकीपुष्पं जिघृक्षुः शिशुरेष रोदिति।
हसन्तु सर्वे विकिरन्तु कण्टकानुच्चैस्तरं, यामि तथापि तद्वनम्॥

अत्र वनगमनव्याजेन स्वैरविहार इष्टः प्रतीयते॥ ७०॥

व्याजस्तुत्यलङ्कारमाह

## उक्तिर्व्याजस्तुतिर्निन्दास्तुतिभ्यां स्तुतिनिन्दयोः।
## कस्ते विवेको नयसि स्वर्गं पातकिनोऽपि यत्॥ ७१॥

उक्तिरिति। निन्दया स्तुतेः स्तुत्या च निन्दाया उक्तिर्व्याजस्तुतिरित्यर्थः। 'कस्ते विवेक' इति निन्दया 'पापिनोऽपि स्वर्गं नयसी'ति स्तुतिः।

(१) 'यथा वा' इत्यारभ्य 'भङ्ग्यन्तरेणाभिहितम्' इत्यन्तं नास्ति ख-पुस्तके।

अपहाय निखिलकृत्यं विहाय निद्रामपि त्वरया ।
प्रातर्यदागतोऽसि प्रभो ! तदुचीयते महद्भाग्यम् ॥

इयं च स्तुतिमुखी निन्दा । अत्र स्तुतिनिन्दयोरेकविषयत्वं बोध्यम् । 'अन्य-स्तुतिनिन्दाभ्यामन्यस्तुतिनिन्दयोरप्रस्तुतप्रशंसे'ति केचित् । अन्यत्र—

स्तुत्या स्तुतेरभिव्यक्तिर्व्याजस्तुतिरुदाहृता ।
निन्दाया निन्दया व्यक्तिर्व्याजनिन्देति गीयते ॥

इयं च विषयभेदे यथा—

बहुरूपकशालभञ्जिकामुखचन्द्रेषु कलङ्करङ्कवः ।
यदनेकसौधकन्धराहरिभिः कुक्षिगतीकृता इव ॥

अत्र शालभञ्जिकामुखचन्द्रे निष्कलङ्क(त्व)स्तुत्या नगरीस्तुतिः ।

त्वमुचितं नयनार्चिषि शम्भुना भुवनशान्तिकहोमहविः कृतः ।
तव वयस्यमपास्य मधुं मधुं हतवता हरिणा बत ! किं कृतम् ॥

अत्र पूर्वार्धे महादेवस्तुत्या कामनिन्दा । उत्तरार्धे विष्णुनिन्दया कामनिन्दा ७१॥

आक्षेपालङ्कारमाह—

**आक्षेपस्तु प्रयुक्तस्य प्रतिषेधो विचारणात् ।**
**चन्द्र ! सन्दर्शयात्मानमथवाऽस्ति प्रियामुखम् ॥ ७२ ॥**

आक्षेप इति । प्रयुक्तस्य उपमानत्वेन संमतस्य, विचारणात् 'उपमेयमेतत्कार्य-क्षम'मिति विचारेण प्रतिषेध आनर्थक्यकथनम् आक्षेपालङ्कार इत्यर्थः । प्रियामुखे जयिनि सति नोचितं तद्दर्शनमिति प्रतिषेधाह्लादत्वम् । यथा वा—

तदोजसस्तद्यशसः स्थिताविमौ वृथेति चित्ते कुरुते यदा यदा ।
तनोति भानोः परिवेषकैतवात्तदा विधिः कुण्डलनां विधोरपि ॥

यद्वा प्रयुक्तस्येत्युपलक्षणम् । उक्तवक्ष्यमाणविषयको युक्तिपूर्वको वस्तुतः प्रतिषेधो यः स्तुतिनिन्दाव्यञ्जकः, स आक्षेपः ।

स्तुतौ भवोनस्त्यज साहसिक्यं वक्तुं कियत्तं यदि वेद वेदः ।
वृथोत्तरं साक्षिणि हस्त नृणामज्ञातृविज्ञापि ममापि तस्मिन् ॥

(१)'प्रतीपं द्विविधम्, उपमानस्य वैयर्थ्यकथनमुपमेयत्वकथनं च । तेन प्रतीपान्तर्गतोऽय'मिति काव्यप्रकाशः । अन्यत्र तु—

वस्तुतो वक्तुमिष्टस्य विशेषप्रतिपत्तये ।
निषेधाभासमाक्षेपं बुधाः केचन मन्वते ।

प्राधान्येन वक्तुमिष्टस्याशक्यवक्तव्यत्वातिप्रसिद्धत्वज्ञानफलको योऽवभासते निषेधः,

(१) इत आरभ्य 'काव्यप्रकाशः' इत्यन्तं नास्ति ख-पुस्तके ।

स आक्षेप इत्यर्थः । यथा—

द्वारि स्तम्भनिषण्णया मलिनया वक्रीकृतग्रीवया
नासाग्रागतबाष्पबिन्दुनिकरैः संसिच्यमानाङ्गया ।
मन्युस्तम्भितकण्ठगद्गदगिरा प्रोच्चारितार्धाक्षरं
सन्दिष्टं तव कान्तया पथिक हे ! वक्तुं न तत्पार्यते ॥

अत्र 'मरिष्यति'इत्यस्याशक्यवक्तव्यत्वम् । अयमुक्तविषयः । वक्ष्यमाणविषयः—

कथ्यते न कतमः स इति त्वं मां विवक्षुरसि किं चलदोष्ठः ।
अर्धवर्त्मनि क्वणसि न पृच्छां निर्गमेण न परिश्रमयैनाम् ।

अतिप्रसिद्धत्वज्ञानफलको यथा—

किं ब्रूमः शशिनो भाग्यं हरस्य शिरसि स्थितिः ।
अभाग्यमपि किं ब्रूमस्तत्राप्यपरिपूर्णता ॥

इति । यथा वा—

ब्रूमः किमस्य वरवर्णिनि ! वीरसेनो-
द्भूतिं द्विषद्दलविजित्वरपौरुषस्य ।
सेनाचरीभवदिभाननदानवारि-
वासेन यस्य जनिता सुरभी रणश्रीः ॥–॥ ७२ ॥

गूढाक्षेपालङ्कारमाह—

**गूढाक्षेपो विधौ व्यक्ते निषेधे चाऽस्फुटे सति ।**
**हर सीतां सुखं, किन्तु चिन्तयाऽन्तकढौकनम् ॥ ७३ ॥**

गूढाक्षेप इति । यत्र विधिर्निषेधो वा स्फुटो निषेधो विधिश्चास्फुटस्तत्र गूढाक्षेपः । हरेति रावणं प्रति मारीचोक्तिः । सुखमिति क्रियाविशेषणम् । किन्तु अन्तकस्य ढौकनं गतिं चिन्तय । 'ढौकृ गतौ'विति धातुः । 'अन्तकगतिं चिन्तये'त्यनेन मृत्युप्रदर्शनेन निषेधस्यास्फुटत्वाल्लक्ष्यत्वम् । आद्यं यथा—

गच्छ गच्छसि चेत्कान्त ! पन्थानः सन्तु ते शिवाः ।
ममापि जन्म तत्रैव भूयाद् यत्र गतो भवान् ॥

द्वितीयं यथा—

मार्गं मा गा मुरारेर्व्रजकुलजवधूमार्गवत्राभिवातं
तास्ताः साध्व्योऽपि वध्वः कति कति वनिता भ्रंशितास्तेन मार्गात् ।
मन्त्रं तन्त्रं न केषामपि न च मनुते तस्य वंशीनिनादः
संसारे हन्त ! तासां निपतति सलिलं याभिरालोकितोऽसौ ॥

व्यङ्ग्याक्षेपो यथा—

लोकाः स्तुवन्तु भुवि भूधरधारणेन
कर्माऽद्भुतं भगवता विहितं स्वयं यत् ।
लज्जामहे वयमतीव यदस्य भृत्यै-
राकाशवर्त्मनि धृता गिरयोऽतिकायाः ॥–॥ ७३ ॥

विरोधालङ्कारमाह—

**विरोधोऽनुपपत्तिश्चेद् गुणद्रव्यक्रियादिषु ।**
**अमन्दचन्दनस्यन्दः स्वच्छन्दं दन्दहीति माम् ॥ ७४ ॥**

विरोध इति । आदिना जातिः । गुणद्रव्यक्रियाजातीनां सम्बन्धानुपपत्तिकथने विरोधालङ्कारः । तत्र जातेर्गुणद्रव्यक्रियाजातिभिः, गुणस्य गुणद्रव्यक्रियाभिः, क्रियायाः क्रियाद्रव्याभ्यां, द्रव्यस्य द्रव्येणेति दश प्रकाराः । अमन्देति लक्ष्यम् । तत्रामन्दता गुणः, चन्दनत्वं जातिः, चन्दनं द्रव्यम् , स्यन्दः प्रस्रवणा क्रिया, तेषां दाहकत्वविरोधात् । इदं चतुर्णां क्रियाविरोध उदाहरणम् । यथा वा—

निन्दामि किं मलयचन्दनगन्धवाहं
किं वा सुधाकिरणधाम तिरस्करोमि ।
चूतः स्वहस्तसलिलैः परिषिञ्चितो(?)ऽयं
मां पापिनीं दहति हन्त ! नवाङ्कुरेण ॥

अथ द्रव्यस्य । गुणक्रिययोर्यथा—

मूर्त्या नाम्ना च कृष्णस्तदुपरि यमुनाकूलनीरे विहारः
किञ्च श्यामाभिराभिः कुवलयदलहग्वल्लवीभिः प्रसङ्गः ।
कुञ्जे ध्वान्तैकपुञ्जे तदपि विहरणं केशभूषा शिखण्डै-
स्तस्मादस्माकमन्तस्तिमिरततिहर्ति वक्ति वेदोऽपि चित्रम् ॥

एवमन्यान्यप्युदाहरणानि बोध्यानि ॥ ७४ ॥

विरोधाभासमाह—

**श्लेषादिभूर्विरोधश्चेद्विरोधाभासता मता ।**
**अप्यन्धकारिणा तेन जगदेतत्प्रकाश्यते ॥ ७५ ॥**

श्लेषादीति । श्लेषेण विरोधपरिहारफलकविरोधभाने विरोधाभास इत्यर्थः । अप्यन्धकारिणेति लक्ष्यम् । अत्रान्धकारवता जगत्प्रकाशनस्य विरुद्धत्वाद्विरोधभानम् । अन्धकरिपुत्वेन महादेवभाने तत्परिहारः । यथा वा—

प्रतीपभूपैरिव किं ततो भिया विरुद्धधर्मैरपि भेत्तृतोज्झिता ।
अमित्रजिन्मित्रजिदोजसा स यद् विचारदृक् चारदृगप्यवर्तत ॥

अत्र शब्देन विरोधपरिहारे विरोधाभासः, तदभावे शुद्धो विरोधालङ्कारः । काव्यप्रकाशदर्पणयोस्तु विरोधाभास एवोक्तो न विरोधालङ्कारः ॥ ७५ ॥

असम्भवालङ्कारमाह—

**असम्भवोऽर्थनिष्पत्तावसम्भाव्यत्ववर्णनम् ।**

**को वेद गोपशिशुकः शैलमुत्पाटयिष्यति ॥ ७६ ॥**

**असम्भव इति ।** अर्थनिष्पत्तौ सत्यां तस्या असम्भावितत्वेन कथनेऽसम्भवालङ्कारः । को वेदेति लक्ष्यम् । यथा वा—

कमठपृष्ठकठोरमिदं धनुर्ललितमूर्तिरसौ रघुनन्दनः ।
कथमधिज्यमनेन विधीयतामहह ! तात ! पणस्तव दारुणः (१) ॥

यथा वा—

उल्लासयतां स्पृष्टनलाङ्कमङ्गं तासां नलच्छायपिबाऽपि दृष्टिः ।
अक्षमैव रत्यास्तदनति पत्या छेदेऽप्यबोधं यदहर्षि लोम ॥–॥ ७६ ॥

विभावनालङ्कारमाह—

**विभावना विनापि स्यात्कारणं कार्यजन्म चेत् ।**

**पश्य लाक्षारसाऽसिक्तं रक्तं त्वच्चरणद्वयम् ॥ ७७ ॥**

**विभावनेति ।** कारणेन विना कार्योत्पत्तिकथने विभावनालङ्कारः । लाक्षारसेन असिक्तमिति समासः । लक्षारससेकरूपकारणं विनैव रक्तत्वरूपकार्यकथनम् । यथा वा—

अस्माकं सखि ! वाससी न रुचिरे ग्रैवेयकं नोज्ज्वलं
नो वक्रा गतिरुद्धतं न हसितं नैवास्ति कश्चिन्मदः ।
किन्त्वन्येऽपि जना वदन्ति 'सुभगोऽप्यस्याः प्रियो नान्यतो
दृष्टिं निक्षिपती'ति विश्वमियता मन्यामहे दुःस्थितम् ॥

अन्यत्र–'हेतूनामसमग्रत्वे कार्योत्पत्तिश्च सा मता ।' इयं विशेषोक्तिरिति दण्डी । 'कार्योत्पत्तिस्तृतीया स्यात्सत्यपि प्रतिबन्धके ।' यथा—

धनिनोऽपि निरुन्मादा युवानोऽपि न चञ्चलाः ।
प्रभवोऽप्यप्रमत्तास्ते कियन्तः सन्ति भूतले ॥

यथा वा—

तमोमयीकृत्य दिशः परागैः स्मरेषवः शक्रदृशां दिशन्ति ।
कुहूगिरश्चञ्चुपुटं द्विजस्य राकारजन्यामपि सत्यवाचम् ॥

अत्र राकारजनिः प्रतिबन्धिका । 'अकारणात्कार्यजन्म चतुर्थी स्याद्विभावना ।' यथा—शङ्खाद्वीणानिनादोऽयमुदेति महदद्भुतम् । 'विरुद्धात्कार्यसम्पत्तिर्दृष्टा काचिद्

(१) पद्यमिदं ख-पुस्तके नास्ति ।

विभावना ।' यथा—

उदयति स्म तदद्भुतमालिभिर्धरणिभृद्भुवि तत्र विसृज्य यत् ।
अनुमितोऽपि च बाष्पनिरीक्षणाद् व्यभिचचार न तापकरोनलः ॥

'कार्यात्कारणजन्मापि दृष्टा काचिद्विभावना ।' यथा—

जाता लता हि शैले जातु लतायां न जायते शैलः ।
सम्प्रति तद्विपरीतं कनकलतायां गिरिद्वयं जातम् ॥

काव्यप्रकाशे त्वेतेषामतिशयोक्तिमध्येऽन्तर्भावः कृतः ॥ ७७ ॥

विशेषोक्त्यलङ्कारमाह—

**विशेषोक्तिरनुत्पत्तिः कार्यस्य सति कारणे ।**
**नमन्तमपि धीमन्तं न लङ्घयति कश्चन ॥ ७८ ॥**

विशेषोक्तिरिति । कारणे सति कार्यानुत्पत्तिकथनं विशेषाक्त्यलङ्कारः । नमन्तमिति लक्ष्यम् । नमनरूपकारणे सत्यपि लङ्घनरूपकार्याभावः । इयम् उक्तहेतुरनुक्तहेतुरचिन्त्यहेतुश्चेति त्रिधा । अनुक्तहेतुर्मूले चोदाहृता । उक्तहेतुर्यथा--

न श्वेततां चरतु वा भुवनेषु राज-
हंसस्य च प्रियतमा कथमस्य कीर्तिः ।
चित्रं तु यद् विशदिमाऽद्वयमादिशन्ती
क्षीरं च नाम्बु च मिथः पृथगातनोति ॥

अचिन्त्यहेतुर्यथा—

निपततापि न मन्दरभूभृता त्वमुदधौ शशलाञ्छन ! चूर्णितः ।
अपि मुनेर्जठरार्चिषि जीर्णतां बत ! गतोऽसि न पीतपयोनिधेः ॥

यत्तु दर्पणे—'विभावनाविशेषोक्त्योः शुद्धोदाहरणं मृग्य'मित्युक्तम्, तच्चिन्त्यम् ७८

असङ्गत्यलङ्कारमाह—

**आख्याते भिन्नदेशत्वे कार्यहेत्वोरसङ्गतिः ।**
**त्वद्भक्तानां नमत्यङ्गं भङ्गमेति भवक्रमः ॥ ७९ ॥**

आख्यात इति । कार्यकारणयोर्भिन्नदेशत्वकथनमसङ्गत्यलङ्कारः । नमनाऽधिष्ठानस्य अङ्गौचित्यात्संसारश्रमनिष्ठभङ्गस्य व्यधिकरणत्वात् । यथा वा—

गर्जति वारिदपटले वर्षति नयनारविन्दमबलायाः ।
भुजवल्लिमूलसेको विरहलतापल्लवं सूते ॥

अन्यत्र तु—

'अन्यत्र करणीयस्य ततोऽन्यत्र कृतिश्च सा ।
अन्यत्कर्तुं प्रवृत्तस्य तद्विरुद्धकृतिस्तथा ॥'

असङ्गत्यलङ्कार इति शेषः । उभयमपि यथा—

हृदि विदर्भभुवः प्रहरन् शरै रतिपतिर्निषधाधिपतेः कृते ।
कृततदन्तरगस्वदृढव्यथः फलदनीतिरमूर्छदलं खलु ॥-॥ ७९ ॥

विषमालङ्कारमाह—

**विषमं यद्यनौचित्यादनेकान्वयकल्पनम् ।**
**क्वाऽतितीव्रविषाः सर्पाः क्वासौ चन्दनभूरुहः ॥ ८० ॥**

विषममिति । अननुरूपयोः सम्बन्धकथनं विषमम् । यथा भुजगचन्दनयोः । यथा वा—

कथं विधातर्मयि पाणिपङ्कजात्तव प्रियाशत्यमृदुत्वशिल्पिनः ।
'वियोक्ष्यसे वल्लभये'ति निर्गता लिपिर्ललाटंतपनिष्ठुराऽक्षरा ॥

अन्यत्र तु—'विरूपकार्यस्योत्पत्तिरपरं विषमं मतम् ।' यथा—

आश्चर्यमस्य ककुभामवधीनवाप-
दाजानुगाङ्गुजयुगादुदितः प्रतापः ।
व्यापत्सदाशयविसारितसप्ततन्तु-
जन्मा चतुर्दश जगन्ति यशःपटश्च ॥

'अनिष्टस्याऽप्यवाप्तिश्च तदिष्टार्थसमुद्यमात् ।' इष्टप्राप्त्यर्थमनिष्टपरिहारार्थं वा प्रवृत्तस्यानिष्टप्राप्तिरित्यर्थः । यथा—

अयं क्षाराम्भोधेः पतिरिति गवां पालक इति
श्रितोऽस्माभिः क्षीरोपनयनधिया नन्दतनयः ।
अनेन प्रत्यूहो व्यरचि स तथा, येन जननी-
स्तनादप्यस्माकं पुनरपि पयो दुर्लभमभूत् ॥

अनिष्टपरिहारार्थमुद्यतस्याऽनिष्टप्राप्तिरूपं यथा—

रविविरमितप्तदेहः सरसि गतो गजपतिस्तरसा ।
पङ्के तथा निमग्नो वंशोऽपि यथा न दृश्यते तस्य ॥-॥ ८० ॥

समालङ्कारमाह—

**सममौचित्यतोऽनेकवस्तुसम्बन्धवर्णनम् ।**
**अनुरूपं कृतं सद्म हारेण कुचमण्डलम् ॥ ८१ ॥**

सममिति । उचितसम्बन्धवस्तुद्वयकथने समालङ्कारः । उचितत्वं च परस्परशोभाजनकत्वम् । हारकुचयोः शोभासम्बन्धस्योचितत्वात् । तेन विषमप्रतिपक्षं सममिति सिद्धम् । इदञ्च अननुरूपसम्बन्धरूपविषमप्रतिपक्षम् । 'सारूप्यमपि कार्यस्य कारणेन समं विदुः ।' इदं द्वितीयविषमप्रतिपक्षम् । यथा—

सितांशुवर्णैर्वयति स्म तद्गुणैर्महासिवेम्नः सहकृत्वरी बहुम् ।
दिगङ्गनाङ्गावरणं रणाङ्गणे यशःपटं तद्भटचातुरी तुरी ॥

विनाऽनिष्टं च तत्सिद्धिर्यदर्थं कृत उद्यमः ।
या लताऽन्विष्यते सैव लग्ना सम्प्रति पादयोः ॥

अनिष्टं स्वस्य परस्य च । इदं तृतीयविषमप्रतिपक्षम् ॥ ८१ ॥

विचित्रालङ्कारमाह—

**विचित्रं चेत्प्रयत्नः स्याद्विपरीतफलप्रदः ।**
**नमन्ति सन्तस्त्रैलोक्यादपि लब्धुं समुन्नतिम् ॥ ८२ ॥**

विचित्रमिति । (१) विपरीतफलहेतुप्रयत्नवर्णने विचित्रालङ्कारः । अत्र फलम् इष्टरूपं बोध्यम् । तेन न तृतीयविषमान्तर्गतिः । यथा नमनस्योन्नतिहेतुत्वम् ॥ ८२ ॥

अधिकालङ्कारमाह—

**अधिकं बोध्यमाधारादाधेयाधिक्यवर्णनम् ।**
**यया व्याप्तं जगत्तस्यां वाचि मान्ति न ते गुणाः ॥ ८३ ॥**

अधिकमिति । महान्तमाधारमुपक्रम्य तदपेक्षया आधेयाधिक्यवर्णनेऽधिकाऽलङ्कारः । वागूरूपाधारापेक्षया गुणरूपाधेयाधिक्यकथनात् । आधिक्यं परिमाणेन सङ्ख्यया च । यथा वा—

आस्ते दामोदरीयामियमुदरदरीं याऽवलम्ब्य त्रिलोकी
संमातुं शक्तिमन्ति प्रथिमभरवशादत्र नैतद्यशांसि ।
तामेतां पूरयित्वा निरगुरिव मधुध्वंसिनः पुण्डरीक-
च्छद्मापन्नानि तानि द्विपदशनसनाभीनि नाभीपथेन ॥

यथा वा—

एतत्पुरःपठदपश्रमबन्दिवृन्द-
वाग्डम्बरैरनवकाशतरेऽम्बरेऽस्मिन् ।
उत्पत्तुमस्ति पदमेव न तत्पदाना-
मर्थोऽपि नार्थपुनरुक्तिषु पातुकानाम् ॥

अन्यत्र तु—'पृथ्वाधेयाद् यदाधाराधिक्यं तदपि तन्मतम् ।' यथा—

किमधिकमस्य वदामो महिमानं वारिधेर्हरिर्यत्र ।
अज्ञात एव शेते कुक्षौ भुवनानि निक्षिप्य ॥

अल्पालङ्कारोऽप्यन्यत्र—'अल्पं तु सूक्ष्मादाधाराद् यदाधेयस्य सूक्ष्मता ।' यथा—

यत्पथावधिरणुः परमः सा योगिधीरपि न पश्यति यस्मात् ।
बालया निजमनःपरमाणौ ह्रीदरीशयहरीकृतमेनम् ॥—॥ ८३ ॥

(१) इत आरभ्य '०विषमान्तर्गतिः' इत्यन्तं नास्ति ख–पुस्तके ।

अन्योन्यालङ्कारमाह—

**अन्योन्यं नाम यत्र स्यादुपकारः परस्परम् ।**
**त्रियामा शशिना भाति शशी भाति त्रियामया ॥ ८४ ॥**

अन्यान्यमिति । प्रसिद्धपरस्परोपकारकथने अन्योन्यालङ्कारः । चन्द्रनिशयोः परस्परशोभाजनकत्वात् । यथा वा—

नलेन भायाः शशिना निशेव त्वया स भायान्निशया शशीव ।
पुनः पुनस्तद्युगयुग् विधाता योग्यामुपास्ते नु युवां युयुक्षुः ॥–॥ ८४ ॥

विशेषालङ्कारमाह—

**विशेषः ख्यातमाधारं विनाप्याधेयवर्णनम् ।**
**गतेऽपि सूर्ये दीपस्थास्तमश्छिन्दन्ति तत्कराः ॥ ८५ ॥**

विशेष इति । प्रसिद्धाधारं विना आधेयवर्णने विशेषालङ्कारः । अत्र सूर्यं विना तत्किरणवर्णनम् । यथा वा—

रोमावलीभ्रूकुसुमैः स्वमौर्वीचापेषुभिर्मध्यललाटमूर्ध्नि ।
व्यस्तैरपि स्थास्नुभिरेतदीयैर्जैत्रः स चित्रं रतिजानिवीरः ॥

अन्यत्र तु––

'विशेषः सोऽपि यद्येकं वस्त्वनेकत्र वर्ण्यते ।
किञ्चिदारम्भतोऽशक्यवस्त्वन्तरकृतिश्च सः ॥'

यथा––

त्वं हृद्गता भैमि ! बहिर्गतापि प्राणायिता नासिकयास्यगत्या ।
न चित्तमाक्रामति तत्र चित्रमेतन्मनो यद्भवदेकवृत्ति ॥

तथा,

विभिन्दता दुष्कृतिनीं मम श्रुतिं दिगिन्द्रदुर्वाचिकसूचिसञ्चयैः ।
प्रयातजीवामिव मां प्रति स्फुटं कृतं त्वयाऽप्यन्तकदूततोचितम् ॥–॥८५॥

व्याघातालङ्कारमाह––

**स्याद् व्याघातोऽयथाकारि वस्त्वन्यक्रियमुच्यते ।**
**यैर्जगत्प्रीयते हन्ति तैरेव कुसुमायुधः ॥ ८६ ॥**

स्यादिति । अन्यजनकत्वेन लोकप्रसिद्धस्य विरुद्धकार्यजनकत्वकथने व्याघाताऽलङ्कार इत्यर्थः । प्रीतिजननसमर्थैः कुसुमैर्मारणक्रियावर्णनम् । अन्यत्र तु––

'यद् यथा साधितं केनाप्यपरेण तदन्यथा ।
तथैव तद्विधीयेत स व्याघात इति स्मृतः ॥'

यथा—

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः
विरूपाक्षस्य जयिनीस्ताः स्तुमो वामलोचनाः ॥

'सौकर्येण निबद्धापि क्रिया कार्यविरोधिनी ।' कार्यनिष्पादकत्वेन सम्भाव्यमान-विरोधित्वेन सम्भावनमपि व्याघात इत्यर्थः । यथा—

हृदय एव तवास्ति स वल्लभस्तदपि किं दमयन्ति ! विषीदसि ।
हृदि परं न बहिः खलु वर्तते सखि ! यतस्तत एव विषद्यते ॥–॥८६॥

कारणमालालङ्कारमाह—

**गुम्फः कारणमाला स्याद् यथाप्राक्प्रान्तकारणैः ।**
**नयेन श्रीः श्रिया त्यागस्त्यागेन विपुलं यशः ॥ ८७ ॥**

गुम्फ इति । उत्तरोत्तरकारणभूतपूर्वपूर्वैः पूर्वपूर्वकारणभूतोत्तरोत्तरैर्वा वस्तुभिः कृतो गुम्फः कारणमालेत्यर्थः । नयेनेति । नयश्रीत्यागयशसामुत्तरोत्तरकारणत्वात्॥८७॥

एकावल्यलङ्कारमाह—

**गृहीतमुक्तरीत्यर्थश्रेणिरेकावली मता ।**
**नेत्रे कर्णान्तविश्रान्ते कर्णौ दोर्मूलदोलिनौ ॥ ८८ ॥**

गृहीतेति । गृहीता च मुक्ता च रीतिर्विशेष्यत्वं विशेषणत्वं च येषामर्थानां तेषां श्रेणिः पङ्क्तिः, तत्कथने एकावल्यलङ्कार इत्यर्थः । नेत्रे इति लक्ष्यम् । तत्र विशेषण-त्वेन गृहीतयोः कर्णयोर्विशेषणत्वत्यागेन विशेष्यत्वोक्तेः । यथा वा—

सरो विकसिताम्भोजमम्भोजं भृङ्गसङ्गतम् ।
भृङ्गा यत्र ससङ्गीताः सङ्गीतं सस्मरोदयम् ॥

विशेष्यस्य विशेषणत्वेऽप्ययमेवालङ्कारः । यथा—

वाप्यो भवन्ति विमलाः स्फुटन्ति कमलानि वापीषु ।
कमलेषु पतन्त्यलयः करोति सङ्गीतमलिषु सुखम् ॥

अयं व्यतिरेकेणापि । यथा—

न तज्जलं यन्न सुचारुपङ्कजं न पङ्कजं तद् यदलीनषट्पदम् ।
न षट्पदोऽसौ न जुगुञ्ज यः कलं न गुञ्जितं तन्न जहार यन्मनः ॥–॥८८॥

मालादीपकालङ्कारमाह—

**दीपकैकावलीयोगान्मालादीपकमिष्यते ।**
**स्मरेण हृदये तस्यास्तेन त्वयि कृता स्थितिः ॥ ८९ ॥**

दीपकेति । उक्तदीपकालङ्कारस्य एकावल्यलङ्कारयोगे मालादीपकं भवतीत्यर्थः । स्मरेणेति लक्ष्यम् । तेन हृदयेनेत्यर्थः एवञ्च-एकक्रियायोगेन पूर्वपूर्वस्योत्तरोत्तरगुणत्वे मालादीपकमिति भावः । यथा वा—

त्वयि सङ्गरसम्प्राप्ते धनुषाऽऽसादिताः शराः ।
शरैररिशिरस्तेन भूस्तया त्वं त्वया यशः ॥–॥ ८९ ॥

सारालङ्कारमाह—

**सारो नाम पदोत्कर्षः सारताया यथोत्तरम् ।**
**सारं सारस्वतं तत्र काव्यं तत्र शिवस्तवः ॥ ९० ॥**

सार इति । नाम त्वर्थं । सारालङ्कारस्तु सारताया यथोत्तरं पदोत्कर्षः अत्यन्तो-त्कर्ष (१) *इत्यक्षरार्थः । सारमिति । संसार इति शेषः । सारस्वतं वाङ्मयम् । यथोत्तरमुत्कर्ष*कथने सारालङ्कार इति भावः । सारस्वतकाव्यशिवस्तवानां यथोत्तर-मुत्कर्षकथनात् । यथा वा—

लोकस्रजि द्यौर्दिवि चादितेया अप्यादितेयेषु महान्महेन्द्रः ।
किङ्कर्तुमर्थी यदि सोऽपि रागात्, जागर्ति कक्षा किमतः पराऽपि ॥

यथा वा—

त्वल्लीलोन्मीलितेऽस्मिञ्जगति चरमिदं सारमत्रापि मर्त्य-
स्तत्र त्रैवर्णिकोऽभूदपि धरणिधरस्तत्र वेदप्रवीणः ।
तत्राऽप्यभ्यस्तशास्त्रस्तदपि च सुनिजाचारचातुर्यचुञ्चु-
स्तत्रापि श्रीपते ! त्वत्पदभजनपरस्तत्परं नैव किञ्चित् ॥

अयं च श्लाघ्यगुणोत्कर्षकथनेन अश्लाघ्यगुणोत्कर्षकथनेन च द्विविधो बोध्यः । द्वितीयो यथा—

पृथ्वी तावत् त्रिकोणा नगनगरवनग्राममृद्धं तदध
तत्राप्यर्धं युवत्यः शिशुगतवयसा दूषितं तस्य चार्धम् ।
तत्र त्याज्यैः स्वपुत्रश्वशुरगुरुजनैर्दूषितं तस्य चार्धं
मिथ्यावादोऽङ्गनानां मुखरमुखरवः पुंश्चली पुंश्चलीति ॥–॥ ९० ॥

उदारसारालङ्कारमाह—

**उदारसारश्चेद्भाति भिन्नोऽभिन्नतया गुणः ।**
**मधुरं मधु पीयूषं तस्मात् तस्मात्कवेर्वचः ॥ ९१ ॥**

उदारेति । उत्कर्षाधायकोत्तरोत्तरगुणस्य भिन्नस्याप्यभेदप्रत्यायकशब्दसमभि-व्याहारे उदारसारालङ्कारः । मधुरमिति लक्ष्यम् । अत्र मध्वपेक्षया काव्यनिष्ठमाधुर्य-मधिकं कथ्यमानं रसनाग्राह्यश्रोत्रग्राह्यत्वेन वस्तुतो भिन्नमपि मधुरशब्दमहिम्नैकमेव भासते ॥ ९१ ॥

यथासङ्ख्यालङ्कारमाह—

**यथासङ्ख्यं द्विधार्थाश्चेत् क्रमादेकैकमन्विताः ।**
**शत्रुं मित्रं द्विषत्पक्षं जय रञ्जय तर्जय ॥ ९२ ॥**

(१) चिह्नान्तर्गतं ख-पुस्तके न विद्यते ।

यथासङ्ख्यमिति । द्विधार्थाश्चेत् क्रमादेकैकमन्विताः, अर्थाः क्रियाकारकरूपाः द्विविधा अर्थाः इत्यर्थः । तेन कारकाणां क्रियाणां वा क्रमेण कारकेषु क्रियासु वाऽन्वये यथासङ्ख्यालङ्कारः । शत्रुमिति लक्ष्यम् । शत्रुमित्रद्विषत्पक्षाणां जयादिषु यथासङ्ख्येनाऽन्वयात् । यथा वा—

सानन्दं तनुजाविवाहनमहे भीमः स भूमीपति-
वैदर्भीनिषधेश्वरौ नृपजनाऽनिष्टोक्तिनिर्मुक्तये ।
स्वानि स्वानि धराधिपाश्च शिबिराण्युद्दिश्य यान्तः क्रमा-
देको द्वौ बहवश्चकार सृजतः स्मातेनिरे मङ्गलम् ॥

अन्यत्र तु—'यथासङ्ख्यमनूद्देश उद्दिष्टानां क्रमेण यत् ।' यथा वा—

उन्मीलन्ति नखैर्लुनीहि, वहति स्वीयाञ्चलेनावृणु
क्रीडाकाननमाविशन्ति वलयक्वाणैः समुत्त्रासय ।
इत्थं वञ्जुलदक्षिणानिलकुहूकण्ठीषु साङ्केतिक-
व्याहाराः सुभग ! त्वदीयविरहे तस्याः सखीनां मिथः(१)॥–॥९२॥

पर्यायालङ्कारमाह—

**पर्यायश्चेदनेकत्र स्यादेकस्य समन्वयः ।**
**पद्मं मुक्त्वा गता चन्द्रं कामिनीवदनोपमा ॥ ९३ ॥**

पर्याय इति । अत्रापि क्रमेणेत्यनुषज्यते । तेन विशेषालङ्कारव्यावृत्तिः । अनेकत्र क्रमेणैकान्वये पर्यायालङ्कारः । पद्ममिति लक्ष्यम् । पद्मचन्द्रयोः क्रमेणोपमाया आधारत्वेनान्वयात् । यथा वा—

हित्वा दैत्यरिपोरुरः स्वभवनं शून्यत्वदोषस्फुटा-
सीदन्मर्कटकीटकृत्रिमसततच्छत्रीभवत्कौस्तुभम् ।
उज्झित्वा निजसद्म पद्ममपि तद् व्यक्तावनद्धीकृतं
लूतातन्तुभिरन्तरद्य भुजयोः श्रीरस्य विश्राम्यति ॥

यथा वा—

प्रतिप्रतीकं प्रथमं प्रियायामथान्तरानन्दसुधासमुद्रे ।
ततः प्रमोदाश्रुपरम्परायां ममज्जतुस्तस्य दृशौ नृपस्य (२) ॥

अन्यत्र तु—'एकस्मिन्नप्यनेकं वा पर्यायः सोऽपि संमतः ।' यथा—

---

(१) पद्येऽस्मिन्पूर्वार्धे 'वञ्जुला ( वेतसा अशोका वा ) उन्मीलन्ति, मलयानिलो वहति, कुहूकण्ठ्यः ( कोकिलाः ) क्रीडाकाननं विशन्ती'त्यर्थयोजना ।

(२) एतत्पद्यादनन्तरञ्च—''मुखे हारावाप्तिर्नयनयुगले कङ्कणभरा नितम्बे पत्राली सतिलकमभूत्पाणिकमलम् । इत्यादावपि श्लेषेण ।'' इत्येतावदधिकं वर्तते क–पुस्तके ।

विचरन्ति विलासिन्यो यत्र श्रोणिभरालसाः ।
वृककाकशिवास्तत्र धावन्त्यरिपुरे तव ॥

अयं च सङ्कोचपर्यायो विकासपर्यायश्चेति । यथा—

जगदाश्लिष्य समन्तात् ततोऽपि गगने विलम्ब्यायं ।
आसाद्य वारुणीमयमधुना शीतांशुरापतति ॥

यथा वा—

प्रौढप्रत्यर्थिपृथ्वीपतिनृपपृतनापाटनप्रौढशस्त्रं
प्रागासीच्चन्द्रबिम्बानुकृति नरपते ! युद्धकाले यशस्ते ।
पश्चादेतत् क्षणेन प्रसृमरमधुना दृश्यते क्ष्मातलेऽस्मिन्
पाताले‌ऽब्धौ विशाले दिशि दिशि गगने किञ्च लोकत्रयेऽपि ॥

यथा वा—

भङ्गाऽकीर्तिमषीमलीमसतमप्रत्यर्थिसेनाभट-
श्रेणीतिन्दुककाननेषु विलसत्यस्य प्रतापानलः ।
तस्मादुत्पतिताः स्फुरन्ति जगतुत्सङ्गे स्फुलिङ्गाः स्फुटं
भास्वोद्भूतभवाऽऽक्षभानुहुतभुग्जम्भारिदम्भोलयः ॥—॥ ९३ ॥

परिवृत्त्यलङ्कारमाह—

**परिवृत्तिर्विनिमयो न्यूनाभ्यधिकयोर्मिथः ।**
**जग्राहैकं शरं मुक्त्वा कटाक्षान् शत्रुयोषितः ॥ ९४ ॥**

परिवृत्तिरिति । न्यूनेनाधिकग्रहणकथने अधिकेन न्यूनग्रहणकथने परिवृत्त्य-लङ्कारः । इदमुपलक्षणं समेन समग्रहणकथनस्यापि । 'जग्राहे'ति न्यूनेनाधिकग्रहणो-दाहरणम् । यथा वा—

पदं शतेनाप मखैर्यदिन्द्रस्तस्मै स ते याचनचाटुकारः ।
कुरु प्रसादं तदलङ्कुरुष्व स्वीकारकृद्भ्रूनटनश्रमेण ॥

समन्यूनोदाहरणं यथा—

दत्त्वा कटाक्षमेणाक्षी जग्राह हृदयं मम ।
मया तु हृदयं दत्त्वा गृहीतो मदनज्वरः ॥

अत्र पूर्वार्धे समेन समम्, उत्तरार्धेऽधिकेन न्यूनम् । अयं व्यतिरेकमुखोऽपि । यथा—

वराटिकोपक्रिययापि लभ्यान्नेभ्याः कृतज्ञानथवाद्रियन्ते ।
प्राणैः पणैः स्वं निपुणं भणन्तः क्रीणन्ति तानेव तु हन्त ! सन्तः ॥

अत्र पूर्वार्धे निषेधमुखेन अल्पेनाधिकग्रहणकथनात् । उत्तरार्धे समेन । विनिमय इति व्यत्ययस्याप्युपलक्षणम् । प्रामादिकग्रहणं व्यत्ययः । बुद्धिपूर्वग्रहणं विनिमयः । तेन,

लोचनाधरकृताऽऽहृतरागा वासिताननविशेषितगन्धा ।
वारुणी परगुणात्मगुणानां व्यत्ययं विनिमयं नु वितेने ॥
इत्यादौ परिवृत्तिगर्भः सन्देहालङ्कारः ॥ ९४ ॥

परिसङ्ख्यालङ्कारमाह—

**परिसङ्ख्या निषिध्यैकमन्यस्मिन्वस्तुयन्त्रणम् ।**
**स्नेहस्त्वयं प्रदीपेषु न, स्वान्तेषु नतभ्रुवाम् ॥ ९५ ॥**

परिसङ्ख्येति । एकत्राभावकथनपूर्वमन्यत्र वस्तुनियन्त्रणे परिसङ्ख्येत्यर्थः । स्नेहस्य प्रदीपेषु निषेधपूर्वकं कान्ताचित्ते व्यवस्थापनात् । 'स्नेहक्षय' इति वा पाठः । तत्र स्वान्ते निषेधः । यथा वा—

दहनजा न पृथुर्दवथुव्यथा विरहजेव पृथुर्यदि नेदृशम् ।
दहनमाशु विशन्ति कथं स्त्रियः प्रियमपासुमुपासितुमुद्धुराः ॥

इयं च–प्रश्नपूर्विका तदपूर्विका च, अन्यनिषेधोऽपि शाब्द आर्थश्चेति चतुर्धा परिसङ्ख्या । अप्रश्नपूर्विका शाब्दनिषेधा पूर्वमुक्ता । यथा वा—

याचमानजनमानसवृत्तेः पूरणाय बत ! जन्म न यस्य ।
तेन भूमिरतिभारवतीयं न द्रुमैर्न गिरिभिर्न समुद्रैः ॥

प्रश्नपूर्विका आर्थनिषेधा यथा—

किमासेव्यं सदा पुण्यं कः सेव्यः सत्समागमः ।
को ध्येयो भगवान् विष्णुः किं कार्यं परमं तपः ॥

अप्रश्नपूर्विका आर्थनिषेधा यथा—

अस्यासिर्भुजगः स्वकोशविवराकृष्टः स्फुरत्कुण्डिमा
कल्पोन्मीलदरालकीलवलनस्तेषां भिये भूभुजाम् ।
सङ्ग्रामेषु निजाङ्गुलीमयमहासिद्धौषधीवीरुधः
पर्वास्ये विनिवेश्य जाङ्गुलिकता यैर्नाम नालम्बिता ॥

'अन्येषां नेत्यार्थो निषेधः । प्रश्नपूर्विका शाब्दनिषेधा यथा—

किं भूषणं सुदृढमत्र यशो न रत्नं, किं कार्यमार्यचरितं सुकृतं न दोषः ।
किं चक्षुरप्रतिहतं धिषणा न नेत्रं, जानाति कस्त्वदपरः सदसद्विवेकम् ॥

यत्तु—

"अनेकगुणसम्प्राप्तावे(कस्मिन्ने)कबाधने ।
आर्थी विधिर्निषेधश्चेत् परिसङ्ख्या च सा परा ॥

आर्थी विधिर्निषेधश्चेति वारद्वयं सम्बध्यते । तेनेदं परिसङ्ख्याद्वयम् । आद्या यथा—

प्रियास्ते बभूवुर्भुजङ्गः कलङ्की पशुर्निम्नगा किञ्च नक्तञ्चरेन्द्रः ।
गुणेष्वेषु विश्वेश ! नूनं किमूनं मयि स्वामिनो यत्कृपाया विलम्बः ॥

द्वितीया यथा—

केयूरः क्व क्वचन तिलकं क्वाऽङ्गदं क्वैव मुक्ता-
हारः कण्ठश्लिथिलिरपि तथा कङ्कणं क्वैव काञ्ची ।
मञ्जीरोऽन्यः प्रणयकुपितप्रेयसीप्रेमशंसी
को वा कुर्यात्पुलकमुकुलाऽलङ्कृतां यस्त्वयष्टिम् ॥

अत्रोभयत्रार्थे विधिर्निषेधश्चेत्'ति ब्रूमः ॥ ९५ ॥

विकल्पालङ्कारमाह—

**विकल्पस्तुल्यबलयोर्विरोधश्चातुरीयुतः ।**
**कान्त ! चित्तेऽधरे वापि कुरु त्वं वीतरागताम् ॥ ९६ ॥**

विकल्प इति । विरुद्धकार्यद्वयव्यञ्जकस्य युगपत्कर्तुमशक्यस्य कार्यद्वयस्य कथने विकल्पालङ्कारः । कान्तेति खण्डितोक्तिः । चित्ते मय्यनुरागस्य, अधरेऽन्यन्य-दन्तक्षतेश्च युगपन्निषेधोक्त्या नायिकयोर्युगपदनुरागासम्भवव्यञ्जनात् । यथा वा—

आराधि वदनपङ्क्त्या यथा पिनाकी क्षमाचरस्वामिन् ! ।
त्यज तामान्वीतां वा श्रोत्रहबन्धोः कुलवधूटीम् ॥

यथा वा—

युद्ध्वा वाभिमुखं रणस्य चरणस्यैवादसीयस्य वा
बुद्ध्वाऽन्तः स्वपरान्तरं निपततामुन्मुच्य बाणावलीः ।
छिन्नं वाऽवनतीभवन्निजभियः छिन्नं भरेणाथवा
राज्ञाऽनेन हठाद्विलोठितमभूद् भूमावरीणां शिरः ॥ —॥९६ ॥

समुच्चयालङ्कारमाह—

**भूयसापेक्षसम्बन्धभाजां गुम्फः समुच्चयः ।**
**नश्यन्ति पश्चात्पश्यन्ति भ्रश्यन्ति च तव द्विषः ॥ ९७ ॥**

भूयसामिति । अनेकक्रियाणामनेकेषां वा गुणानामनेकेषां वा कारकाणां योगः समुच्चयालङ्कारः । नाशदर्शनभ्रंशानां यत्रावुक्तेर्लक्ष्यत्वम् । यथा वा—

तेषु तद्विधवधूवरणार्हं भूषणं स समयः स रथाश्वा ।
तस्य कुण्डिनपुरं प्रतिसर्पन् भूपतेर्व्यवसितानि शशंसुः ॥

अत्र भूषणादीनामेकक्रियान्वयः । अत्र व्यधिकरणत्वं सामानाधिकरण्यं च न विवक्षणीयम् । तेन,

पथि पथि सहकाराः कोरकाली विचित्रा
दिशि दिशि पवमानो वीरुधां लासकश्च ।
नरि नरि किरति द्राक् सायकान् पुष्पधन्वा
पुरि पुरि च निवृत्ता मानिनीमानचर्चा ॥

इत्यादौ समुच्चयः । अत्र योगस्त्रिधा । सद्योगः असद्योगः सदसद्योगश्चेति । तत्र सद्योगो मूले उक्तः । असद्योगो द्वितीयोदाहरणे । सदसद्योगो यथा—

शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ।
प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥

अत्र शशिप्रभृतीनां शोभनत्वं खलस्याऽशोभनत्वमिति सदसद्योगः । यद्वा शशिप्रभृतीनां स्वतः शोभनत्वं धूसरत्वादीनां त्वशोभनत्वमिति । 'अहंप्रथमिकाभाजामेककार्यान्वयेऽपि सः ।' समुच्चय इत्यर्थः ॥ ९७ ॥

समाध्यलङ्कारमाह—

**समाधिः कार्यसौकर्यं कारणान्तरसन्निधेः ।**
**उत्कण्ठितां च कलयन् जगामाऽस्तं च भानुमान् ॥ ९८ ॥**

समाधिरिति । कार्योत्पत्तिक्षमकारणसत्त्वेऽप्यविलम्बेन कार्योत्पादककारणान्तरकथने समाधिः । तेन समुच्चयाद्भेदः । उत्कण्ठारूपकारणसत्त्वेऽपि सूर्यास्तकथनात् ।

प्रत्यनीकालङ्कारमाह—

**प्रत्यनीकं बलवतः शत्रोः पक्षे पराक्रमः ।**
**जैत्रनेत्रानुगौ कर्णावुत्पलाभ्यामधः कृतौ ॥ ९९ ॥**

प्रत्यनीकमिति । शत्रुपराभवाऽक्षमेण शत्रुसम्बद्धपराभववर्णने प्रत्यनीकालङ्कारः । नेत्रजयाबाधकमलैर्नेत्रानुगकर्णपराभवकथनात् । यथा वा—

जितस्त्वदास्येन विधु स्मरः श्रिया कृतप्रतिज्ञौ मम तौ वधे कुतः ।
तवेति मत्वा यदि तज्जितं मया न मोचसङ्कल्पधराः किलाऽमराः ॥

वयं तु-"शत्रुपक्षीयेण शत्रुपक्षीयस्यानिष्टकरणेऽपि प्रत्यनीकालङ्कारः । यथा—

हृद् तस्य यन्मन्त्रयते रहस्त्वां तद् व्यक्तमामन्त्रयते मुखं यत् ।
तद्वैरिपुष्पायुधमित्रचन्द्रसख्यौचिती सा खलु तन्मुखस्य ॥"—॥ ९९ ॥

प्रतीपालङ्कारमाह—

**प्रतीपमुपमानस्य हीनत्वमुपमेयतः ।**
**दृष्टं चेद् वदनं तस्याः किं पद्मेन किमिन्दुना ॥ १०० ॥**

प्रतीपमिति । उपमेयापेक्षयोपमानस्य हीनताकथने प्रतीपमित्यर्थः । किं पद्मेनेति लक्ष्यम् । काकुना कार्याभावकथनेन हीनताकथनात् । यथा वा—

अर्काय पत्ये खलु तिष्ठमाना भृङ्गैर्मितामक्षिभिरम्बुकेलौ ।
भैमीमुखस्य श्रियमम्बुजिन्यो याचन्ति विस्तारितपद्महस्ताः ॥

अन्यत्र तु—

'अन्योपमानलाभेन वर्ण्यस्याऽनादरश्च तत् ।
अलं गर्वेण ते वक्त्र ! कान्त्या चन्द्रोऽपि तादृशः ॥
वर्ण्योपमेयलाभेन तथान्यस्याप्यनादरः ।
कः क्रौर्यदर्पस्ते मृत्यो ! त्वत्तुल्याः सन्ति हि स्त्रियः ।
वर्ण्येनान्यस्योपमाया अनिष्पत्तिवचश्च तत् ।
मुधाऽपवादो मुग्धाक्षि ! त्वन्मुखाभं किलाम्बुजम् ॥'

अत्रोपमानहीनत्वकथनम्, प्रतीपोपमायां तूपमानस्योपमेयत्वकथनमिति तयोर्भेदः ॥ १०० ॥

उल्लासालङ्कारमाह—

**उल्लासोऽन्यमहिम्ना चेद्दोषो ह्यन्यत्र वर्ण्यते ।**
**तद्भाग्यं धनस्यैव यन्नाश्रयति सज्जनम् ॥ १०१ ॥**

उल्लास इति। अन्यमहिम्ना अन्यगुणेनाऽन्यत्र दोषवर्णनमुल्लासः। इदमुपलक्षणम् । अन्यदोषेणान्यगुणकथने दोषेण दोषकथने गुणेन गुणकथने च उल्लासालङ्कार इत्यपि ज्ञेयम् । आद्योदाहरणं मूले । सज्जनमहिम्ना धनस्य तदनाश्रयणं दोषः । द्वितीयोदाहरणम्–'लाभोऽयमेव भूपालसेवकानां न चेद्वधः ।' राज्ञः क्रौर्यदोषेण सेवकानां वधाभावो गुणः । यथा वा—

सानन्दमेष मकरन्दमिहारविन्दे
विन्देत षट्पदयुवेति जनैरटङ्कि ।
दैवादकाण्डपरिमुद्रितपुण्डरीक-
कोशादभूदहह ! निःसरणं पुमर्थः ॥

अत्र निःसरणे गुणत्वज्ञानं कमलदोषपूर्वकम् । तृतीयस्य—

काठिन्यं कुचयोः स्रष्टुं वाञ्छन्त्यः पादपद्मयोः ।
निन्दन्ति च विधातारं त्वद्धाटीष्वरियोषितः ॥

अत्र पलायनार्थमपेक्षितं पादयोः कठिन्यमकृत्वा कुचयोः काठिन्यं कृतवतो विधेः पद्मार्दवदोषेण दोषः । चतुर्थं तु—

परदारपरद्रव्यपरद्रोहपराङ्मुखः ।
गङ्गा ब्रूते कदाऽऽगत्य मामयं पावयिष्यति ॥—॥१०१॥

तद्गुणालङ्कारमाह—

**तद्गुणः स्वगुणत्यागे स्वस्मिन्परगुणोदयः ।**
**पद्मरागारुणं नासामौक्तिकं तेऽधराश्रितम् ॥ १०२ ॥**

तद्गुण इति । स्वगुणत्यागेन अन्यगुणसम्बन्धकथने तद्गुणालङ्कारः । नासा-मौक्तिकेऽधरगुणसम्बन्धेन पद्मरागत्ववर्णनात् । यथा वा ।

यदतिविमलनीलवेश्मरश्मिभ्रमरितभाः शुचिसौधवस्त्रवल्लिः ।
अलभत यामनत्वतः शिशुत्वं दिवसकराङ्कतले चका लुठन्ती ॥—॥१०२॥

पूर्वरूपतामाह—

**पुनः स्वगुणसम्प्राप्तिर्विज्ञेया पूर्वरूपता ।**
**हरकण्ठांशुलिप्तोऽपि शेषस्त्वद्यशसा सितः ॥ १०३ ॥**

पुनरिति । अन्यगुणसम्बन्धकथनपूर्वकं पुनः स्वगुणसम्बन्धकथनं पूर्वरूपालङ्कारः । हरकण्ठांशुवेति पुनः स्वगुणकथनात् । यथा वा—

भूषाकल्प यशांसि विक्रमभरेणोपार्जितानि क्रमा—
देतस्य स्तुमहे महेभदशनस्पर्धीनि कैरक्षरैः ।
लिम्पद्भिः कुशकं कृतोऽपि रजतं राज्ञां यशःपारदै—
रस्य स्वर्णगिरिः प्रतापदहनैः स्वर्णं पुनर्निर्मितः ॥—॥१०३॥

पूर्वरूपतां प्रकारान्तरेणाह—

**यद्वस्तुनोऽन्यथारूपं तथा स्यात्पूर्वरूपता ।**
**दीपे निर्वापिते ह्यासीत् काञ्चीरत्नैरहर्महः ॥ १०४ ॥**

यदिति । वस्तुनाशकथनपूर्वं वस्त्वन्तरेण तद्वस्तुकार्यकथनं पूर्वरूपतालङ्कारः । पुनरित्यध्याहारः । अन्यथा नष्टं रूपं पुनस्तथा स्यादित्यन्वयः । दीप इति लक्ष्यम् । निर्वापित इति नाशाभिधानात् ॥ १०४ ॥

अतद्गुणालङ्कारमाह—

**सङ्गताऽन्यगुणानङ्गीकारमाहुरतद्गुणम् ।**
**चिरमपि रवेर्मध्यं शीत एव सदा शशी ॥ १०५ ॥**

सङ्गतेति । सम्बन्धेऽपि सम्बन्धिगुणाऽग्रहणकथनेऽतद्गुणालङ्कारः । शशिना सूर्य-गुणाऽग्रहणकथनात् । यथा वा—

गाङ्गमम्बु सितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः ।
राजहंस ! तव सैव शुभ्रता चीयते न च न चाऽपचीयते ॥

प्राक्सिद्ध्यलङ्कारमाह—

**प्राक्सिद्धिः स्वगुणोत्कर्षोऽनुगुणः परसन्निधेः ।**
**कर्णोत्पलानि दधते कटाक्षैरपि नीलताम् ॥ १०६ ॥**

प्रागिति । परसन्निधानात् स्वगुणोत्कर्षकथने प्राक्सिद्ध्यलङ्कारः । अवतंसीकृत-नीलोत्पलेषु कटाक्षसन्निधानेन गुणोत्कर्षकथनात् । यथा वा—

सृष्टाऽतिविश्वा विधिनैव तावत्ततोऽपि नीतोपरि यौवनेन ।
वैदग्ध्यमध्याप्य मनोभुवेयमवाप्ता वाक्पथपारमेव ॥—॥१०६॥

अवज्ञालङ्कारमाह—

**अवज्ञा वर्ण्यते वस्तु गुणदोषाऽक्षमं यदि ।**
**म्लायन्ति यदि पद्मानि का हानिरमृतद्युतेः ॥ १०७ ॥**

अवज्ञेति । अन्यगुणदोषाभ्यामन्यगुणदोषयोरनारोपणीयत्वकथनमवज्ञालङ्कारः । 'म्लायन्ती'ति पद्मदोषेण चन्द्रे दोषालाभकथनात् । यथा वा—

विधिलिखितनियोगयोगतोऽयं कुमुदमुदे समुदेति शीतरश्मिः ।
अपि यदि नलिनी स्वदैवदोषादपि मलिनीभवति क्रियेत किं कैः ॥

अत्र चन्द्रे कुमुदसन्तोषेण न गुणो न वा कमलिनीमालिन्येन दोष इति ॥१०७॥

प्रश्नोत्तरालङ्कारमाह—

**प्रश्नोत्तरं क्रमेणोक्तौ स्यूतमुत्तरमुत्तरम् ।**
**यत्रासौ वेतसी पान्थ ! तत्रेयं सुतरा सरित् ॥ १०८ ॥**

प्रश्नेति । उक्तौ प्रश्नोत्तरयोः उत्तरमुत्तरं प्रश्नरूपमुत्तररू' वा यत्र स्यूतं संलग्नम् आक्षेपगम्यमिति यावत्, तत्र प्रश्नोत्तरालङ्कार इत्यर्थः । तेन प्रश्नेन उत्तरकल्पने उत्तरेण वा प्रश्नकल्पने प्रश्नोत्तरालङ्कारः । उदाहरति—यत्रेति । अत्र पान्थस्य 'कुत्र सरित्तरणमार्ग' इत्याक्षेपलभ्यः प्रश्नः । 'यत्रासौ वेतसी'ति कामयमानाया उत्तरम् । 'वेतसीकुञ्जे स्वाच्छन्द्य'मिति भावः । अत्रैव कामयमानस्य काकूक्त्या प्रश्नेऽङ्गीकाररूपमुत्तरं कल्प्यम् । नेदमनुमानान्तर्गतम्, साधननिर्देशाभावात् । नापि काव्यलिङ्गम्, उत्तरस्य प्रश्नं प्रत्यजनकत्वात् ॥ १०८ ॥

पिहितालङ्कारमाह—

**पिहितं परवृत्तान्तज्ञातुरन्यत्र चेष्टितम् ।**
**प्रिये गृहागते प्रातः कान्ता तल्पमकल्पयत् ॥ १०९ ॥**

पिहितमिति । परवृत्तान्तज्ञानपूर्वं तदनुरूपक्रियाकथनं पिहितालङ्कारः । 'रात्रावन्यत्र श्रान्तोऽसी'ति हृदयम् ॥ १०९ ॥

व्याजोक्त्यलङ्कारमाह—

**व्याजोक्तिः शङ्कमानस्य छद्मना वस्तुगोपनम् ।**
**सखि ! पश्य गृहारामकेसरैरस्मि धूसरा ॥ ११० ॥**

व्याजोक्तिरिति । अन्यथा शङ्कमानं प्रत्यन्यथाकथनद्वारा वस्तुगोपने व्याजोक्ति-

रलङ्कारः । गृहारामेत्यादिकथनेन सुरतगोपनम् । क्वचित्तु—

'व्याजोक्तिरन्यहेतूक्त्या यदाकारस्य गोपनम् ।
कस्य वा न भवेद् रोषः प्रियायाः सव्रणेऽधरे ।
सभृङ्गं पद्ममाघ्रासीर्वारितापि मयाऽधुना ॥'

इति पाठः । इदं चान्येन खण्डिताधराया नायिकायाः समीपमागच्छन्तं सरोषं प्रियं प्रति सुरतगोपनार्थं सखीवाक्यम् । 'अयं छेकापह्नुत्यन्तर्गत' इति केचित् । 'अपह्नुतिर्वचनस्यान्यथानयनम्, आकारगोपनं व्याजोक्तिरिति भेद' इत्यन्ये । अन्यत्र तु—

'गूढोक्तिरन्योद्देश्यं चेद् यदन्यं प्रति कथ्यते ।
वृषाऽपेहि परक्षेत्रादायाति क्षेत्ररक्षकः ॥'—॥ ११० ॥

वक्रोक्त्यलङ्कारमाह—

**वक्रोक्तिः श्लेषकाकुभ्यां वाच्यार्थान्तरकल्पनम् ।**
**मुञ्च मानं दिनं प्राप्तं, मन्द ! नन्दी हरान्तिके ॥ १११ ॥**

वक्रोक्तिरिति । शब्दार्थश्लेषाभ्यां काकूक्त्या वा वाच्यार्थापेक्षयार्थान्तरकल्पने वक्रोक्त्यलङ्कारः । मुञ्च मानमिति लक्ष्यम् । 'नन्दिनं बलीवर्दं मा मुञ्चे'त्यर्थकल्पनेन 'मन्द मूर्ख ! नन्दी बलीवर्दो महादेवसमीपेऽस्ति, अत्र नास्ती'त्युत्तरं शब्दश्लेषेण । अर्थश्लेषेण यथा—

अङ्गुल्या कः कपाटं घटयति कुटिलो माधवः किं वसन्तो
नो चक्री किं कुलालो न हि धरणिधरः किं द्विजिह्वः फणीन्द्रः ।
नाहं घोराहिमर्दी खगपतिरसि किं नो हरिः किं कपीन्द्र
इत्येवं सत्यभामाप्रतिवचनयुतः पातु वश्चक्रपाणिः ॥

काकूक्तौ यथा—

अधीतिबोधाचरणप्रचारणैर्दशाश्चतस्रः प्रणयन्नुपाधिभिः ।
चतुर्दशत्वं कृतवान् कुतः स्वयं न वेद्मि विद्यासु चतुर्दशस्वयम् ॥—॥ १११ ॥

स्वभावोक्त्यलङ्कारमाह—

**स्वभावोक्तिः स्वभावस्य स्वजात्यादिषु वर्णनम् ।**
**कुरङ्गैरुत्तरङ्गाक्षैः स्तब्धकर्णैरुदीक्ष्यते ॥ ११२ ॥**

स्वभावोक्तिरिति । जात्यनुरूपस्वभावकथने स्वभावोक्त्यलङ्कारः । कुरङ्गैरिति लक्ष्यम् । स्तब्धकर्णैरिति जातिस्वभावः । यथा वा—

आकुञ्चिताभ्यामथ पक्षतिभ्यां नभोविभागात्तरसाऽवतीर्य ।
निवेशदेशाततधूतपक्षः पपात भूमावुपभमि हंसः ॥—॥ ११२ ॥

भाविकालङ्कारमाह—

**भाविकं भूतभाव्यर्थसाक्षाद्दर्शनवर्णनम् ।**
**अलं विलोकयाद्यापि युध्यन्तेऽत्र सुरासुराः ॥ ११३ ॥**

भाविकमिति । भूताश्च भाविनश्चार्थाः तेषां दर्शनं साक्षात्कारकथनं भाविकालङ्कारः । भावः कवेरभिप्रायोऽत्रास्तीति योगः । अलमिति रणभूमिवर्णनम् । युध्यन्त इति वर्तमानस्य युद्धस्य विलोकनकथनम् । यथा वा—

आसीदञ्जनमत्रेति पश्यामि तव लोचने ।
भाविभूषणसम्भारां साक्षात्कुर्वे तवाकृतिम् ॥

अत्र आद्यार्धे भूतस्य द्वितीये भाविनो दर्शनम् । नायमद्भुतो रसः, विस्मयं प्रत्यस्याऽहेतुत्वात् । नातिशयोक्तिः, अध्यवसायाभावात् ॥ ११३ ॥

भाविकच्छविरलङ्कारमाह—

**देशात्मविप्रकृष्टस्य दर्शनं भाविकच्छविः ।**
**त्वं वसन् हृदये तस्याः साक्षात्पश्चेपुरीक्ष्यसे ॥ ११४ ॥**

देशेति । देशे आश्रयोत्कर्षवशेन विप्रकृष्टस्य साक्षाद्दर्शनकथने भाविकच्छविरलङ्कारः । त्वमिति लक्ष्यम् । अन्यहृदयनिष्ठतया विप्रकृष्टस्य कामस्य दर्शनोक्तेः ॥११४॥

उदात्तालङ्कारमाह—

**उदात्तमृद्धिश्चरितं श्लाघ्यं चाऽन्योपलक्षणम् ।**
**सानौ यस्याभवद्युद्धं तद्धूर्जटिकिरीटिनोः ॥ ११५ ॥**

उदात्तमिति । श्लाघ्या ऋद्धिः श्लाघ्यं चरितं चान्योपलक्षणत्वेन कथ्यते यत्र, तत्रोदात्तालङ्कारः । सानाविति लक्ष्यम् । भवार्जुनयुद्धविशिष्टशिखरस्य पर्वतोपलक्षणत्वात् । यथा वा—

तदिदमरण्यं यस्मिन् दशरथवचनानुपालनव्यसनात् ।
निवसन् बाहुसहायश्चकार रक्षःक्षयं रामः ॥

यथा वा—

यस्मिन्नासन् कुसुमतरवस्तत्र जानेऽटवीयं
यत्रारण्यं वसति भवनान्येव जातानि तत्र ।
तीर्थं मार्गं समभवद्यथो तीर्थदेशेऽपि पन्थाः
किन्त्वत्रेदं तदिति धिषणां पर्वताग्रं करोति ॥

आद्यं यथा—

मुक्ताः केलिविसूत्रहारगलिताः संमार्जनीभिर्हृताः
प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः ।

दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुका
यद्विद्वद्भवनेषु, भोजनृपतेस्तत्त्यागलीलायितम् ॥

न चोदात्तस्यासम्बन्धकथनरूपतया सम्बन्धातिशयोक्तावन्तर्भावः । दिव्यलोकगतसम्पत्समृद्धिवर्णने केवलस्योदात्तालङ्कारस्य सम्भवात् । अत्रार्थिकसमावेशादेकेनाऽपरस्याऽनुत्थाप्यत्वाच्च नाङ्गाङ्गिभावः । तस्मादतिशयोक्तिसद्भावेऽप्युदात्तालङ्कारोऽपि सम्भवतीति । अन्यत्र तु—'आशयस्य य उत्कर्षस्तदुदात्तत्वमुच्यते ।' यथा—

पात्रे पुरोवर्तिनि विश्वरूपे क्षोदीयसि क्ष्मावलये च देये ।
व्रीडास्मितं तस्य तदा तदासीच्चमत्कृतो येन स एव देवः ॥

तस्य बलेः ॥ ११९ ॥

अत्युक्त्यलङ्कारमाह—

**अत्युक्तिरद्भुताऽतथ्यशौर्यौदार्यादिवर्णनम् ।**
**त्वयि दातरि राजेन्द्र ! याचकाः कल्पशाखिनः ॥ ११६ ॥**

अत्युक्तिरिति । अद्भुताऽनन्यसाधारणशोभादानादिवर्णनमत्युक्तिः । 'कल्पवृक्षा अपि त्वां याचन्त' इति 'तव याचकाः कल्पवृक्षतुल्यदातारो जाता' इति वात्र अत्युक्तिः । यथा वा—

अनेन सर्वार्थिकृतार्थताकृता हतार्थिनौ कामगवीसुरद्रुमौ ।
मिथः पयःसेचनपल्लवाशने प्रदाय दानव्यसनं समाप्नुतः ॥

एतावन्तोऽलङ्काराः । ग्रन्थान्तरे त्वन्येऽप्युक्ताः । ते च—

किञ्चिन्मिथ्यात्वसिद्ध्यर्थं मिथ्यार्थान्तरकल्पनम् ।
मिथ्याध्यवसितिर्वेश्यां वशयेत् खस्रजं वहन् ॥
प्रस्तुते वर्ण्यवाक्यार्थे प्रतिबिम्बस्य वर्णनम् ।
ललितं निर्गते नीरे सेतुमेषा चिकीर्षति ॥
दोषस्याभ्यर्थनाऽनुज्ञा तत्रैव गुणदर्शनात् ।
विपदः सन्तु नः शश्वद् यासु सङ्कीर्त्यते हरिः ॥

यथा वा—

नो ददासि यदि तत्त्वधियं मे यच्छ मोहमपि तं रघुवीर ! ।
येन रावणचमूर्युधि मूढा त्वन्मयं जगदपश्यदशेषम् ॥

'लेशः स्याद्दोषगुणयोर्गुणदोषत्वकल्पनम् ।' दोषे गुणत्वकल्पनं गुणे दोषत्वकल्पनं च लेशालङ्कारः ।

अखिलेषु विहङ्गेषु हन्त ! स्वच्छन्दचारिषु ।
शुक ! पञ्जरबन्धस्ते मधुराणां गिरां फलम् ॥

अत्र गुणो दोषत्वेन वर्णितः ।

अनङ्गतापप्रशमाय तस्य कदर्थ्यमाना मुहुराम्रृणालम् ।
मधौ मधौ नाकनदीनलिन्यो वरं वहन्तां शिशिरेऽनुरागम् ॥

अत्र शिशिरेऽनुरागो दोषोऽपि गुणत्वेन । 'सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः ।' वर्णनीयपदेन नामसूचनं मुद्रालङ्कारः। यथा–नितम्बगुर्वी तरुणी दृग्युग्मविपुला च सा ।' इदं छन्दःशास्त्रनाम्नोऽपि सूचनीयत्वेनानुष्टुप्छन्दोभेदस्य विपुलेति नाम । नायिका· वर्णनं च पदेन सूच्यते ।

क्रमिकं प्रकृतार्थानां न्यासं रत्नावलीं विदुः ।
सूक्ष्मं पराशयाभिज्ञेतरसाकूतचेष्टितम् ॥
मयि पश्यति सा केशैः सीमन्तमणिमावृणोत् ।
युक्तिः पराभिसन्धानं क्रियया मर्मगुप्तये ।
त्वामालिखन्ती दृष्ट्वाऽन्यं धनुः पौष्पं करेऽलिखत् ।
लोकप्रवादानुकृतिर्लोकोक्तिरिति भण्यते ॥
सहस्व कतिचिन्मासान् मीलयित्वा विलोचने ।
छेकोक्तिर्यत्र लोकोक्तेः स्यादर्थान्तरगर्भता ।
भुजङ्ग एव जानीते भुजङ्गचरणं सखे ! ॥

इति । अलङ्कारशेखरे तु—

'उपमारूपकोत्प्रेक्षा समासोक्तिरपह्नुतिः ।
समाहितं स्वभावश्च विरोधः सारदीपकौ ॥
सहोक्तिरन्यदेशत्वं विशेषोक्तिर्विभावना ।
एवं स्युरर्थालङ्काराश्चतुर्दश न चापरे ॥'

इति । एतेषामेवालङ्कारत्वं नान्येषामत्युक्त्यादीनाम् । तेषां तु वस्तुत्वमात्र· मित्युक्तम् ॥ ११६ ॥

आलङ्कारिकैकदेशानन्यान् सप्तालङ्कारानाह श्लोकद्वयेन—

**रसभावतदाभासभावशान्तिनिबन्धना ।**
**रसवत्प्रेयऊर्जस्विसमाहितमयी भिदा ॥ ११७ ॥**
**भावानामुदयः सन्धिः शबलत्वमिति त्रयः ।**
**अलङ्कारानिमान् सप्त केचिदाहुर्मनीषिणः ॥ ११८ ॥**

**रसभावेति ।** केचिदिति पूजार्थं न निषेधार्थम् । यत्र रसो रसान्तरस्य भावस्य वाङ्गत्वेन कथ्यते तत्र रसवदलङ्कारः। निर्वेदादित्रयस्त्रिंशद्भेदो भावो गुरुनृपदेवतादिविषय- रतिरूपो भावश्च यत्र पराङ्गत्वेन कथ्यते तत्र प्रेयोऽलङ्कारः । अनौचित्यप्रवृत्तौ रसभावौ

रसाभासभावाभासत्वेन प्रसिद्धौ यत्र पराङ्गत्वेन कथ्येते तत्रोर्जस्व्यलङ्कारः। भावस्य प्रशाम्यदवस्था भावशान्तित्वेन प्रसिद्धा यत्र पराङ्गत्वेन कथ्यते तत्र समाहितालङ्कारः। भावस्याधिक्यमुदयः, द्वयोर्भावयोः परस्परस्पर्धा भावसन्धिः, बहूनां भावानां पूर्वोपमर्दनोत्पत्तिः शबलता, एतेषामितराङ्गत्वेन कथने त्रयः। एवं सप्तालङ्कारा इत्यर्थः। क्रमेणोदाहरणानि—

येनोन्नमय्य चिबुकं तव कम्बुकण्ठि !
प्रोन्मार्जितं पुलकचारु कपोलयुग्मम्।
तेनैव दैवहतकेन करेण मेऽद्य
दग्धासि किञ्च सलिलाञ्जलिरप्यदायि॥

अत्र करुणस्याङ्गं शृङ्गारः।

कदाप्यनवलोकितं निभृतमङ्गमङ्गं मुदा
विलोकयति सादरं सरभसं सरागे मयि।
स कोऽपि भविता क्षणो मदनसङ्गरश्रान्तया
दुकूलमनुकूलया सशपथं मुहुः प्रार्थ्यते॥

अत्र शृङ्गारो 'भविते'तिपदसूचितचिन्ताख्यव्यभिचारिभावस्य उत्कण्ठाख्यस्य वा अङ्गम्। यथा वा—

प्राचीं प्रयाते विरहादयं ते तापाच्च रूपाच्च शशाङ्कशङ्की।
परापराधैर्निदधाति भानौ रुषारुणं लोचनवृन्दमिन्द्रः॥

अत्र वियोगरूपशृङ्गारः कोपरूपभावस्याङ्गम्, अतोऽत्र रसवदलङ्कारः। प्रेयो यथा—

स्वयं दृष्ट्वा वसुमतीं सशैलाम्भोधिकाननाम्।
गतास्ततो रामभुजं दृष्ट्वा मौनं समाश्रिताः॥

अत्र रामविषयरतिभावस्य वसुमतीविषयरतिभावोऽङ्गम्। यथा वा—

आदौ नक्तञ्चरचरणयोर्मत्प्रणामप्रसङ्गः
पश्चादीश ! त्वदनुविषये सादरं मच्छिरोऽस्तु।
येनानीतं दशरथकुले ब्रह्म साकारभावं
श्रीरामाख्यं जगति रचितो ध्यानयोगाय पन्थाः॥

अत्र रामरतेः रावणरतिभावोऽङ्गम्। रसाभासभावाभासयो रत्यङ्गत्वेन कथने ऊर्जस्वि। यथा—

कटाक्षैरुक्तिभिश्चेतो हरन्त्यो वनचारिणाम्।
भवन्ति वनचारिण्यः स्त्रियः श्रीराम ! विद्विषाम्॥

अत्रानेककामुकविषयरतिरूपरसाभासः प्रभुविषयरतिभावस्याङ्गम्।

त्वयि लोचनगोचरं गते सफलं जन्म नृसिंहभूपते ! ।
अजनिष्ट ममेति सादरं युधि विज्ञापयति द्विषां गणः ॥

अत्र प्रभुविषयरतिभावस्य तद्विषयद्विषद्गणरतिरूपो भावाभासोऽङ्गम् । तेनात्राऽप्यूर्जस्व्यलङ्कारः । समाहितं यथा—

तस्याः सान्द्रविलेपनस्तनयुगप्रश्लेषमुद्राङ्कितं
किं वक्षश्चरणाऽऽनतिव्यतिकरव्याजेन गोपाय्यते ।
इत्युक्ते क्व तदित्युदीर्य सहसा तत्सम्प्रमाष्टुं मया
श्लिष्टा सा रभसेन तत्सुखवशात्तन्व्या च तद्विस्मृतम् ॥

अत्र शृङ्गारस्याङ्गं कोपशान्तिः । भावोदयो यथा—

तदद्य विश्रम्य दयालुरेधि मे दिनं निनीषामि भवद्विलोकिनी ।
नखैः किलाख्यायि विलिख्य पक्षिणा तवैव रूपेण समः स मत्प्रियः ॥

अत्रौत्सुक्यरूपभावोदयः शृङ्गाराङ्गम् । भावसन्धिर्यथा—

उत्सिक्तस्य तपःपराक्रमनिधेरभ्यागमादेकतः
सत्सङ्गप्रियता च वीररभसोत्फालश्च मां कर्षतः ।
वैदेहीपरिरम्भ एष च मुहुश्चैतन्यमामीलय-
न्नानन्दी हरिचन्दनेन्दुशिशिरस्निग्धो रुणद्ध्यन्यतः ॥

अत्र आवेगहर्षयोः सन्धिः शृङ्गाराङ्गम् । यथा वा—

इति प्रियाकाकुभिरुन्मिषन् भृशं द्विगीशदूत्येन हृदि स्थिरीकृतः ।
नृपं स योगेऽपि वियोगमन्मथः क्षणं तमुद्भ्रान्तमचीकरत्पुनः ॥

अत्र धैर्यौत्सुक्यसन्धिर्मोहरूपभावाङ्गम् । शबलता यथा—

क्वाऽकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय मे श्रुतमहो ! कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः ! स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति ॥

अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां शबलता विप्रलम्भशृङ्गाराङ्गम् । यथा वा—

पश्येत्कश्चिच्चल चपल ! रे का त्वराऽहं कुमारी
हस्तालम्बं वितर हहहा ! व्युत्क्रमः क्वासि यासि ।
इत्थं पृथ्वीपरिवृढ ! भवद्विद्विषोऽरण्यवृत्तेः
कन्या कञ्चित् फलकिसलयान्याददानाऽभिधत्ते ॥

अत्र शङ्काऽसूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यानां शबलता राजविषयरतिभावस्याङ्गमिति । एतेऽप्यलङ्कारा इति भावः । "अत्र केचिदित्यस्वरसबीजं तु अलङ्काराणां

शब्दार्थनिष्ठोपकारजननद्वारा रसोपकारकत्वम् । रसस्तु व्यङ्ग्यतया सर्वप्रधानीभूत इति तस्यान्योपकारकत्वासम्भवान्नालङ्कारत्वं सम्भवती"त्याहुः(१)। ध्वनिकारस्तु—"अलङ्काराणां रसोपकारकत्वे शब्दार्थनिष्ठचमत्कारजननमेव तद्द्वारम् । मानाभावात्, रूपकादौ सतोऽपि तस्यार्थिकतया अप्रयोजकत्वाच्च। किन्तु यथाकथञ्चिद्रसोपकारकत्वमात्रं साक्षात्परम्परासाधारणम् । तेन रसादीनामपि रसोपकारकत्वे भवत्येवालङ्कारत्वम् । यथाहुः—

प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः ।
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः ॥

अत एतेषां युक्तमलङ्कारत्व"मित्याह । अन्ये—तु 'अत्र रसाद्युपकारकत्वमात्रेणालङ्कारशब्दप्रयोगो भाक्त' इत्याहुः ॥ ११७–११८ ॥

संसृष्ट्यादीनामलङ्कारान्तरत्वं निरास्यति—

**शुद्धिरेकप्रधानत्वं तथा संसृष्टिसङ्करौ ।**
**एतेषामेव विन्यासान्नालङ्कारान्तराण्यमी ॥ ११९ ॥**

शुद्धिरिति । शुद्धो यत्रैक एवालङ्कार एकप्रधानत्वम्, सैव शुद्धिरित्युच्यते । द्वयोरलङ्कारयोः परस्परानुपपादकयोरुभयप्राधान्यं संसृष्टिः । अलङ्कारयोरङ्गाङ्गिभावः सङ्करः । अङ्गाङ्गिभावाभावेन प्रधानयोरलङ्कारयोः सन्देहो द्वितीयः सङ्करः । अलङ्कारद्वयस्यैकपदप्रतिपाद्यत्वं तृतीयः सङ्करः । तदुक्तम्—

अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वं तु सङ्करः ।
एकस्य च ग्रहे न्यायदोषाभावादनिश्चयः ॥
व्यवस्थितिरलङ्कृत्योः पदक्यानुप्रविष्टयोः ।

उत्तरार्धयोः 'सोऽपि सङ्कर' इत्यनुषङ्गः । तत्रैतेषामेव प्रसिद्धानामलङ्काराणां विन्यासान्न संसृष्ट्यादीनामलङ्कारान्तरत्वमित्यर्थः । यथा—

यदगारघटाऽट्टकुट्टिमस्रवदिन्दूपलतुन्दिलापया ।
मुमुचे न पतिव्रतौचिती प्रतिचन्द्रोदयमभ्रगङ्गया ॥

अत्र हि कुट्टिमानामत्युच्चत्वचन्द्रकान्तनिर्मितत्वप्रतिपादनद्वारा सम्पत्समृद्धियोगरूप उदात्तालङ्कारोऽतिशयोक्तिश्चेति द्वावपि प्राधान्येन प्रतीयेते । तयोरुपपादकः पदार्थहेतुकाव्यलिङ्गालङ्कारो 'यदगारे'त्यादिविशेषणस्य 'अभ्रगङ्गये'ति विशेष्यस्य च साभिप्रायत्वरूपपरिकरपरिकराङ्कुरालङ्कारौ च । पतिव्रतेति समुद्रवृद्ध्यनुमानादनुमानालङ्कारः। सर्वैश्चोदात्तालङ्कारस्य चारुता प्रतीयते । तेन परस्परोपपादकत्वम् । 'आर्ताते

(१) अत्र केचित्—"रसस्य व्यङ्ग्यतया सर्वप्रधानीभूतस्यान्योपकारकत्वासम्भवान्नालङ्कारत्वं सम्भवतीत्याहुः" इति ख-पुस्तके पाठः ।

मुदिते इष्टेऽस्त्यन्यपतिव्रतावृत्तान्तप्रतीतेः समासोक्त्यलङ्कारोऽपि । सोऽपि च उदात्तालङ्कारपरिष्कारकः । एवमुदाहरणान्तराणि सुधीभिरूह्यानि । अत्र सर्वत्र तदलङ्कारबुद्धयनपायान्नालङ्कारान्तरत्वमित्याशयः ॥ ११९ ॥

**सर्वेषां च प्रतिद्वन्द्वप्रतिच्छन्दाभिदाभृताम् ।**

**उपाधिः क्वचिदुद्भिन्नः स्यादन्यत्रापि सम्भवात् ॥ १२० ॥**

सर्वेषामिति । एवं सति सर्वेषामन्येषामप्यलङ्काराणां न्यूनाधिकरूपतया विसदृशानामलङ्कारान्तरत्वापत्तिः । यथा—रूपकस्य पृथक्कथितसादृश्यरूपत्याधिक्यात् इवादिपदाभावे लुप्तोपमाया न्यूनत्वात् । अतस्तत्र रूपकोपमातो भेदाभावादुक्तस्थलेऽपि न भेद इति तात्पर्यार्थः । अक्षरार्थस्तु—(१)प्रतिद्वन्द्वितया विरोधितया प्रतिच्छन्द आधिक्यं तेन भेदभाजामन्येषामलङ्काराणामुद्भिन्नः कथित उपाधिः प्रकारोऽन्यत्रापि सम्भवन् योजनीयः स्यात्तथाप्यलङ्कारान्तरत्वं स्यादिति ॥ १२० ॥

**माला परम्परा चैषां भूयसामनुकूलके ।**

**मनुष्ये भवतः क्वापि ह्यलङ्काराङ्गतां गते ॥ १२१ ॥**

मालेति । भूयसामलङ्काराणामुक्तानामेषामुपमादीनां माला मालाकारेण विन्यासः परम्परा रशनाद्याकारेण विन्यासश्च अनुकूलके, स्वार्थे कः, चमत्कारजनके भवतः । हेतुगर्भविशेषणम्—यतोऽलङ्काराङ्गतां गते अलङ्कारोपकारकत्वं प्राप्ते । मनुष्य इवेति दृष्टान्तवशात्काव्ये इत्यध्याहर्तव्यम् । एवञ्च— मनुष्ये यथालङ्काराणां माला परम्परा चानुकूले शोभाजनके भवतः, तथा काव्येऽप्यलङ्काराणां माला परम्परा च चमत्कारजनके भवतः । मालोपमारशनोपमामालारूपकादीनामपि नालङ्कारान्तरत्वम् । यथा—

> अनवरतकनकवितरणजलसम्भृतकरतरङ्गितार्थिततेः ।
> भणितिरिव मतिर्मतिरिव चेष्टा चेष्टेव कीर्तिरतिविमला ॥

इयं च साधारणधर्मेण रशनोपमा ।

> मतिरिव मूर्तिर्मधुरा मूर्तिरिव सभा प्रभावयुता ।
> तस्य सभेव जयश्रीः शक्या जेतुं नृपस्य न परेषाम् ॥

इयं च धर्मभेदेन । एवम् ,

> किसलयकरैर्लतानां करकमलैः कामिनां मनो जयति ।
> नलिनीनां कमलमुखैर्मुखेन्दुभिर्योषितां मदनः ॥

इति रशनारूपकम् ।

> अलौकिकमहालोकप्रकाशितजगत्त्रय ! ।
> स्तूयते देव ! सद्वंशमुक्तारत्नं न कैर्भवान् ॥

इति मालारूपकम् । तत्र नालङ्कारान्तरत्वमित्याशयः । अलङ्कारान्तरत्वबुद्धय-

( १ ) 'प्रतिच्छन्देन स्वादेन (?)मर्यादयेति यावत् भेदभाजा०' इति ख-पुस्तके ।

भावात्तदलङ्कारत्वबुद्ध्यनपायाच्चेति हृदयम् ॥ १२१ ॥

परेषां मतमुपन्यस्यति श्लोकद्वयेन—

शब्दे पदार्थे वाक्यार्थे वाक्यार्थस्तबके तथा ।
एते भवन्ति विन्यासाः स्वभावातिशयात्मकाः ॥ १२२ ॥
कस्याप्यतिशयस्योक्तिरित्यन्वर्थविचारणात् ।
प्रायेणामी अलङ्कारा भिन्ना नातिशयोक्तितः ॥ १२३ ॥

शब्दे इति। शब्देऽनुप्रासयमकादीनां, पदार्थे उपमादीनां, वाक्यार्थे दृष्टान्तादीनां, वाक्यार्थस्तबके निदर्शनादीनां विन्यासातिशयात्मकानां सर्वेषामतिशयोक्त्यलङ्कार-रूपत्वमेव भेद उक्तः । अतिशयोक्तिरिति योगस्य सर्वेषु सम्भवात्। अतः सर्वेषामति-शयोक्त्यलङ्कारान्तर्भाव इत्याशयः ॥ १२२–१२३ ॥

स्वमतमाह—

अलङ्कारप्रकारेषु दधानेष्वपि साम्यताम् ।
वलक्षण्यं प्रतिव्यक्ति प्रतिभाति मुखेष्विव ॥ १२४ ॥

अलङ्कारेति । अतिशयोक्तित्वेनालङ्कारत्वेन वा समेष्वपि उपमादिप्रातिस्विकं मुखेष्विव प्रत्यक्षेणोपलभ्यमानं वैलक्षण्यमस्तीत्यर्थः ॥ १२४ ॥

अलङ्कारेषु तथ्येषु यद्यनास्था मनीषिणाम् ।
तदर्वाचीनभेदेषु नाम्नां नाऽऽम्नाय इष्यताम् ॥ १२५ ॥

अलङ्कारेष्विति । रसिकैरालङ्कारिकैः स्वानुभवैकवेद्य एतेषां भेद इत्याशयः । अनुभवैकवेद्यभेदेष्वलङ्कारेषु यद्यनादरः, तदा उपमारूपकादिनाम्नामनादरोऽस्तु । विजातीयबुद्धिकृतविषयभेदस्तु ब्रह्मणापि दुर्निवार इत्यर्थः । अनुभवैकसिद्धोऽलङ्कारभेद इत्याशयः ।

महादेवः सत्रप्रमुखमखविद्यैकचतुरः
सुमित्रा तद्भक्तिप्रणिहितमतिर्यस्य पितरौ ।
चतुर्थः सैकोऽयं सुकविजयदेवेन रचिते
चिरं चन्द्रालोके सुखयतु मयूखः सुमनसः ॥ १२६ ॥

इति श्रीपीयूषवर्षपण्डितजयदेवकृते चन्द्रालोकालङ्कारेऽलङ्कार-
निरूपणाख्यः पञ्चमो मयूखः ।

विश्वेश्वरापराख्येन गागाभट्टेन धीमता ।
चन्द्रालोकस्य विवृतिर्मयूखे पञ्चमे कृता ॥

इति मीमांसकगागाभट्टविरचितचन्द्रालोकटीकायां राकागमाख्यायां पञ्चमो मयूखः।

## षष्ठो मयूखः ।

रीतिनिरूपणस्य रसनिरूपणोपजीवकतयाऽवसरसङ्गत्या आदौ रसान्निरूपयितुं विभावानुभावव्यभिचारिभावैराहितोत्कर्षस्य स्थायिभावस्य रसत्वात्तदुपोद्घातत्वेन विभावादीनभिधत्ते—

आलम्बनोद्दीपनात्मा विभावः कारणं द्विधा ।
कार्योऽनुभावो भावस्तु सहायो व्यभिचार्यपि ॥ १ ॥

आलम्बनेति । रसमात्रे आलम्बनविभाव उद्दीपनविभावश्च कारणम् । यद्यप्यु-द्दीपकस्य न जनकत्वं तथाप्युद्दीपनं विनाऽऽस्वादायोगाद्रसत्वानुपपत्तेरुत्कर्षाधायकत्वेन जनकता विवक्षिता । अनुभावः कार्यम् । व्यभिचारिभावः सहकारीत्यर्थः । एते प्रतिरसं भिन्ना वक्ष्यन्ते ॥ १ ॥

गलद्वेद्यान्तरोद्भेदं हृदयेऽप्यजडात्मनाम् ।
मिलन्मलयजालेप इवाह्लादं विकासयन् ॥ २ ॥
काव्ये नाट्ये च कार्ये च विभावाद्यैर्विभावितः ।
आस्वाद्यमानैकतनुः स्थायी भावो रसः स्मृतः ॥ ३ ॥

गलदिति । रत्यादिः स्थायी भाव एव रसः । विभावाद्यैर्विभावितो रसो न सूक्ष्मावस्थापन्नः । काव्यनाटकभोगेषु आस्वादनस्वरूपो ज्ञानस्वरूपः । ज्ञानमप्यनन्य-विषयमिति गलद्वेद्यान्तरोद्भेदमिति क्रियाविशेषणेनोक्तम् । अजडात्मनां तत्तद्रस-परिशीलनाभ्यासपाटववताम् । अतएव न शान्ताभासे शृङ्गाराभिव्यक्तिः । 'हृदयेषु जडात्मना'मिति पाठे तु जडहृदये यथा मलयजालेप आह्लादं विकासयतीति दृष्टान्ते योज्यम् । अयमाशयः—शृङ्गारवीरकरुणहास्याऽद्भुतभयानकरौद्रबीभत्सशान्तानां रसानां रत्युत्साहशोकहासविस्मयभयद्वेषजुगुप्साप्रशमाः क्रमेण स्थायिभावाः । तिष्ठन्तीति स्थायिनः स्थिरा इत्यर्थः । यतः सर्वो जीवः सुखसक्तो रिरंसते, स्वहितायोत्सहते, स्वेष्टक्षतिशङ्कया शोचति, हसति, वैचित्र्यदर्शनाद्विस्मयते, बिभेति, परस्मै कुप्यति, परं जुगुप्सते, वैराग्येण किञ्चित्त्यक्तुकामः प्रशमं भजते । न हि मुक्तावस्थातः पूर्वमेभि-र्नवभिश्चित्तव्यापारैः शून्यः कदाचित्कश्चित् संसारेऽवतिष्ठते । एवञ्च-वासनारूपतया स्थितान् विरुद्धैरविरुद्धैर्वा भावैरतिरस्कृतप्रवाहान् रत्यादीन् विभावयन्ति आस्वाद-योग्यान् जनयन्ति ते विभावाः । अनुभावयन्ति तत्रैवोत्कर्षाधानं कुर्वन्ति तेऽनुभावाः । विशेषेणाभितः स्थायिनः शरीरे चारयन्ति ते व्यभिचारिभावाः । तथाच-'अभिव्यक्त-स्थायिभाव एव रस' इति सम्प्रदायः ।

भट्टलोल्लटस्तु—"ललनादिभिरालम्बनविभावैरुत्पादित उद्दीपनविभावैश्चन्द्रा-ऽऽरामप्रासादादिभिरुद्दीपितोऽनुभावैः कटाक्षादिभिः प्रतीतियोग्यः कृतो व्यभिचारिभि-

स्कण्ठादिभिः पोषितो रामाद्यनुकार्ये नटे रसः, स एव तत्तुल्यरूपतानुसन्धानबलाद्रारोप्यमाणः सामाजिकानां चमत्कारहेतु"रित्याह ।

श्रीशङ्कुकस्तु—"विभावादिभिः स्थायिनोऽनुमितिरूपा चमत्कारप्रतीतिर्या सामाजिकानां जायते, स रसः । तथा हि–चित्रतुरगवद्रामोऽयमिति ज्ञातो नटः पक्षः । तत्र विभावादित्रयेण स्थाय्यनुमीयते । गुरुशिक्षया कृतातिशयिताभ्यासेन रोमाञ्चाद्यभिनयद्वारेण,

'सौधस्थले चरन्ती चरणसमालोलचारुमञ्जीरा ।
कापि कमनीयमूर्तिः कनकशलाकेव कामिनी दृष्टा ॥'

इत्यालम्बनाभिव्यक्तौ,

'वाता मलयजा वान्ति मेघैः श्यामं तथाम्बरम् ।
भूमिर्नवाङ्कुरलीना का गतिर्ललनां विना ॥'

इत्युद्दीपनव्यक्तौ तदनुभावस्य रोमाञ्चादेर्दर्शनीयस्याविर्भावेन व्यञ्जनीयस्योत्कण्ठादेस्तत्कार्यप्रकटनेन च प्रकाशनात् । यद्यपि ते कृत्रिमास्तथापि कृत्रिमत्वेनाऽज्ञातैः स्थायिभावस्य रत्यादेरनुमितिः । न च साक्षात्कार एव चमत्कारो नानुमितिः । अन्यथा स्वर्गानुमितिरपि सा स्यादिति वाच्यम् । वस्तुसौन्दर्यबलाद्रसनीयत्वेन स्थाय्यनुमानस्याऽन्यानुमानवैलक्षण्यात् । न च तथापि स्थायिनो नेऽसत्त्वाद् बाधावतारेणानुमित्यऽसम्भव इति वाच्यम् । स्थायितया सम्भाव्यमानत्वेनाभावनिश्चयाभावात् । अनिश्चये त्विष्टैव रसानुत्पत्तिः । अतोऽनुमितिविषयीभूतः स्थायिभाव एव रसः । अत एव नटे न रस" इत्याह ।

भट्टनायकस्तु—"नोत्पद्यते नानुमीयते किन्तु विभावादिभिः स्थायिनो रत्यादेर्भोगः । तथा हि–शब्दात्मनः काव्यस्य त्रयो व्यापाराः । अभिधा भावकत्वं भोक्तृत्वं च । अभिधा निरन्तरा सान्तरा च । निरन्तरा शक्तिरूपा सान्तरा लक्षणारूपा । भावकत्वं साधारणीकरणम् । तेन हि व्यापारेण विभावादयो रत्यादिः स्थायी च साधारणीक्रियते । साधारणीकरणं च रामादिविशेषाणामालम्बनविभावानां कामिनीत्वादिसामान्येनोपस्थितिः(१) । स्थाय्यनुभावादीनां सम्बन्धिविशेषानवच्छिन्नत्वम् । नाट्येऽपि द्वितीयव्यापारेण साधारणीकृतैर्विभावादिभिस्तृतीयव्यापारसाहित्येन तथा कृत एव स्थायी भुज्यते । भोगश्च–सत्त्वादिगुणोद्रेकात्प्रकाशते य आनन्दस्तत्स्वरूपाऽनन्यालम्बना या संवित् तत्स्वरूपो लौकिकसुखानुभवविलक्षणः । उद्रेकश्च इतराभिभवेनाऽवस्थिति"रिति साङ्ख्यसिद्धान्तानुयायी स्वमतपरिष्कारमाह ।

आचार्याभिनवगुप्तपादास्तु—"रसो विभावादिभिर्नोत्पद्यते नानुमीयते न भुज्यते किन्त्वभिव्यज्यते । तथा हि–धूमेन वन्ह्यनुमानाभ्यासवतां नैयायिकानामिव

(१) 'साधारणीकरणं च' इत्यारभ्य '० सामान्येनोपस्थितिः' इत्यन्तोंऽशः ख–पुस्तके न दृश्यते ।

ललनोद्यानकटाक्षरोमाञ्चादिभिः स्थायिरत्याद्यनुमानाभ्यासवासनावासितान्तःकरणाना-माकलङ्कारिकाणां सामाजिकानां पूर्वमुत्पन्नः सूक्ष्मतयान्तः स्थितो रत्यादिः स्थायी भावो विभावादिभिरभिव्यज्यते । एवञ्च येषां पूर्वं रत्यादिर्नोत्पन्नस्तेषां नास्त्येव रसाभिव्यक्तिः । अन्यनिष्ठानामपि विभावादीनां सम्बन्धिविशेषीयत्वेनाप्रतीतौ स्वीयत्वा-संसर्गाऽग्रहात्साधारण्येन प्रतीतौ साधारण्येनैव प्रमातृविशेषसंसर्गाग्रहात्साधारण्येन स्थायी अभिव्यज्यते । अभिव्यक्तिरेव चर्वणा । तेन—'विभावादीनां समूहालम्बनात्मिकाभिव्यक्तो रस' इति सिद्धम् । अभिव्यक्तिविशिष्टश्च स्थायी विभावादिज्ञानपर्यन्तमभिव्यक्तोऽभिव्यक्तिनाशोत्पत्तौ नाशोत्पत्तिप्रतीतिविषयो भवति । न चैवं विभावादिसमूहालम्बनात्मिकायां रसव्यक्तौ विभावादीनां पृथक् प्रतीतिप्रसङ्ग इति वाच्यम् । पानकरसन्यायेन चर्वणात् । पानके हि कर्पूराद्यंशो न पार्थक्येन प्रतीयते, एवमत्रापि विभावाद्यंशो न पृथक् प्रतीयते, किन्तु रत्याकारतयैव तत्प्रतीतिः । अतोऽभिव्यज्यत एव रस" इत्याहुः ।

एतच्च सर्वमभिप्रेत्य 'विभावित' इत्युक्तम् । विभावितः, उत्पादितोऽनुमितो भुक्तोऽभिव्यक्त इति मतभेदादर्थः । आस्वाद्यमानैकतनुरिति रसशब्दे रस्यत इति योगः प्रदर्शितः । विभावाद्यैरित्यनेन मिलितानामेवाभिव्यञ्जकत्वं न प्रत्येकमित्युक्तम् । एकैकस्य व्यञ्जकत्वे व्यभिचारात् । तथा हि—व्याघ्रादयो विभावा भयानकस्येव रौद्राद्भुतवीराणाम्, अश्रुपातादयोऽनुभावाः शृङ्गारस्येव करुणभयानकयोः, चिन्तादयो व्यभिचारिणः शृङ्गारस्येव वीरकरुणभयानकानाम् । न च तत्रैकेन तत्तद्रसाभिव्यक्तिः । अतो मिलितानामेवाभिव्यञ्जकत्वम् । यत्र चैकेन रसाभिव्यक्तिस्तत्रान्यतरेणान्यस्याप्याक्षेपात् । यथा—

विपदलिमलिनाम्बुगर्भमेघं मधुकरकोकिलकूजितैर्दिशां श्रीः ।
धरणिरभिनवाङ्कुराङ्कटङ्का प्रणतिपरे दयिते प्रसीद मुग्धे ! ॥

अत्र विभावेनानुभावव्यभिचारिभावयोः,

परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः
कथमपि परिवारप्रार्थनाभिः क्रियासु ।
कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मी-
मामनवकरिदन्तच्छेदपाण्डुः कपोलः ॥

अत्रानुभावेन विभावव्यभिचारिभावयोः,

दूरादुत्सुकमागते विवलितं सम्भाषिणि स्फारितं
संश्लिष्यत्यरुणं गृहीतवसने कोपाञ्चितभ्रूलतम् ॥
मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णेक्षणं
चक्षुर्जातमहो ! प्रपञ्चचतुरं जातागसि प्रेयसि ॥

अत्र औत्सुक्यव्रीडादिभिर्व्यभिचारिभावैर्विभावानुभावयोराक्षेप इति दिक् ॥ २-३ ॥

श्लोकद्वयेन शृङ्गारमाह—

रत्याख्यस्थायिभावात्मा वल्लभादिविभावितः ।
आलस्येर्ष्याजुगुप्साभ्यो विना सञ्चारिभिर्युतः ॥ ४ ॥
अनुभावैः कटाक्षाद्यैरुन्मादाद्यैर्यथाक्रमम् ।
संयोगो विप्रलम्भश्च शृङ्गारो द्विविधो रसः ॥ ५ ॥

रत्याख्येति । मनोऽनुकूलविषयं सुखात्मकं संवेदनं रतिः । रत्याख्यस्थायिभावात्मको वल्लभादिविभावितस्तन्निष्ठस्तद्विषय इति यावत् । आलस्यादीनां करुणरौद्रबीभत्सव्यभिचारित्वात् । स शृङ्गारो द्विधा, संयोगो वियोगश्च । तावपि प्रच्छन्नप्रकाशरूपौ द्विधा । तदुक्तम्—

'जायापत्योर्मिथो रत्यावृत्तिः शृङ्गार उच्यते ।
संयोगो विप्रलम्भश्चेत्येष तु द्विविधो मतः ॥
तौ तयोर्भवतो वाच्यौ बुधैर्युक्तवियुक्तयोः ।
प्रच्छन्नश्च प्रकाशश्च पुनरेष द्विधा मतः ॥'

इति । द्विविधस्यापि संयोगस्य स्वेदाश्रुरोमाञ्चकम्पस्खलितकेशबन्धांशुकशयनपुष्पमाल्यादिसम्यङ्निवेशचाटुप्रभृतयोऽनुभावाः । वियोगद्वये असन्तोषकृशतादीनवचनजागरविलापलेखलेखनवाचनवार्ताप्रश्नमरणोद्यमसन्देशादयोऽनुभावाः । आलस्येर्ष्याजुगुप्सावर्जिताः संयोगद्वयेऽपि हर्षादयो व्यभिचारिणः । वियोगद्वये शङ्कामदग्लानिनिर्वेदमरणादयो व्यभिचारिणः । वियोगश्च—

पूर्वानुरागमानात्मप्रवासकरुणात्मकः ।
विप्रलम्भश्चतुर्धा स्यात् पूर्वपूर्वो ह्ययं गुरुः ॥

इति । अयमेवाभिलाषविरहेर्ष्याप्रवासशापहेतुक इति गीयते । तत्र प्रच्छन्नसंयोगो यथा—

भ्रमद्भ्रुकुटि सस्मितं नमितकन्धरं प्रोल्लस-
त्कपोलपुलकावलि स्खलितकम्पितोरोजकम् ।
उदञ्चितभुजायुगग्रथितकेशपाशं पुरो
गुरोरपि हरिः सुखं सपदि राधयाऽऽलोक्यते ॥

संयोगानामवलोकनालिङ्गनचुम्बनादीनामनेकरूपत्वादवलोकनरूपः शृङ्गारः । तस्य च राधिकानिष्ठस्मितादयो राधिकानिष्ठस्य रत्याख्यस्थायिभावस्य कार्यत्वादनुभावाः । कृष्णनिष्ठरत्याख्यस्थायिभावस्योद्दीपकत्वादुद्दीपनविभावा अपि भवन्ति । न चोद्दीपनविभावानां कारणरूपत्वादनुभावानां कार्यरूपत्वादुभयरूपत्वं विरुद्धमिति वाच्यम् । अन्यनिष्ठरतिकार्यस्यान्यनिष्ठरतिकारणत्वे बाधकाभावात् । वियोगरूपश्शृङ्गारानुभावशोकस्य करुणरसस्थायित्वमिव । प्रकाशो यथा—

सहस्रगोपीनां पदनलिपराणां परिवृतो
वरं वृन्दारण्ये घनरसरसालास्पदरसे ।
समालिङ्गंश्चुम्बन् मुहुरपि कटाक्षैः परिमृशं-
स्तथा गायन्नृत्यन् रमयति रहस्यं यदुपतिः ॥

प्रच्छन्नवियोगो यथा—

समानकुलशीलयोः समरुचोः परायत्तयोः
परस्परविलोकनाकुलितचेतसोः प्रेयसोः ।
तनुत्वमधिविन्दतोर्बहुविधं विधिं निन्दतो-
रशक्यविनिवेदना विरहवेदना वर्धते ॥

यथा वा—

अपह्नुवानस्य जनाय यन्निजामधीरतामस्य कृतं मनोभुवा ।
अबोधि तज्जागरदुःखसाक्षिणी निशा च शय्या च शशाङ्ककोमला ॥

प्रकाशो यथा—

अपसारय घनसारं कुरु हारं दूर एव किं कमलैः ।
अलमलमालि ! मृणालैरिति वदति दिवानिशं बाला ॥

नायिकानायकभेदेन संयोगविप्रयोगभेदा ग्रन्थगौरवभयान्नोदाह्रियन्ते ॥४-५॥

हास्यरसमाह—

**हासस्थायी रसो हास्यो विभावाद्यैर्यथाक्रमम् ।**
**वैरूप्यफुल्लगण्डत्वावहित्थाद्यैः समन्वितः ॥ ६ ॥**

हासेति । अङ्गक्रीडादिजन्मा चेतोविकारो हासः, स स्थायी यस्येति बहुव्रीहिः। आलम्बनविभावो नायको नायिका च । उद्दीपनविभावो वैरूप्यादिः। अनुभावः फुल्लगण्डत्वादिः । व्यभिचारी अवहित्थादिरित्यर्थः । तदुक्तम्—

हासमूलः समाख्यातो हास्यनामा रसो बुधैः ।
चेष्टाङ्गवेषवैकृत्याद् बाह्यहासरसोद्भवः ॥
कपोलाक्षिकृतोल्लासो भिन्नोष्ठः स महात्मनाम् ।
विदीर्णास्यश्च मध्यानामधमानां सशब्दकः ॥

उत्तममध्यमाधमभेदेन हास्यरसस्त्रिधेत्यर्थः। परं त्वयं हास्यरसः सङ्क्रमणरूपः । यतः, परस्य हासं दृष्ट्वाऽन्योऽपि हसति । यथाऽम्लदाडिमरसास्वादः पार्श्वस्थमुखे लालां करोति । न त्वन्यरसानां सङ्क्रमणरूपत्वम् । न च स्वामिशोकेन भृत्यशोकासस्यापि सङ्क्रमणरूपत्वमिति वाच्यम् । भृत्यशोकस्य स्वामिशोकनिमित्तकरुणरसान्तरत्वात् । यथा—

गताः केचित्प्रबोधाय स्वपन्तं कुम्भकर्णकम् ।
तदधःपवनोत्सङ्गादुड्डीय पतिताः क्वचित् ॥

यथा वा—

वीराग्रेसर ! कृष्णरामनृपते ! त्वत्तो रणप्राङ्गणे
कृत्ताः केचन पारसीकपतयः प्राप्ताः पुरीमामरीम् ।
ओस्तादेति गुरौ, बलद्विषि सलत्तानेति, शच्यां पुन-
र्बीबीति, प्रणतौ सलामिति हरान् स्मेराननान् कुर्वते ॥–॥६॥

करुणमाह—

**अभीष्टविप्रयोगाऽश्रुपातग्लान्यादिभिः क्रमात् ।**
**विभावाद्यैर्युतः शोकस्थायी स्यात् करुणो रसः ॥ ७ ॥**

अभीष्टेति । इष्टनाशादिजनितं चित्तवैक्लव्यं शोकः । इष्टवियोगोऽनिष्टसंयोग-श्चोद्दीपनः । अश्रुपातोऽनुभावः । ग्लान्यादयो व्यभिचारिणः । अनेन क्रमेण विभावा-द्यः । शोकः स्थायी यस्येत्यर्थः । तदुक्तम् ।

शोकोत्थः करुणो ज्ञेयस्तत्र भूपातरोदने ।
वैवर्ण्यमोहनिर्वेदप्रलापाश्रूणि कीर्तयेत् ॥

यथा—

सीतामपास्य त्रपया नतास्यं समागतं लक्ष्मणमानिरीक्ष्य ।
बभूव बाष्पाम्बुधिमध्यलीनो दृगन्तमीनो रघुनन्दनस्य ॥

यथा वा—

मदर्थसन्देशमृणालमन्थरः प्रियः कियद्दूर इति त्वयोदिते ।
विलोकयन्त्या रुदतोऽथ पक्षिणः प्रिये ! स कीदृग् भविता तव क्षणः ॥–॥७॥

रौद्रमाह—

**क्रोधस्थायी रसो रौद्रो विभावाद्यैः समन्वितः ।**
**मात्सर्यहस्तनिष्पेषसंमोहाद्यैर्यथाक्रमम् ॥ ८ ॥**

क्रोधेति । प्रतिकूलतत्पक्षस्य द्वेषः क्रोधः स्थायी यस्येति विग्रहः । मात्सर्यादि-रुद्दीपनविभावः । मात्सर्यं च दारापहारज्ञातिविघातौ पराभवाद् भवतीति । एवञ्च-पराभवादीनामप्युद्दीपकत्वम् । हस्तनिष्पेषादिरनुभावः । संमोहादिर्व्यभिचारी । स रौद्ररस इत्यर्थः । तदुक्तम्—

क्रोधात्मको भवेद् रौद्रः क्रोधश्चाऽरिपराभवात् ।
भीष्मवृत्तिर्भवेदुग्रः सामर्षस्तत्र नायकः ॥
स्वांसाऽऽघातस्वशस्त्रोपक्षेपभ्रूकुटयस्तथा ।
अत्राऽरातिजनाक्षेपो दलनं चोपवर्ण्यते ॥

यथा—

क्वेयं माता पिशाची, क इव स जनको, भ्रातरः केऽत्र कीटा
वध्योऽयं बन्धुवर्गः, कुटिलविटहृदश्चेष्टिता ज्ञातयोऽमी ।

आगर्भं यावदेषां कुलमिदमखिलं नैव निःशेषयामि
स्फूर्जन्तः क्रोधवह्नेर्न दधति विरतिं तावदेते स्फुलिङ्गाः ॥–॥ ८॥

वीरमाह—

**उत्साहाख्यस्थायिभावः प्रभावादिविभावभूः ।**
**वीरोऽनुभावैः स्थैर्याद्यैर्भावैर्गर्वादिभिर्युतः ॥ ९ ॥**

उत्साहेति । कार्यारम्भ आदर उत्साहः स्थायी । प्रभावबलमदबाहुल्यादिरुद्दीपनविभावः । स्थैर्यादिरनुभावः । आदिपदात् धैर्यवीर्याक्षेपवचनादयः । गर्वादिर्व्यभिचारीत्यर्थः । आदिना—

अमर्षः प्रतिबोधश्च वितर्कोऽथ मतिर्धृतिः ।
क्रोधासूये च संमोह आवेगः शोकहर्षणम् ॥
गर्वो मदस्तथोग्रत्वं भावा वीरे भवन्त्यमी ।

अन्यत्र तु—

उत्साहात्मा भवेद्वीरस्त्रेधा धर्माऽऽजिदानतः ।
नायकोऽत्र भवेत्सर्वैः श्लाघ्यैरधिगतो गुणैः ॥

तेन धर्मयुद्धदानरूपविषयभेदेन वीररसस्त्रिधेत्यर्थः । यथा—

सङ्ग्रामाङ्गणमागते दशमुखे सौमित्रिणा विस्मितं
सुग्रीवेण विचिन्तितं हनुमता व्यालोलमालोकितम् ।
श्रीरामेण परन्तु पीनपुलकस्फूर्जत्कपोलश्रिया
सान्द्रानन्दरसालसा निदधिरे बाणासने दृष्टयः ॥

अयं युद्धवीरः । दानवीरो यथा—

नीयतां कथमभीप्सितमेषां दीयतां द्रुतमयाचितमेव ।
तं धिगस्तु कलयन्नपि वाञ्छामर्थिवागवसरं सहते यः ॥–॥ ९ ॥

भयानकरसमाह—

**व्याघ्रादिभिर्विभावैस्तु वेपिताद्यनुभावभृत् ।**
**भावैर्मोहादिभिर्युक्तो भयस्थायी भयानकः ॥ १० ॥**

व्याघ्रेति । क्रूरदर्शनजनितं चित्तवैकल्यं भयं स्थायिभावः । व्याघ्रादिरुद्दीपनविभावः । कम्पितादिरनुभावः । मोहादिर्व्यभिचारी । तादृशो भयानकरस इत्यर्थः ।

तदुक्तम्—

भयानको भवेद्भीतिप्रकृतिर्घोरवस्तुनः ।
स च प्रायेण वनितानीचबालेषु शस्यते ॥
दिगालोकाऽऽस्यशोषाङ्गकम्पगद्गदसम्भ्रमाः ।
श्वासवैवर्ण्यसम्मोहा वर्ण्यन्ते विबुधैरिह ॥

यथा—

स्फूर्जद्भुजाविकालिकं समन्तात् समुच्छ्वसद्भीषणवक्त्रपङ्क्तिम् ।
दृष्ट्वैव रौद्रं दशवक्त्रदेहं सीताऽतिभीता बत ! मूर्छितासीत् ॥

यथा—

कालियरूढे शालिनि वनमालिनि हा ! विभावयन्तीभिः ।
व्यालीभिः करतालीहतवक्षोभिश्च कम्पितं भूयः ॥-॥ १० ॥

बीभत्सरसमाह—

**स्थायी जुगुप्सा बीभत्सो विभावाद्यैर्यथाक्रमम् ।**
**अनिष्टेक्षणनिष्ठ्यूतिमोहाद्याः संमताः क्रमात् ॥ ११ ॥**

स्थायीति । दोषदर्शनात्पदार्थे गर्हा जुगुप्सा स्थायिभावः । अनिष्टेक्षणादिरुद्दीपनविभावः । निष्ठीवनादिरनुभावः । मोहाद्या व्यभिचारिणः । ईदृशो बीभत्सरसः । तदुक्तम्—

बीभत्सः स्याज्जुगुप्सातः सोऽहृद्य(१)श्रवणेक्षणात् ।
निष्ठीवनास्यभङ्गादि स्यादत्र महतां न च ॥

उत्तमानां व्यभिचार्यनुभावा नेत्यर्थः । यथा—

अन्त्रैः कल्पितमङ्गलप्रतिसराः स्त्रीहस्तरक्तोत्पल-
व्यग्रोत्तंसभृतः पिनह्य सहसा हृत्पुण्डरीकस्रजः ।
तत्तच्छोणितपङ्ककुङ्कुमजुषः सम्भूय कान्तैः पिब-
न्त्यस्थिस्नेहसुराः कपालचषकैः प्रीताः पिशाचाङ्गनाः ॥

यथा वा—

फेत्कारक्रूरफेरुभिरङ्घ्रिकृष्टं श्वभिर्विलुब्धैरपि लब्धपृष्ठम् ।
आ पक्षिभिर्भक्षितसर्वनासमासीद्वपुस्तद्दशकन्धरस्य (२) ॥-॥ ११ ॥

अद्भुतरसमाह—

**अद्भुतो विस्मयस्थायी मायादिकविभावभूः ।**
**रोमाञ्चाद्यनुभावोऽयं स्तम्भादिव्यभिचारिकः ॥ १२ ॥**

अद्भुत इति । लोकसीमातिक्रान्तपदार्थविषयकचित्तविकारो विस्मयः स्थायी । मायादिरुद्दीपनविभावः । रोमाञ्चादिकमनुभावः । स्तम्भादिर्व्यभिचारी । अयमद्भुतरस इत्यर्थः । तदुक्तम्—

विस्मयात्माऽद्भुतो ज्ञेयः स चाऽसम्भाव्यवस्तुनः ।
दर्शनात् श्रवणाद्वापि प्राणिनामुपजायते ॥
तत्र नेत्रविकासः स्यात्पुलकः स्वेद एव च ।

---

( १ ) सः बीभत्सः । अहृद्यमसुन्दरम्, अनिष्टमिति यावत् ।
( २ ) उदाहरणान्तरमिदं ख-पुस्तके नास्ति ।

यथा—

दिव्यहरेर्मुखकुहरे विस्तीर्णे वर्णति व्योम ।

चूर्णति चन्द्रः क्रमुकति कनकगिरिः खदिरसारति दिनेशः ॥—॥ १२ ॥

शान्तरसमाह—

**निर्वेदस्थायिकः शान्तः सत्सङ्गादिविभावभूः ।**

**क्षमादिकाऽनुभावोऽयं स्तम्भादिव्यभिचारिकः ॥१३ ॥**

निर्वेदेति । निर्वेदश्च तत्त्वज्ञानजिहीर्षादिभिः स्वावमानः । सत्सङ्गादिभिरुद्दीपनविभावैः क्षमादिभिरनुभावैः स्तम्भादिव्यभिचारिभावैरभिव्यक्तो निर्वेदः शान्तरस इत्यर्थः । तदुक्तम्—

सम्यग्ज्ञानसमुत्थानः शान्तो निःस्पृहनायकः ।

गर्वेर्ष्यादिपरित्यागात्सम्यग्ज्ञानस्य चोद्भवः ॥

अन्ये तु—"शान्तस्य निखिलविषयपरिहारजनितात्ममात्रविश्रामानन्दरूपतया न तस्य निर्वेदः स्थायिभावः सम्भवति । तस्य विषयेऽन्यत्सत्प्रत्ययरूपतयाऽऽत्मावमाननरूपतया सर्वचित्तवृत्तिविरामरूपतया वा स्थायित्वासम्भवात् । तेन शमोऽस्य स्थायी । स च निरीहावस्थायामानन्द" इत्याहुः । यथा—

अशीमहि वयं भिक्षामाशावासो वसीमहि ।

शयीमहि महीपृष्ठे कुर्वीमहि किमीश्वरैः ॥—॥ १३ ॥

भावानाह—

**रतिर्देवादिविषया सन्ति च व्यभिचारिणः ।**

**वेद्यमाना निगद्यन्ते भावाः साहित्यवेदिभिः ॥ १४ ॥**

रतिरिति । देवादिविषयिणी रतिर्भावः। आदिना नृपमुनिगुरुभ्रातृसुतविषयापि । तथा वक्ष्यमाणा निर्वेदादयो व्यभिचारिभावाः यदा वेद्यमानाः प्राधान्येन प्रकाश्यमानाः काव्यव्यङ्ग्या भवन्ति, तदा तेऽपि भावपदवाच्याः प्रधाना भवन्तीत्यर्थः । तदा न रत्यादीनां स्थायित्वम्, किन्तु भावशब्दवाच्यत्वमित्याशयः । यथा—

मातर्भवानि मम पूर्वभवानि यानि पापानि तानि तव दर्शनतो गतानि ।

एतावदेव मम देवि ! परन्तु भूयाच्चित्तं मुरारिचरणे स्थिरतामुपेयात् ॥

नृपविषया यथा—

कामनीयकमधःकृतकामं काममक्षिभिरवेक्ष्य तदीयम् ।

कौशिकः स्वमखिलं परिपश्यन् मन्यते स्म खलु कौशिकमेव ॥

मुनिविषया यथा—

तद्विमृश्य मम संशयच्छित्पि स्फीतमत्र विषये सहसाऽवम् ।

श्रूयतां भगवतः श्रुतिसारैरथ वाग्भिरघमर्षणऋग्भिः ॥

गुरुविषया यथा—

पुरुषायुषजीविन्यो निरातङ्का निरीतयः ।
यन्मदीयाः प्रजास्तत्र हेतुस्त्वद्ब्रह्मवर्चसम् ॥

भ्रातृविषया यथा—

देशे देशे कलत्राणि देशे देशे च बान्धवाः ।
तं तु देशं न पश्यामि यत्र भ्राता सहोदरः ॥

सुतविषया यथा—

अनेन कस्यापि कुलाङ्कुरेण स्पृष्टस्य गात्रेषु सुखं ममैवम् ।
कां निर्वृतिं चेतसि तस्य कुर्याद् यस्याऽयमङ्कात्कृतिनः प्ररूढः ॥

व्यभिचारी प्रधानो यथा—

यावत्सखे ! प्रियां स्वप्ने प्रार्थये मानिनीमहम् ।
तावच्छठेन विधिना निद्रैवाऽपहृता मम ॥

अत्र विधिं प्रत्यसूया प्राधान्येन व्यज्यते । एवमन्येऽपि ज्ञेयाः ॥ १४ ॥

तानेव व्यचारिभावानाह—

**निर्वेदग्लानिशङ्काख्यास्तथाऽसूयामदश्रमाः ।**
**आलस्यं चैव दैन्यं च चिन्ता मोहो धृतिः स्मृतिः ॥ १५ ॥**
**व्रीडा चपलता हर्ष आवेगो जडता तथा ।**
**गर्वो विषाद औत्सुक्यं निद्राऽपस्मार एव च ॥ १६ ॥**
**सुप्तं विबोधाऽमर्षश्चाप्यवहित्था तथोग्रता ।**
**मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥ १७ ॥**
**त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।**
**त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥ १८ ॥**

निर्वेदेति । एतेषां स्वरूपाणि– स्वावमानो निर्वेदः । ग्लानिः कार्याक्षमत्वम् । अनिष्टचिन्तनं शङ्का । असहिष्णुता असूया । आनन्दजो मोहो मदः । रत्यादिजनितः खेदः श्रमः । इष्टाऽनादर आलस्यम् । शरीरमालिन्यकारको मनोविकारो दैन्यम् । चिन्ता ध्यानम् । दुःखानुचिन्तनजन्यं भयं मोहः । ज्ञानाऽजननमित्यर्थः (१) । सम्पूर्णफलानामीप्सा धृतिः । अनुभूतार्थविषयकं संस्कारजन्यं ज्ञानं स्मृतिः । मनः-सङ्कोचो व्रीडा । मात्सर्यादिकृताऽनवस्थितिश्चपलता । स्तुत्यादिकृतो मनःप्रसादो हर्षः । राजगजादिकृतं भयमावेगः । कर्तव्यमूढत्वं जडता । विद्यादिकृतमदजनितः

(१) वाक्यमिदं ख-पुस्तके नास्ति ।

संमोहो गर्वः । उपायाभावज्ञानजनिता बलहानिर्विषादः । इष्टावाप्तौ कालक्षेपाऽसहिष्णुता औत्सुक्यम् । श्रमादिना नयनोन्मीलनं निद्रा । आधिविशेषोज्वरश्चाऽपस्मारः । स्वप्नगतो विषयानुभवः सुप्तम् । निद्रापगमजन्यमनःप्रसादो विबोधः । निन्दादावभिनिवेशोऽमर्षः । लज्जादिना हर्षाद्याकारगोपनमवहित्था । अपमानादिकृतश्चित्तक्षोभ उग्रता । नीतिशास्त्रेणार्थनिश्चयो मतिः । वातादिकृतो ज्वरो व्याधिः । कामादिकृतश्चित्तविभ्रम उन्मादः । शस्त्रादिकृतः प्राणवियोगो मरणम् । इदं तु मरणं न व्यभिचारिभावः, रसविच्छेदहेतुत्वेन तस्याऽवर्णनीयत्वात् । किन्तु मरणेच्छैव । विद्युदादिकृतं भयं त्रासः । सन्देहजन्यो विकारो वितर्कः ॥ १५–१८ ॥

इदानीं रसाभासभावाभासानाह—

**सर्वसाधारणप्रेमप्रश्रयादिस्वरूपया ।**

**अनौचित्या रसाभासा भावाभासाश्च कीर्तिताः ॥ १९ ॥**

सर्वेति । एकस्या नायिकाया अनेकनायकविषयावलोकनादिवर्णनयाऽनेकविषयप्रेमकथनमनौचिती, तया रसोऽपि रसाभासो भवति । एवमेकस्यानेकदेवतादिविषयकरत्यादिवर्णनया रतिकथने भावाभास इत्यर्थः । प्रश्रयो नम्रता नतिरिति यावत् । यथा—

सम्भाविताऽस्त्वया के तरुणि ! न नयनाञ्चलेन संवलिता ।
स्मितसुधयाऽऽहितगौरवमधुना वचनं श्रवःसुधा केषाम् ॥

अयं रसाभासः । भावाभासो यथा—

अन्यैः समोऽसि वरदो देवैरपि जगत्पते ! ।
तथापि त्वामहं वन्दे कालकूटस्य धारणात् ॥

एवं गुर्वादिविषयाण्यूह्यानि ॥ १९ ॥

**भावस्य शान्तिरुदयः सन्धिः शबलता तथा ।**

**काव्यस्य काञ्चनस्येव कुङ्कुमं कान्तिसम्पदे ॥ २० ॥**

भावस्येति । भावस्य व्यभिचारिभावादेः शान्तिर्नाशः, उदय आधिक्यम्, भावद्वयस्य क्रमेण कथनं सन्धिः, बहूनां कथनं शबलता । एतान्यपि काव्यस्य कान्तिसम्पदे, कान्तिः सरसत्वम्, तत्सम्पदे भवन्तीत्यर्थः । शोभाजनकानीत्याशयः । अत्र 'पर्यायप्रवृत्तौ सन्धिरपर्यायप्रवृत्तौ शबलते'ति केचित् । उदाहरणान्युक्तानि ॥ २० ॥

रीतीराह—

**आचतुष्टयमासप्त यथेष्टैरष्टमादिभिः ।**

**समासः स्यात् पदैर्न स्यात् समासः सर्वथाऽपि च ॥ २१ ॥**

**पाञ्चालिकी च लाटीया गौडीया च यथारसम् ।**

**वैदर्भी च यथासङ्ख्यं चतस्रो रीतयः स्मृताः ॥ २२ ॥**

आचतुष्टयमिति। द्वित्रिचतुःपदानां समासे पाञ्चाली, पञ्चषट्सप्तपदानां समासे लाटीया, अष्टमादियथेष्टपदानां समासे गौडीया, सर्वथा समासाभावे वैदर्भीति। यथारसमिति। शृङ्गारे वैदर्भी रौद्रवीरयोर्गौडीया अन्यत्र पाञ्चाली लाटीयेत्यर्थः। एवञ्च-रसानुगुणत्वेन रसाऽङ्गतोक्तेः शब्दालङ्काराणां वर्णधर्मत्वेन तद्वैलक्षण्यं लभ्यते। क्रमेणोदाहरणानि—

मदननृपतियात्राकालविज्ञापनाय
स्फुरति जलधिमध्ये ताम्रपात्रीव भानुः।
अयमपि पुरुहूतप्रेयसीमूर्ध्नि पूर्णः
कलश इव सुधांशुः साधुरुल्लालसीति॥

इयं पाञ्चाली—

अस्ताद्रिलम्बिरविबिम्बतयोदयाद्रि-
चूडोन्मिषत्सकलचन्द्रतया च सायम्।
सन्ध्याप्रनृत्तहरहस्तगृहीतकांस्य-
तालद्वयेव समलक्ष्यत नाकलक्ष्मीः॥

इयं लाटीया।

एतद्गत्ताऽसिवातप्लवदलगण्डद्वंशसान्द्रेन्धनैतद्-
दोर्दण्डोद्यत्प्रतापज्वलदनलमिलद्धूमधूम्रभ्रमाय।
एतद्विजैत्रयात्रासमसमरभरं पश्यतः कस्य नासी-
देतत्सासीरवाजिव्रजखुररजरजोराजिराजिस्थलीषु॥

इयं गौडीया।

निविशते यदि शूकशिखापदे सृजति सा कियतीमिव न व्यथाम्।
मृदुतनोर्वितनोतु कथं न तामवनिभृत्तु निविश्य हृदि स्थितः॥

इयं वैदर्भी॥ २१-२२॥

मधुराप्रौढापरुषाललिताभद्राख्याः पञ्च वृत्तीर्लक्षयति—

**मधुरायां समाक्रान्ता वर्गस्थाः पञ्चमैर्निजैः।**
**लकारश्च लसंयुक्तो ह्रस्वव्यवहितौ रणौ॥ २३॥**

मधुरायामिति। यत्र काव्ये कवर्गादिस्थितान्यक्षराणि निजैः पञ्चमैर्ङकाराद्यैः समाक्रान्तानि तथा लकारो लकारेणैव संयुक्तो रकारणकारौ ह्रस्वाक्षरव्यवहितौ भवतः, सा मधुरा वृत्तिरित्यर्थः। वक्ष्यमाणमुदाहरणम्—'अङ्गभङ्गोल्लसल्लीला तरुणी स्मरतोरणम्।' इति। अत्र ङकाराधःस्थौ गकारौ लकारेण संयुक्तो लकारो रकारणकारयोश्च लघ्वक्षरान्तरितत्वमिति॥ २३॥

**रेफाक्रान्ता वर्ग्यणाष्टवर्गात्पञ्चमाद् ऋते।**
**कपाक्रान्तस्तवर्गः स्यात् प्रौढायां च कमूर्धता॥ २४॥**

रेफेति । यत्र काव्ये टवर्गं पञ्चमाक्षराणि च वर्जयित्वाऽन्यानि वर्ग्याक्षराणि थकाकारणकारौ च रेफाक्रान्तानि, तवर्गश्च ककारपकाराभ्यामाक्रान्तः, तकारश्च ककारस्योर्ध्वमुच्चार्यते, तत्र प्रौढेत्यर्थः । कमूर्धता, ककारस्य मूर्धनि तकारो यस्यामिति विग्रहः । वक्ष्यत उदाहरणम्—'तर्कचातुर्यपूर्णोक्तिप्राप्तोत्कटधियां वृथा ।' अत्र ककारथकारणकारा रेफाक्रान्ताः, तकारः ककारपकाराभ्यामाक्रान्तः, उत्कटेत्यत्र ककारस्य मूर्धनि तकार इति ॥ २४ ॥

सर्वैरूर्ध्वैः सकारस्य सर्वे रेफस्य सर्वथा ।
रहौ द्वेधा तु संयोगः परुषायां शषौ स्वतः ॥ २५ ॥

सर्वैरिति । यत्रान्ये वर्णाः सकारस्योर्ध्वम्, अन्ये वर्णाश्च रस्योपर्यधोभावमापन्नाः, रकारहकारौ परस्परमुपर्यधोभावमापन्नौ, शकारषकारौ च स्वतन्त्रौ वर्णान्तरासंयुक्तौ, तत्र परुषेत्यर्थः । सर्वथा उपर्यधोभावेन, द्वेधा उपर्यधोभावेन, स्वतः असंयोगेनेत्यक्षरार्थः । वक्ष्यत उदाहरणम्—'वीप्सोत्सर्पन्मुखाग्रार्द्रं बर्ही जह्रे कुशस्तृषम् ।' अत्र सकारोर्ध्वं पकारतकारौ पकारगकारदकाराश्च रकारस्योपर्यधःस्थायिनो रकारहकारौ च परस्परमुपर्यधोभावमापन्नौ शकारषकारौ च स्वतन्त्रौ, अतः परुषेति ॥२५॥

लकारोऽन्यैरसंयुक्तो लघवो घभधा रसाः ।
ललितायां तथा शेषा भद्रायामिति वृत्तयः ॥ २६ ॥

लकार इति । यत्र लकारोऽन्यैर्वर्णैरसंयुक्तो घकारभकारधकाररेफसकारा लघव उच्चार्यन्ते, तत्र ललितेत्यर्थः । वक्ष्यमाणमुदाहरणम्—'ललना रभसं धत्ते घने'ति । अत्र लकारोऽन्यैरसंयुक्तो रेफभकारसकारधकारघकाराश्च लघव उच्चार्यन्त इति । अत्र अन्यैरिति कथनाल्लकारस्य लकारेण संयोगेऽपि न दोषः । लघुत्वं चात्राऽसंयुक्तत्वम् । तेनोदाहरणे सकारधकारयोर्गुरुत्वेऽपि न क्षतिः । तथा शेषा इति । चकारादयोऽन्यैः संयुक्ता असंयुक्ता वा यत्रोच्चार्यन्ते सा भद्रेत्यर्थः । वक्ष्यत उदाहरणम्—'टोपे महीयसी'ति । अत्र सर्वेषामसंयुक्तत्वात् ॥ २६ ॥

अङ्गभङ्गोल्लसल्लीला तरुणी स्मरतोरणम् ।
तर्ककर्कशपूर्णोक्तिप्राप्तोत्कटधियां वृथा ॥ २७ ॥

अङ्गभङ्गेति । तर्ककर्कशबुद्धीनां कामतोरणरूपा तरुणी वृथा, न सुखाय । साहित्यपरिशीलनसरसानामेव सुखदेति भावः ॥ २७ ॥

वीप्सोत्सर्पन्मुखाग्रार्द्रं बर्ही जह्रे कुशस्तृषम् ।
ललना रभसं धत्ते घनाटोपे महीयसि ॥ २८ ॥

वीप्सेति । घनानां मेघानाम् आटोपे विस्तारे बर्ही मयूरः, वीप्सया वारंवारम् उत्सर्पत् यन्मुखाग्रं तदार्द्रं यथा स्यात्तथा तृषं जह्रे अत्यजत, ललना तु रभसं मुदं धत्ते

दधातीत्यर्थः। काव्यप्रकाशे तु-"उपनागरिकापरुषाकोमलेति वृत्तित्रयमभिधाय, एतासामेव वैदर्भीगौडीपाञ्चालीति संज्ञात्रयं वामनादिभिरुक्तमतो वृत्तीनां रीतीनां च न भेद" इत्युक्तम्। अत्र तु 'रीतीनां समासव्यङ्ग्यत्वं वृत्तीनां तु वर्णानुपूर्वीव्यङ्ग्यत्व'-मिति भेद उक्तः ॥ २८ ॥

महादेवः सत्रप्रमुखमखविधैकचतुरः
सुमित्रा तद्भक्तिप्रणिहितमतिर्यस्य पितरौ।
मयूखस्तेनासौ सुकविजयदेवेन रचिते
चिरं चन्द्रालोके महति ऋतुसङ्ख्यः सुखयतु ॥ २९ ॥

इति श्रीपीयूषवर्षपण्डितजयदेवकृते चन्द्रालोकालङ्कारे रसरीति-वृत्तिविचारो नाम षष्ठो मयूखः।

विश्वेश्वरापरख्येन गागाभट्टेन धीमता।
चन्द्रालोकस्य विवृतिर्मयूखेऽङ्गसमे कृता।

इति गागाभट्टकृतचन्द्रालोकटीकायां राकागमे षष्ठो मयूखः

## सप्तमो मयूखः।

रसस्वरूपं निरूप्य तस्य व्यञ्जनैकगम्यतया व्यञ्जनां निरूपयति श्लोकद्वयेन—

वृत्तिभेदैस्त्रिभिर्युक्ता स्रोतोभिरिव जाह्नवी।
भारती भाति गम्भीरा कुटिला सरला क्वचित् ॥ १ ॥
साम्मुख्यं विदधानायाः स्फुटमर्थान्तरे गिरः।
कटाक्ष इव लोलाक्ष्या व्यापारो व्यञ्जनात्मकः ॥ २ ॥

वृत्तिभेदैरिति। व्यञ्जनावृत्या गम्भीरा, लक्षणया कुटिला, शक्त्या सरलेत्यर्थः। शक्यलक्ष्यान्यतरप्रतीत्युत्तरप्रतीतिजनकत्वं गम्भीरत्वम्। शक्यार्थस्य त्यागेनाऽत्यागेन वाऽर्थान्तरप्रतीतिजनकत्वं कुटिलत्वम्। अविलम्बेनार्थप्रत्यायकत्वं सरलत्वम्। स्रोतस्सु अगाधत्ववक्रत्वऋजुत्वानि। सांमुख्यमिति। अर्थान्तरे शक्यलक्ष्यार्थभिन्नेऽर्थे, विषयत्वं सप्तम्यर्थः, सांमुख्यं प्रतीतिं विदधानायाः तद्विषयकप्रतीतिं कुर्वतः शब्दस्य यो व्यापारः, स व्यञ्जना। पुंसि सांमुख्यमभिलाषं कुर्वत्या लोलाक्ष्याः कटाक्षो यथे-त्यर्थः। अयमाशयः—'गङ्गायां घोष' इत्यादौ शैत्यपावनत्वादि,

मुखं विकसितस्मितं वशितवक्रिमप्रेक्षितं
समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः।

उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं
बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ॥

इत्यादौ विकासादीनां पुष्पादिधर्मत्वेन स्मितादावनुपपत्तेः 'विकसितत्वमितसमुच्छलिताऽपास्तसंस्थामुकुलितोद्धरमोदते'शब्दैः प्रसृतत्वाऽऽयतत्वोल्लसितत्वाऽनेकविषयकसञ्चारित्वोद्भिन्नत्वयोग्यत्वाऽनियन्त्रितत्वलक्षणया रमणीयतातिशययुक्ताऽनुरागित्वसकलवशीकारित्वाऽनुरागातिशयालिङ्गनयोग्यत्वरमणीयत्वस्पृहणीयत्वानि काव्यवासनापरिपक्वबुद्धिभिः सहृदयैः प्रतीयन्त इति निर्विवादम् । तत्प्रतीतिश्च शब्दान्तरेण वृत्त्यन्तरेण वाऽसम्भाविनी तस्यैव शब्दस्य वृत्त्यन्तरं कल्पयति । सा वृत्तिर्व्यञ्जना । तथा हि—न तत्र शक्तिः सम्भवति, सङ्केताऽग्रहात्। 'गङ्गायास्तीरे' इत्यादावपि तत्प्रतीत्यापत्तेः । 'गङ्गा पावनी'त्यादावन्यतरवैयर्थ्यापत्तेश्च । नापि लक्षणा, अन्वयानुपपत्तेस्तात्पर्याऽनुपपत्तेर्वाऽभावेन तद्बीजस्याभावात् । तटादेर्मुख्यत्वाभावेन तद्बाधाद्यभावाच्च । न हि तटं गङ्गापदस्य मुख्योऽर्थः, न वा गङ्गानिष्ठशैत्यपावनत्वादि तीरसम्बन्धि, न वा शैत्यादिप्रतीतिः प्रयोजनवतीति न किमपि लक्षणाबीजमस्ति । प्रयोजनान्तरकल्पनायां शैत्यादिप्रतीतेः प्रयोजनत्वं न स्यात् । न चास्तु शैत्यादिविशिष्टतीरे लक्षणेति वाच्यम्, गङ्गानिष्ठशैत्यादिविशिष्टतीरप्रतीतेर्लक्षणाफलत्वेन तद्विशिष्टतीरत्वस्य पूर्वमज्ञातत्वेन लक्ष्यतावच्छेदकत्वानुपपत्तेः । न च पावनत्वादिवैशिष्ट्यस्यान्यत्रावगतस्य लक्ष्यतावच्छेदकत्वमस्त्विति वाच्यम् । तद्विशेषप्रतीत्यनापत्तेः । अतस्तत्र व्यञ्जनैव वृत्त्यन्तरमिति । किञ्च—व्यञ्जनाऽनङ्गीकारे 'काव्यं रसयती'त्यनुभवसिद्धायाः काव्याज्जायमानाया रसप्रतीतेः शाब्दत्वं न स्यात् । न हि रसो रसपदेन शृङ्गारादिपदेन वाऽभिधीयते । तत्प्रयोगेऽपि विभावाद्यप्रयोगे रसस्याप्रतीतेः । तदप्रयोगेऽपि विभावादिप्रयोगे प्रतीयमानत्वाच्च । नापि विभावादिपदेन लक्षणीयः, मुख्यार्थबाधाभावात् । अतो विभावाद्यभिधानेन प्रतीयमानो रसो व्यङ्ग्य एव । किञ्च—अर्थश्लेषादौ प्रकरणादिना शक्तेर्नियन्त्रितत्वेन अनभिधेयार्थान्तरे तदसम्भवात्तस्य तेन सहोपमादेः शक्त्या लक्षणया वा प्रतीत्यसम्भवाद् व्यञ्जनयैव तत्प्रतीतिः । किञ्चोत्तमादिकाव्येषु क्वचिद्विधिनिषेधादयो व्यङ्ग्याः । तत्र शक्तिलक्षणयोरसम्भवादावश्यकी व्यञ्जना ।

ननु शाब्दबोधमात्रे तात्पर्यज्ञानस्य हेतुताकल्पनया सर्वत्रोपपत्तेरलं व्यञ्जनावृत्त्यन्तरेण । तथा हि—'अस्माच्छब्दाद्वाक्याद्वाऽयमर्थो बोद्धव्य' इतीच्छा तात्पर्यम् । तच्च अज्ञाततात्पर्यकवाक्याद् बोधाऽनुत्पत्त्या शाब्दबोधमात्रे हेतुः । ईश्वरतात्पर्यमादाय च शुकादिवाक्यजन्यबोधे न व्यभिचारः । एवं च यावच्छब्दात्प्रतीयते तस्य शब्दार्थत्वकल्पनान्न व्यञ्जनायाः प्रयोजनमिति चेन्न, शब्दजन्यप्रतीतिविषयमात्रे शक्तिकल्पनायां 'पूर्वो धावती'त्यादवपरस्यापि शब्दार्थत्वापत्तेः । 'पुत्रस्ते जात' इत्यादिवाक्येन जायमानहर्षस्यापि वाच्यतापत्तेश्च । मन्त्रनिष्ठयोग्यताज्ञानद्वारेण प्रतीयमानविनियोगस्य शाब्दतया श्रौतविनियोगतुल्यतापत्तेश्च । किञ्चैवम्, लक्ष्येऽपि

शक्तिकल्पनाल्लक्षणोच्छेदापत्तिः । किञ्च-व्यङ्ग्यं द्विविधम्, रसरूपं वस्त्वलङ्काररूपं च । तत्र रसरूपस्य तु न वाच्यता । रसशृङ्गारादिपदप्रयोगे तदज्ञानात् । विभावादिप्रयोगे तज्ज्ञानाच्च । अतोऽन्वयव्यतिरेकाभ्यां विभावाद्यभिधानेनैव प्रतीयत इति न कस्यापि वाच्यः । मुख्यार्थबाधादिलक्षणाहेत्वभावाच्चो लक्षणीयोऽपि । अर्थान्तरसङ्क्रमितात्यन्ततिरस्कृतवाच्ययोर्व्यङ्ग्यं लक्षणामूलकमेवेति तस्य वस्तुरूपस्यापि न वाच्यत्वसम्भवः । एवं शब्दशक्तिमूलेऽपि व्यङ्ग्यस्यार्थान्तरस्य तेन सहोपमादेरलङ्कारस्य वा शक्तिनियन्त्रणेनैव न वाच्यत्वसम्भवः । अर्थशक्तिमूलेऽभिहितान्वयवादिमते आकाङ्क्षादिवशात् प्रतीयमानोऽन्वयविशेषरूपो वाक्यार्थोऽपि न वाच्यः । तत्र तदुत्तरप्रतीयमानस्य व्यङ्ग्यस्य(१) कथं वाच्यत्वसम्भावना । अन्विताभिधानवादेऽपि व्यवहारादिसङ्केतविषयस्यैव प्रतिभासनादसङ्केतितस्य पदार्थस्य वाक्यार्थस्य तद्विशेषस्य वा 'निःशेषच्युते'त्यादावर्थान्तररूपस्य विध्यादेर्व्यङ्ग्यभूतस्य कथं वाच्यत्वसम्भावना । किञ्च—न व्यङ्ग्यस्य वाच्यत्वं सम्भवति । तस्य वाक्यार्थविरुद्धत्वात् । 'गच्छ गच्छसि चे'त्यादौ विधिरूपो वाक्यार्थो निषेधरूपं व्यङ्ग्यम् ।

मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमुदाहरन्तु ।
सेव्या नितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम् ॥

इत्यादौ संशयरूपो वाक्यार्थः । शान्तशृङ्गारान्यतरगतनिश्चयगतं व्यङ्ग्यम् ।

कः शूरताऽनुशय एव रणेऽरयो यत्
शैवापदीं भुरममी निहता वहन्ति ।
यच्चेदृशेऽपि भिदां गमितः पुरस्ते
मन्तुर्भवत्कुलधुरन्धर एव भानुः(२) ॥

इत्यादौ वाक्यार्थो निन्दा, व्यङ्ग्या च स्तुतिरिति । एवम्, वाक्यार्थप्रतीत्युत्तरकाले व्यङ्ग्यप्रतीतेः कालभेदेन तस्या न वाच्यत्वसम्भवः । एवम्, वाक्यार्थस्य पदमात्रबोध्यत्वम्, व्यङ्ग्यस्य तु पदतदेकदेशपदार्थवर्णघटनाप्रकरणादिसहायकृतबुद्धिविशेषगम्यत्वमिति निमित्तभेदश्च । वाच्यस्य बोध्यमात्रप्रतीतिः कार्यम्, व्यङ्ग्यस्य च विदग्धचमत्कार इति कार्यभेदः । किञ्च—वाक्यार्थः सर्वान्प्रति एक एव नियतः, व्यङ्ग्यस्तु 'गतोऽस्तमर्क' इत्यादावनेक इति सङ्ख्याभेदः । एवम्, विषयभेदादिनापि स्पष्टे भेदे

(१) पावनत्वस्य—इति क-पुस्तके ।

(२) शैवापदीं शिवा( शृगाली )पदसम्बन्धिनीम्, मन्तुः पूज्यं ज्ञातुः मानयितुरिति यावत् । राजन् ! स्वकीयशूरताविषये किमित्येवं पश्चात्तप्यते भवता, यत्—'समरे निहताः शत्रवो मांसलुब्धशृगालीपदाक्रमणभारदोःस्थ्यं वहन्तोऽपि सूर्यं मे मूलपुरुषं भित्त्वा गता' इति । सकलमेतच्चेष्टितं तवैवेति भावः ।

कथं व्यङ्ग्यस्य वाच्यत्वसम्भावना । किञ्च—

वाणीरकुडंगुड्डीणसउणिकोलाहलं सुणन्तीए ।
घरकम्मवावडाए बहुए सीअन्ति अङ्गाइं(१) ॥

इत्यादौ सङ्केतस्थानागमनरूपो व्यङ्ग्यार्थः । अङ्गाऽवसादरूपवाच्यार्थो मध्यम-काव्यतत्कार्यभूतसम्भोगादिरथप्रतीयमानः शक्तिलक्षणयोरविषयः कस्य व्यापारस्य वाच्यनियतसम्बन्धस्य अनियतसम्बन्धस्य सम्बद्धसम्बन्धस्य च व्यङ्ग्यस्य प्रतीत्य-सम्भवाद् विषयः । न च सर्वोऽपि व्यङ्ग्यो लक्षणाविषयः, लक्षणाया वाच्यनियत-सम्बन्धिविषयत्वेन मुख्यार्थबाधादित्रयसापेक्षत्वेन च, विवक्षितान्यपरवाच्ये ध्वनौ व्यङ्ग्यप्रतीत्यसम्भवापत्तेश्च । लक्षणायाः शब्दनिष्ठत्वेन व्यञ्जनायाः शक्यलक्ष्यार्थ-भिन्नादिनिष्ठत्वेन विरुद्धधर्मतया लक्षणात्वासम्भवाच्च । नत्वनुमानेन अर्थापत्त्या वा व्यङ्ग्यप्रतीतिः । तेन व्यञ्जनाख्यो व्यापारः कल्प्यते ।

बालकैः परिवृतो निजाङ्गणे केलिमाचर रघूत्तम ! स्वयम् ।
निष्कुटेषु वसताऽधुना हरेः पोतकेन शुनको निपातितः ॥

इत्यादौ बहि(२)र्भ्रमणस्य भयकारणनिर्देशाद् भ्रमणनिवृत्तिर्व्यङ्ग्या । अतो व्यञ्जना वृत्तिरावश्यकीति दिक् ।

सा च व्यञ्जना द्विधा । शक्तिमूला लक्षणामूला च । आद्या नानार्थशब्दघटित-वाक्यात् प्रकरणादिसहकारेणैकवाक्यार्थबोधेऽर्थान्तरबोधस्य प्रकरणादिनियन्त्रित-शक्त्याऽसम्भवान्मुख्यार्थबाधाद्यभावेन लक्षणाया अप्यसम्भवाद् व्यञ्जनयैवोपपत्ति-रावश्यकी । यथा—

भद्रात्मनो दुरधिरोहतनोर्विशाल-
वंशोन्नतेः कृतशिलीमुखसङ्ग्रहस्य ।
यस्याऽनुपप्लुतगतेः परवारणस्य
दानाम्बुसेकसुभगः सततं करोऽभूत् ॥

इति । यत्र तु द्वयोः प्रकरणं तत्रोभयशक्तिः । यथा पञ्चनलीवर्णने । यत्रापि श्रुता-ऽन्यथानुपपत्त्या अर्थद्वयभानं तत्रापि शक्तिः । यथा—

प्रियास्ते बभूवुर्भुजङ्गः कलङ्की पशुर्निम्नगा किञ्च नक्तञ्चरेन्द्रः ।
गुणेष्वेषु विश्वेश ! नूनं किमूनं मयि स्वामिनो यत्कृपायां विलम्बः ॥

अत्र सर्पत्वादिभानोत्तरं 'किमून'मित्यस्यान्यथानुपपत्त्या विटत्वादिभानम् ।

---

(१) वानीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वत्याः ।
गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि ॥
इति संस्कृतम् ।

(२) भीरुभ्रमणस्य—इति ख-पुस्तके ।

द्वितीया तु 'मुखं विकसिते'त्यादावुक्तैव। सापि द्विधा, गूढव्यङ्ग्या अगूढव्यङ्ग्या च। आद्या 'मुखं विकसिते'त्यादौ। परा 'उपदिशति कामिनीनां यौवनमद एव ललितानि' इत्यत्र वाक्यप्रयोक्तृत्वरूपोपदेशकत्वासम्भवादाविष्कारलक्षणयाऽनायासेन शिक्षादानं व्यज्यत इति। परन्तु गूढव्यङ्ग्यानां कचिद् व्यङ्ग्यतावच्छेदकभानाऽभानाभ्यां द्वैविध्यं बोध्यम्। वस्त्वलङ्कारभावादिव्यङ्ग्येषु तद्भानम्, रसव्यङ्ग्ये तदभानमिति। न हि व्यङ्ग्ये रसादौ शृङ्गारत्वादिभानम्। विगलितवेद्यान्तरत्वरूपभङ्गापत्तेः। अत एव भावानामिव न रसानां सन्धिशबलते इति दिक्॥ १-२॥

एवं व्यञ्जनां निरूप्य तत्प्रयोजनभूतध्वनिभेदानाह दशभिः—

अविवक्षितवाच्यस्य द्वौ भेदौ, वाच्यमेव चेत्।
अर्थान्तरे सङ्क्रमितमत्यन्तं वा तिरस्कृतम्॥ ३॥
द्वौ विवक्षितवाच्यस्य लक्ष्यालक्ष्यक्रमात्मकौ।
चत्वारिंशद् युतैकेन भेदाः षट् चानयोः क्रमात्॥ ४॥
त्रिधा शब्दार्थतद्युग्मशक्तिजन्मा स्फुटक्रमः।
रसभावतदाभासप्रमुखस्त्वस्फुटक्रमः॥ ५॥
वस्त्वलङ्कारयोर्व्यक्तिः शब्दाद् द्वौ शब्दशक्तिजौ।
अर्थशक्तिसमुत्थस्य भेदा द्वादश, तद् यथा॥ ६॥
चत्वारो वस्त्वलङ्कारमलङ्कारस्तु वस्तु यत्।
अलङ्कारमलङ्कारो वस्तु वस्तु व्यनक्ति यत्॥ ७॥
वक्तुः कविनिबद्धस्य कवेर्वा प्रौढिनिर्मितः।
स्वसिद्धो वा व्यञ्जकोऽर्थश्चत्वारस्त्रिगुणास्ततः॥ ८॥
शब्दार्थोभयभूरेकः स च वाक्यैकसंश्रयः॥
पदैकदेशरचनावर्णवाक्यपदेष्वपि॥ ९॥
प्रबन्धे चेति षोढाऽसौ रसाद्याख्योऽस्फुटक्रमः।
एषु सप्तदशस्वेकं परित्यज्याऽस्फुटक्रमम्॥ १०॥
ये षोडशाद्या द्विगुणास्ते स्युर्वाक्यपदाश्रयात्।
प्रबन्धेऽपि द्वादश स्युरर्थशक्तिभुवो भिदः॥ ११॥
द्वात्रिंशद् द्वादशैकः षट्, सर्वे सङ्कलिता ध्वनेः।
भेदाः स्युरेकपञ्चाशत् संभिन्नास्तु सहस्रशः॥ १२॥

अविवक्षितेति । ध्वनिर्द्वेधा, अविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्च । अविवक्षितं वाच्यं यस्मिन्, लक्षणामूलव्यङ्ग्य इत्यर्थः । तत्त्वं च—शक्यतावच्छेदकप्रकारेण विशेष्यतया क्रियान्वये तात्पर्यविषयत्वाभावः। अस्ति चेदम्—'छत्त्रिणो यान्ति' 'कुन्ताः प्रविशन्ति' 'गङ्गायां घोषः' 'सिंहो देवदत्त' इत्यत्र । छत्त्रिसमुदायत्वेन क्रियान्वयात् कुन्तानां प्रवेशान्वयोक्तेः पुरुषविशेषणत्वेन तदन्वयात् । स द्वेधा, अर्थान्तरसङ्क्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्च । अर्थान्तरसङ्क्रमितत्वं लक्ष्यार्थपरिणतत्वम् । यथा—

त्वामस्मि वच्मि विदुषां समुदायोऽत्र तिष्ठति ।
आत्मीयां मतिमास्थाय युक्तमत्र विधेहि तत् ॥

'अस्मी'त्यहमर्थे। अत्र 'वच्मी'ति स्वकर्तृककथनस्य मुखाद्वचननिःसारणादेव सिद्धेरनुपयुक्तं सामान्यविशेषभावसम्बन्धेन 'उपदिशामी'त्यर्थे लक्षणया परिणतम् । द्वितीयं यथा—

उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता चिरम् ।
विदधदीदृशमेव सदा सखे ! सुखितमास्स्व ततः शरदां शतम् ॥

अत्र 'उपकृत'मित्यपकारिणि बाधितं विरोधसम्बन्धेनाऽपकारित्वलक्षकम् । एवञ्च—अजहत्स्वार्थलक्षणामूलव्यङ्ग्यमाद्यं जहत्स्वार्थलक्षणामूलव्यङ्ग्यं द्वितीयमिति फलितम् । विवक्षितान्यपरेतेन लक्षणामूलव्यञ्जनाद्वैविध्येन लक्षणामूलध्वनिर्द्वेधेति भावः । विवक्षितान्यपरवाच्यस्य ध्वनेर्भेदमाह—द्वाविति । लक्ष्यव्यङ्ग्यक्रमोऽलक्ष्यव्यङ्ग्यक्रमश्चेत्यर्थः । लक्ष्यो ज्ञायमानो व्यङ्ग्यस्य क्रमः शब्दार्थशक्तिज्ञानक्रमो यस्मिन्निति विग्रहः । चत्वारिंशदिति । अनयोः लक्ष्यालक्ष्यक्रमयोः । एकेन युता चत्वारिंशत् षट् च, सप्तचत्वारिंशद् भेदा इत्यर्थः । वक्ष्यमाणैकपञ्चाशद्भेदमध्ये अविवक्षितवाच्यस्य भेदचतुष्टयं त्यक्त्वा सप्तचत्वारिंशद् भवन्तीत्याशयः । एतदेव प्रपञ्चयति—त्रिधेति । स्फुटक्रमः लक्ष्यव्यङ्ग्यक्रमः । शब्दशक्त्युद्भवोऽर्थशक्त्युद्भव उभयशक्त्युद्भवश्चेति त्रिधेत्यर्थः । रसेति । रसादिव्यङ्ग्यकः अस्फुटक्रमः, अलक्ष्यक्रमव्यङ्ग्य इत्यर्थः । शब्दशक्त्युद्भवस्य भेदद्वयमाह—वस्त्विति । वस्तुव्यङ्ग्यः अलङ्कारव्यङ्ग्यश्च शब्दशक्त्युभवो द्विधेत्यर्थः । अर्थशक्त्युद्भवस्य द्वादश भेदानाह—अर्थेति । अर्थरूपेण वस्तुना यत्राऽलङ्कारो व्यज्यते वस्तु वा व्यज्यते, अर्थरूपेणालङ्कारेण अलङ्कारो वस्तु वा व्यज्यते इति चत्वारो भेदा इत्यर्थः । एतेषां चतुर्णामर्थत्रैविध्येन त्रैविध्यमाह—वक्तुरिति । स्वतःसिद्धः, स्वतः सम्भवीत्यर्थः, कविप्रौढोक्तिनिर्मितः, कविकल्पितवक्तृप्रौढोक्तिनिर्मितोऽर्थस्त्रिधेत्यर्थः । शब्दार्थेति । उभयशक्त्युत्थो वाक्यमात्रनिष्ठत्वेनैकविध इत्यर्थः । अस्फुटक्रमस्य षड् भेदानाह—पदैकदेशेति । पदैकदेशः प्रकृतिप्रत्ययरूपः, रचना आनुपूर्वी, वर्ण उपग्रहः(?) उत्तमपुरुषादिश्च, प्रबन्धो वाक्यसमूहः । तद्गतत्वेन षड्विध इत्यर्थः । एष्विति । अविवक्षितवाच्यस्य द्वौ भेदौ शब्दशक्त्युद्भवस्य द्वौ भेदौ अर्थ-

शक्त्युद्भवस्य द्वादश अस्फुटक्रमव्यङ्ग्यश्चेति सप्तदशविधित्यर्थः । तेष्वस्फुटक्रमव्यङ्ग्यं विहाय षोडशानां पदवाक्यगतत्वेन द्वात्रिंशत्त्वमित्यर्थः । अर्थशक्त्युद्भवस्याऽन्यानपि द्वादश भेदानाह—प्रबन्धेऽपीति । सर्वान् ध्वनिभेदान् उपसंहरति—द्वात्रिंशदिति । सङ्कुलिता मिलिताः । सम्भिन्ना इति । अयं ध्वनिरयं ध्वनिर्वायमिति संशयविषयत्वेन प्रकृष्यमाणत्वप्रकर्षकत्वरूपानुग्राह्यानुग्राहकत्वेन एकव्यञ्जकानुप्रवेशेन च त्रिविधेन सङ्करेण परस्परनिरपेक्षया संसृष्ट्या च प्रस्तारः सम्भेदः । अनेन सहस्राः वेदखाब्धिवियच्चन्द्राः (१०४०४) एतावन्तो भेदा भवन्ति । इत्थं चात्र गणना—पदगतार्थान्तरसङ्क्रमिताऽविवक्षितवाच्यध्वनेः स्वेनान्यैश्च पञ्चाशद्भिर्भेदैः प्रत्येकं त्रिविधसङ्करे संसृष्टौ च तस्य ध्वनेश्चतुरधिकद्विशतरूपत्वम् । एवं रीत्या एकपञ्चाशतां गणन उक्तसङ्ख्या स्फुटा । न च प्रथमस्यैकपञ्चाशता सह चातुर्विध्ये गणिते द्वितीयस्य प्रथमेन सह चातुर्विध्यं पूर्वगणनायामेव गणितमिति द्वितीयस्य पञ्चाशतैव सह चातुर्विध्यं गणनीयम् । एवम्, तृतीयादेरपि पूर्वपूर्वत्यागेनैव चातुर्विध्यगणनायां चतुरधिकत्रिशतोत्तरपञ्चसहस्राण्येव भवन्ति । यथा—

'जातिश्चतुर्भिर्जात्याद्यैर्विरुद्धा स्याद् गुणैस्त्रिभिः ।
क्रिया द्वाभ्यामथ द्रव्यं द्रव्येणैवेति तद्दश ॥'

इति विरोधालङ्कारस्य दशविधत्वमिति वाच्यम् । प्रतियोगिभेदेन भेदस्य भिन्नतया तत्तत्सङ्करसंसृष्ट्यादिकृतभेदानामपि भिन्नत्वात् ।

अविवक्षितवाच्यो विवक्षिताऽन्यपरवाच्यश्च । आद्यो द्विधा, अर्थान्तरसङ्क्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्च । द्विरूपोऽपि स पदगतो वाक्यगतश्च । यत्रैकमेव पदं परिवृत्त्यसहं तदर्थव्यञ्जकम्, तत्र पदगतः । तादृशपदवत्त्वेनैव तत्काव्यस्य ध्वनित्वम्, एकदेशस्थितभूषणेन कामिनीव । यत्रानेकपदानि परिवृत्त्यसहानि तदर्थव्यञ्जकानि, तत्र वाक्यगतः । एवमाद्यस्य चत्वारो भेदाः । द्वितीयोऽपि असंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यश्चेति द्विधा । आद्यः—रसभावतदाभासभावोदयभावशान्तिभावसन्धिभावशबलत्वविषयो नामधातुरूपप्रकृतिभागसुप्तिङ्रूपविभक्तिभागोपसर्गादिरूपपदैकदेशपदवाक्यप्रबन्धवर्णरचनानिष्ठतया षड्विधः । द्वितीयस्तु—उभयशक्त्युत्थः शब्दशक्त्युत्थोऽर्थशक्त्युत्थ इति त्रिधा । शब्दशक्त्युत्थत्वम्, यत्र तेनैव शब्देन तदर्थप्रतीतिर्न पर्यायान्तरेण । तेन 'भद्रात्मन' इत्यादावभिधामूलव्यञ्जकेऽप्यर्थभेदो ज्ञेयः । यत्र पर्यायान्तरेणापि तदर्थप्रतीतिः, तत्रार्थशक्तिमूलकत्वम् । यत्रोभयरूपेण तदर्थप्रतीतिः, तत्रोभयशक्तिमूलत्वम् । शब्दशक्त्युत्थोऽपि, व्यङ्ग्यस्य वस्तुरूपतयाऽलङ्काररूपतया च द्वैविध्येन द्विधा । सोऽपि पूर्ववत् पदगतो वाक्यगतश्चेति चतुर्धा । अर्थशक्त्युत्थोऽपि, अर्थस्य त्रैविध्येन त्रिधा । औचित्येन सम्भाव्यमान एकोऽर्थः । असन्नपि कविप्रौढोक्तिसिद्धो द्वितीयः । कविकल्पितवक्तृप्रौढोक्तिसिद्धस्तृतीयः । त्रिविधोऽपि वस्तुरूपोऽलङ्काररूप इति द्वैविध्येन द्वेधेति षोढा । षोढापि व्यञ्जकार्थ-

भेदेन द्वादशधा । द्वादशविधोऽपि पदवाक्यप्रबन्धगत इति षट्त्रिंशत्प्रकारः । प्रबन्धश्च सङ्घस्थितनानावाक्यसमुदायः । उभयशक्त्युत्थो वाक्यगत एक एव । एतेषां मेलनेन एकपञ्चाशद् भेदाः । तेषां परस्परं योजनं चतुर्धा । 'अयं वाऽयं वे'ति संशयरूपमेकम् । परस्परमङ्गाङ्गिभावरूपं द्वितीयम् । एकव्यञ्जकानुप्रवेशरूपं तृतीयम् । एतत्त्रितयरूपं सङ्करपदवाच्यम् । उक्तप्रकारतया भिन्नप्रकारेण संयोगः संसृष्टिः । एवमेकपञ्चाशतो भेदानामेकपञ्चाशता भेदैर्योजनेन तावद्गुणने सहस्रद्वयमेकाधिका षट्शती च । संयोजनं च संसृष्ट्यादिचतुःप्रकारैरिति तावतां चतुर्गुणने दशसहस्राणि चतुरधिकानि चत्वारि शतानि भवन्ति । न चैकपञ्चाशद्भेदेष्वेकस्य पञ्चाशता योजनेऽपि स्वस्य स्वेन कथं योजनमिति वाच्यम् । व्यक्तिभेदमादाय रसस्य विजातीयेनापि सङ्करादिसम्भवादिति काव्यप्रकाशादयः सर्वेऽप्यालङ्कारिकाः । क्रमेणोदाहरणानि । तत्र पदगतार्थान्तरसङ्क्रमिताऽविवक्षितवाच्यध्वनिर्यथा—

> यस्य मित्राणि मित्राणि शत्रवः शत्रवस्तथा ।
> अनुकम्प्योऽनुकम्प्यश्च स जातः स च जीवति ॥

अत्र द्वितीयमित्रादिपदानि आश्वस्तत्वनियन्त्रणीयत्वस्नेहपात्रत्वपराणि । दृढप्रतिज्ञत्वं व्यङ्ग्यम् । वाक्यगतोऽपि तादृशः, यथा—'त्वामस्मि वच्मी'त्युक्तम् । पदगताऽत्यन्ततिरस्कृतवाच्यध्वनिर्यथा—

> दृश्यन्ते बहुधा लोके व्यवहाराः कुशीलिनाम् ।
> व्यवसायास्तु धीराणां विमुह्यन्ति तथापि न ॥

अत्र 'विमुह्यन्ती'ति विफलत्वे लाक्षणिकम् । धीराणां महत्त्वं व्यङ्ग्यम् । वाक्यगतोऽपि तादृशः, यथा—'उपकृत'मित्युक्तम् । असंलक्ष्यक्रमव्यङ्ग्यरसध्वनिर्यथा—

> लावण्यं तदसौ कान्तिस्तद्रूपं स वचःक्रमः ।
> तदा सुधास्पदमभूदधुना तु विषोपमम् ॥

अत्र सर्वनाम्नामनुभवैकगोचरमर्थं प्रकाशयतां रसव्यञ्जकता । यथा वा—

> मानं धत्स्वेति वदतीं(?) सखीं भीताननाऽवदत् ।
> नीचैः शंस, श्रोष्यतीति प्रियो मे हृदये स्थितः ॥

अत्र 'भीतानने'ति पदं नीचैःशंसनस्य योग्यतां प्रकाशयद् रागातिशयव्यञ्जकम् । एवं भावादयोऽप्युदाहर्तव्याः । तत्र रसाभासो यथा—

> कस्मै पुण्यवतेऽधरं वितरसे(?), कं भाग्यवन्तं समा-
> लिङ्गस्याळि ! दृगन्तवक्रिमपदैः सङ्केतनं कस्य च ।
> अन्तर्ध्यायसि यं मुहुर्मुहुरहो ! जातः स लग्ने स कः
> को वा सूक्तिसुधाप्रवाहलहरीमध्ये निमग्नश्च ते ॥

अत्र व्यापाराणां बहुविषयकत्वप्रतीते रसाभासो व्यङ्ग्यः । भावाभासो यथा—

इत्थं कमलकुड्मलोपमकुचा स्मरस्मेरभा
विभावितत‍डिद्विभा नयनकोणशोणप्रभा ।
कथं मयि मनः प्रसन्नमिह सा करोति द्रुतं
क एव मम तद्वशीकृतिकृतावुपायो भवेत् ॥

अत्र अननुकूलकामिनीविषयत्वेन रतेरनुत्कृष्टतया तद्विषयकचिन्तादिभावानामनुत्कृष्टत्वमिति भावाभासः । भावशान्तिर्यथा—

तस्या नखक्षतविलेपनगोपनाय
किंवा नमस्यसि खलेति वचो निशम्य ।
कुत्रेति वाचमभिधाय समालिलिङ्ग
तां मानिनीमथ तथापि च विस्मृतं तत ॥

अत्र कोपशान्तिर्व्यङ्ग्या ।

विपक्षरामान्तरनामनि स्फुटे मत्तः श्रुते कोपनयाऽवधीरितम् ।
मामैक्षताऽक्ष्णोर्वलितैः क्षणेन न व्याजनिद्रामुपवाञ्छतीति ॥

अत्रोत्कण्ठारूपभावस्योदयो व्यङ्ग्यः । भावसन्धिः, स चैककालमेव तुल्यकक्षयोरास्वादः । शबलता च कालभेदेन निरन्तरतया पूर्वपूर्वोपमर्दनास्वादः । यथा—

सीतालिङ्गनसंरम्भः रुन्धुदूरयत्यतो हि माम् ।
भार्गवागमनाद्वीरसत्सङ्गो मे प्रियो मतः ॥

अत्रोत्कण्ठागर्वयोः साम्येन प्रतीतेः सन्धिः । यथा वा—

करः स्रजा सज्जतरस्तदीयः प्रियोन्मुखः सन् विरराम भूयः ।
प्रियाननस्यार्धपथं ययौ च प्रत्याययौ चाऽतिचलः कटाक्षः ॥

यथा वा—

अयोधि तद्वैर्यमनोभवाभ्यां तामेव भैमीमवलम्ब्य भूमिम् ।
आह स्म यत्र स्मरचापमन्तर्विछन्नं भ्रुवौ तज्जयभङ्गवार्ताम् ॥

अत्र पूर्वार्धे सन्धिः, उत्तरार्धे रतिरूपभावशान्तिः । अनयोरङ्गाङ्गिता च प्रतीयते । एवमन्यदूह्यम् । शबलता यथा—

नो भुक्ता सा रहसि मिलिता नोचितं मे कुलीन-
स्येदं किं सा मिलति न पुनः क्व श्रुतं क्वेहशी धीः ।
कोपेऽप्यस्या वदनकमलं कोमलं किन्तु वक्ष्य-
न्त्यस्मान् धीरा जनुषि सुकृती कोऽधरं पास्यतीति ॥

अत्र 'नो भुक्ते'ति पश्चात्तापः । 'नोचितं मे' इति मतिः । 'किं सा' इत्यौत्सुक्यम् । 'क्व श्रुत'मिति वितर्कः । 'कोपेऽपी'ति स्मृतिः । 'किं वक्ष्यन्ती'ति शङ्का । 'कोऽधर'मिति चिन्ता । एतेषां पूर्वपूर्वोपमर्दनं प्रतीयमाना शबलता चमत्कारभूमिः । पदांश-

मध्ये प्रकृतेर्यथा—

अपाकृतः प्रियो याति यावद् द्वित्रिपदानि सः ।
तावद् धृतः पाणिगलन्नीवीबन्धं तु कान्तया ॥

अत्र द्वारादिपदत्यागेन 'पदानी'त्युक्तम् । तेन द्वारपर्यन्तगमनेऽप्यसहिष्णुतया उत्कण्ठातिशयो व्यङ्ग्यः । धातोर्यथा—

रते गौरीकरद्वन्द्वपिनद्धे नयनद्वये ।
जयति स्थगितं शम्भोस्तार्तीयीकं विलोचनम् ।

अत्र जिधातुना स्थगितव्यापारसाम्येनान्यनेत्रयोः कराभ्यां पिधानम् । अस्य तु लोकोत्तरकर्मणेति तदेवोत्कृष्टमिति रत्युत्कर्षो व्यज्यते । अत एव जयतीत्युक्तं न शोभत इति ।

पवनो दक्षिणो दिक्षु पथि ताम्राङ्कुरास्तथा ।
बाणान् किरति चाऽनङ्गो मानिनीमानमा (१)गता ॥

अत्र 'किरती'ति तिङा किरणस्य साध्यत्वम्, 'गते'ति क्तवा निवृत्तेः सिद्धत्वम् । तेन किरणनिवृत्त्योः साध्यसाधनयोः पौर्वापर्यव्यतिक्रमरूपातिशयोक्त्या रसोत्कर्षो द्योत्यते । यथा वा—

लिखन्नास्ते प्रियो भूमिं सख्यश्चिरमुपोषिताः ।
मानं मुञ्च सखीदानीमवस्था कठिना च ते ॥

अत्र 'लिख'न्निति शतृप्रत्ययेन, 'आस्त' इति लटा, 'भूमि'मिति द्वितीयया च क्रमेणाऽबुद्धिपूर्वकत्वरूपमप्राधान्यम्, अवस्थानस्य प्रसादपर्यन्तत्वं, कर्मणोऽलक्ष्यत्वं च बोध्यते । तेनानुरागातिशयो व्यङ्ग्यः ।

ग्राम्यास्मि नागरीवृत्तेरनभिज्ञापि तादृशी ।
रमणानां मानसानि नागराणां हराम्यहम् ॥

अत्र 'नागराणा'मिति षष्ठ्या रतिकलाभिज्ञतारूप उत्कर्षो व्यज्यते ।

परं परशुरामस्य लोकाः ! शृणुत मे वचः ।
रमणीयः कुमारोऽयमासीद्दशरथात्मजः ॥

अत्र 'आसी'दिति लङाऽतीतकालविहितेन अचिरात्तदीयहिंसायाः सुकरत्वं व्यञ्जयति । तेन भार्गवक्रोधातिशयो व्यज्यते । वचनस्य यथा—

उत्कण्ठास्ताश्च सा प्रीतिस्तथा ते च गुणग्रहाः ।
भणितानि च सर्वेषामवसानमथेदृशम् ॥

अत्र उत्कण्ठादीनां नानाप्रकारकत्वेऽपि तत्कार्यस्य प्रेम्णः कदाचिदन्यथाभावाऽप्राप्तिरूपमेकजातीयत्वं बहुवचनैकवचनाभ्यां व्यज्यते । पुरुषस्य यथा—

(१) मानमा, मानस्य मा मानं परिमाणमित्यर्थः ।

किं नृत्यसि समालोक्य चेतश्चञ्चललोचनाः ।
सुश्रोमामान्तरीमाद्यां त्वं मन्ये विहरिष्यसि ॥

अत्र 'प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्चे'ति सूत्रेण युष्मदस्मदोर्योगे उत्तम-मध्यमयोर्विपर्ययेण विधानं प्रहासव्यञ्जकम् । पूर्वनिपातस्य यथा—

ते केचिदीश्वरप्रख्याः पुरुषा वसुधातले ।
येषु लब्धफलैश्वर्यो पराक्रमनयस्थितिः ॥

अत्र अधिकाऽच्त्वेऽपि पराक्रमस्य पूर्वनिपातेनावश्यकत्वरूपमभ्यर्हितत्वं व्यङ्ग्यम् ।

उपपदस्य यथा—

अयोधि राम ! दिवसं सैन्यैः सह तवारिभिः ।
भवांस्तु दिवसेनैकेनाऽयुद्ध, तदिहाऽद्भुतम् ॥

अत्र द्वितीयातृतीयाभ्याम् 'अत्यन्तसंयोगे द्वितीया' 'अपवर्गे तृतीये'ति विहिताभ्यां युद्धव्याप्तिरूपः क्लेशो भवत्पदार्थे युद्धफलजयप्राप्तिश्च व्यज्यते । अपवर्गस्य फलप्राप्तिरूप-त्वात् । प्रकृत्येकदेशस्य यथा—

अनङ्गरूपप्रतिमं नायकं वीक्ष्य भामिना ।
अनङ्गबाणसंविद्धा मुहुस्ताम्यत्यहो(?)ऽङ्गकैः ॥

अत्र कप्रत्ययरूपतद्धितेऽनाल्पार्थकेन अनुकम्पातिशयो व्यज्यते । एवं प्राद्युप-सर्गोऽपि प्रकर्षादिबोधकः । क्वचित्समुच्चितानां व्यञ्जकत्वं यथा—

रामोऽसौ विक्रमगुणैः प्रसिद्धो भुवनेष्विह ।
जानाति नो चेद् देवस्तमस्मद्भाग्यविपर्ययात् ॥

अत्र भुवनरूपप्रातिपदिकस्य बहुवचनस्य च । किञ्च'ऽस्मद्भाग्ये'त्यत्र न 'त्वद्भाग्ये'ति कृतम्, तेनाऽस्मदित्यस्य बहुवचनसिद्धतया सर्वाक्षेपकत्वम् । तथा 'भाग्यविपर्यया'दित्य-न्यथासम्पत्तिमुखेनोक्तम्, न त्वभाग्यादित्यभावमुखेन । अतस्तथा विधानेनाऽभाग्य-विरहेऽपि, 'भाग्यान्येव तादृशत्वेन परिणतानो'ति व्यज्यते । एवम् इमनिचादीनाम्,

तरुणिमनि कलयति कलामनुमदनधनुर्भुवोः पठत्यग्रे ।
अधिवसति सकलललनामौलिमियं चकितहरिणनयना ॥

अत्र 'तरुणिमनी'तीमनिचस्तरुणत्वपदेन, 'अनुमदनधनु'रित्यव्ययीभावस्य धनुः-समीप इत्यनेन, 'मौलिमधिवसती'ति कर्मभूताधारस्य च मौलौ वसतीत्यर्थेन तौल्येऽपि वाचकत्वेऽस्ति कश्चित्स्वरूपस्य विशेषो, यश्चमत्कारकारी, स एव व्यञ्जकः । तत्र त्व-शब्देन प्रकृतेः प्रौढत्वं व्यज्यते, इमनिचा तु तद्व्यतिरेको नवत्वम् । धनुःसमीप इत्यत्र धनुषोऽत्यन्तं गुणीभावः । अव्ययीभावे तु पूर्वपदार्थप्राधान्येऽप्युत्तरपदार्थस्य किञ्चि-देवाप्राधान्यम् । कर्मभूताधारस्थले तु व्याप्तिरवगम्यत इत्यवसेयम् । एवमन्येषामपि बोध्यम् । वाक्यगतं तूक्तम् । प्रबन्धगतं नाटकादौ । वर्णगतं रचनागतं च वृत्तिनिरूपणे

रीतिनिरूपणे च वक्ष्यते । एवमलक्ष्यक्रमव्यङ्ग्यः षोढा । इदानीं लक्ष्यक्रमव्यङ्ग्यभेदा उदाह्रियन्ते । तत्र शब्दशक्तिमूलो यथा—

भुक्तिमुक्तिकृदेकान्तसमादेशनतत्परः ।
कस्य नानन्दनिस्यन्दं विदधाति सदागमः ॥

अत्र काचित् सङ्केतदायिनं प्रशंसति । तत्र सदागमपदेन स्तुतिर्व्यज्यते ।

रुधिरविसरप्रसाधितकरवालकरालरुचिरभुजपरिघः ।
झटिति भ्रुकुटिविटङ्कितललाटपट्टो विभाति नृपभीमः ॥

अत्र भीमपदेन भीषणीयार्थकेनोपमाध्वनिः । पद्ययोः परिवृत्त्यसहत्वादिमौ पदगतौ ।

शनिश्चाप्यशनिश्चापि हन्ति तं, यत्र कुप्यसि ।
आस्युदारोऽनुदारश्च यत्रैव त्वं प्रतुष्यसि ॥

अत्र पूर्वार्धे शन्यादिपदशक्तिमहिम्नैव 'विरुद्धा अप्येकीभूय त्वामनुयान्ती'ति वस्तुध्वनिः। नन्वत्रोपमायाः प्राधान्यं न वा ? आद्येऽलङ्कारत्वहानिः, द्वितीये व्यङ्ग्याऽप्राधान्येन ध्वनिहानिरिति चेन्न । पूर्वमलङ्कार आसीदित्यलङ्कारव्यपदेशात् । उपमाया वाच्यार्थप्राधान्येऽपि रसाङ्गतयाऽलङ्कारत्वसम्भवाच्च । अर्थशक्त्युद्भवः पदगतो यथा—

सायं स्नाता चन्दनेन लिप्ता मन्दा गतिस्तव ।
आश्चर्यं सौकुमार्यं ते, येन क्लान्ताऽधुना ह्यसि ॥

अत्र 'ते सौकुमार्यमाश्चर्यम्, येनाधुना क्लान्तासी'ति वस्तुना 'कृतपरपुरुषपरिचया म्लानाऽसी'ति व्यज्यते । अत्राधुनापदमेव प्राधान्येन व्यञ्जकम् ।

तद्प्राप्तिदुःखैश्च तद्ध्यानहर्षैर्विलीनाऽखिलैनोवृषा गोपकन्या ।
परं ब्रह्मरूपं जगत्सूतिभूतं सदा चिन्तयन्ती गता मुक्तिमन्या ॥

अत्र अखिलपदमहिम्ना 'जन्मसहस्रोपभोग्यपुण्यपापफलानि वियोगदुःखध्यानहर्षाभ्यामनुभूतानी'ति वस्तुना सुकृतदुष्कृतनाशतादात्म्यदुःखहर्षयोर्निगीर्याध्यवसानरूपाऽतिशयोक्तिद्वयं द्योत्यते ।

अग्नियामा त्रियामापि वनमप्यवनं यतः ।
तेषां पराङ्मुखं सर्वं राम ! त्वयि पराङ्मुखे ।

अत्र 'वनं वनमिव'मिति विरोधोपपादकतया 'त्वयि पराङ्मुखे च पराङ्मुख'मित्यर्थान्तरन्यासेन 'विधिरपि त्वामनुवर्तते' इति वस्तु व्यज्यते । 'म्लानपद्मदलाऽऽसक्ते वल्लभस्याधरः सखि !।' अत्रार्थोपमया तत्कृतमुहुश्चुम्बनेन तस्य म्लानत्वमिति काव्यलिङ्गालङ्कारो व्यज्यते । अत्रार्थः स्वतः सम्भवी । कविप्रौढोक्तिसिद्धार्थवस्तुना वस्तुव्यक्तिर्यथा—

निशाङ्क चन्द्रगौराङ्ग प्राप्य यौवनमादरात् ।
तनोत्यनङ्गो भुवनराज्यमेकातपत्रितम् ॥

अत्र भुवनराज्यपदेन 'तदादेशरहितः कोऽपि नास्तीति जाग्रद्भिरेव निशाऽतिवाह्यते'

इति व्यज्यते । अखण्डिताज्ञाविषयं राज्यम् । वस्तुनाऽलङ्कारस्य यथा—

अनङ्गः स्वबलं धत्ते शश्वुच्याङ्गनाहशि ।
यौवने, नियतं तत्राऽवस्थाव्यतिकरो भवेत् ॥

अत्र व्यतिकरपदेन 'परस्परविरुद्धा अपि निर्वेदोन्मादादयोऽवस्था भवन्ती'ति विरोधालङ्कारो व्यज्यते । अलङ्कारेण वस्तुनो यथा—

हारः सन् वार्यमाणोऽपि हृदयेन हतापिना ।
सुजातिश्चञ्चलो नासीद्वयस्यः स्तनयोर्भृशम् ॥

अत्र 'शुद्धजातित्वाद्धारो न चलती'ति काव्यलिङ्गेन 'कम्पमान एव हार' इति नचञ्चलपदद्योत्यं वस्तु व्यज्यते । अलङ्कारेणालङ्कारस्य यथा—

रामास्कन्धावसक्तो यः स्मरः सुरतसङ्गरे ।
सम्प्राप्तनिजदेहोऽसौ धम्मिल्लो जयति ध्रुवम् ॥

अत्र 'सुरतसङ्गरे' 'धम्मिल्लः स्मर' इति रूपकाभ्यां 'रतिनिवृत्तावप्यनिवृत्तकामः कामुकोऽभू'दिति विभावना स्कन्धपदेन व्यज्यते । एषु कविप्रौढोक्तिसिद्ध एवार्थो, न स्वतः सम्भवी । कविनिबद्धवक्तृप्रौढोक्तिसिद्धवस्तुना वस्तुव्यक्तिर्यथा—

नवराकामृगाङ्कस्य का भवेद्वामलोचना ।
अद्य सौभाग्यसम्पूर्णा प्रदोषरजनीसमा ॥

अत्र 'अद्ये'तिपदेन 'पूर्वेद्युरन्यनायिकासक्त' इति वस्तु व्यज्यते। वस्तुनालङ्कारध्वनिर्यथा—

अङ्कपाल्या भवत्सख्या हारे दूरीकृते सति ।
आद्ये सुरतसङ्ग्रामे कथं रतमभूत्तव ॥

अत्र कथंपदेन वाच्येन वस्तुना 'हारच्छेदानन्तरं प्रौढाङ्गनारताद्विलक्षणं नवोढायास्ते सुरतमभू'दिति व्यतिरेकालङ्कारो व्यज्यते । अलङ्कारेण वस्तुनो यथा—

प्रविशन्ती गृहद्वारं तत्पन्थानं विलोक्य च ।
किं रोदिषि घटे नष्टे हाहेतिवचनात्सखि ! ॥

अत्र 'नष्ट इति रोदिषी'ति हेत्वलङ्कारेण 'घटभङ्गदुःखं नास्ती'ति वस्तु व्यङ्ग्यम् । अत्र 'स्वकृतघटभङ्गस्य दुःखहेतुत्वं न सम्भवती'ति कविनिबद्धवक्तृप्रौढोक्तिनिष्पन्नोऽर्थः सम्भवतु । यथा वा—

द्वारि ते तरलां दृष्टिं दृष्ट्वा कुम्भेन भामिनि ! ।
द्वारस्पर्शमिषेणात्मा गुरुरित्येव पातितः ॥

अत्र 'मिषेणे'तिद्योतितापह्नुत्यलङ्कारेण 'बुद्धिपूर्वं त्वया घटः स्फोटित' इति वस्तु व्यङ्ग्यम् । अलङ्कारेणालङ्कारध्वनिर्यथा—

ज्योत्स्नासीधुसमुत्सिक्तताहृण्योत्सुकमानसा ।
वृद्धापि परजाया किं हृदयं हरते तव ॥

अत्र 'परजायात्वेन हृदयं हरती'ति काव्यलिङ्गेन स्वतोऽसम्भविना प्रौढोक्तिमात्रसिद्धेन 'परजायामभिलषसीति त्वदाचरितमनुचित'मिति प्रतिषेधरूपाक्षेपालङ्कारः परजायापदेन व्यङ्ग्यः । एवमर्थशक्ति लाः पदगता द्वादश । तेषां पदानां पर्यायपरिवृत्तिसहत्वात् । एते च वाक्यगता यथा—

अलसस्यापि धूर्तानामग्रिमोऽस्ति समृद्धिमान् ।
इत्युक्तिं समुपाकर्ण्य फुल्ले तस्या विलोचने ॥

अत्र 'समृद्धिमत्त्वेन तादृश्या ममोपभोगयोग्य' इति वस्तुध्वनिः । तादृशवस्तुनाऽलङ्कारध्वनिर्यथा—

धन्यासि सखि ! चाटूनि स्मरसि त्वं रतान्तरे ।
अहं तु सङ्गमारम्भान्न स्मरामि किमप्यहो ! ॥

अत्र स्मरणाभाववस्तुना'ऽहं धन्ये'ति व्यतिरेकः । तादृशालङ्कारेण वस्तुध्वनिर्यथा—

गजकुम्भाऽसृजा शोणो युधि कोपकषायितः ।
करवालः करे कालीकटाक्ष इव राजते ॥

अत्रोपमया 'शत्रुक्षयः क्षणात्करिष्यत' इति वस्तुध्वनिः । तादृशालङ्कारेणालङ्कारध्वनिर्यथा—

गाढं दशन् स्वमोष्ठं योऽरिकान्ताधरपल्लवम् ।
कान्तदन्तक्षतव्याधेरमोचयदसौ क्षणात् ॥

अत्र स्वोष्ठदशनवैरिवध्वधरमोचनरूपहेतुकार्ययोरेककालत्वरूपातिशयोक्त्या समुच्चयालङ्कारध्वनिः । स च 'समुच्चयोऽसौ स त्वन्यो युगपद् या गुणक्रिया' इति । 'व्यथा निवर्तितेति बुद्धेरुत्प्रेक्षणात्सा व्यङ्ग्ये'ति केचित् । अत्र वस्त्वलङ्कारौ स्वतःसम्भविनौ । वाक्यगतकविप्रौढोक्तिसिद्धार्थरूपवस्तुना वस्तुध्वनिर्यथा—

यत्कीर्तिश्रवणेनैव स्रस्तापाङ्गाः ककुब्गजाः ।
आवर्तयन्ति श्रवणे बिसकाण्डधिया करम् ॥

अत्र हस्तिनां कीर्तिश्रवणानन्तरं कर्णहस्तावर्तनरूपेण स्वतोऽसम्भविना कविसम्प्रदायात्तत्प्रौढोक्तिसिद्धेन वस्तुरूपेणार्थेन 'येषामर्थावगमो नास्ति तेषामपि धवलत्वमूर्तत्वादिबुद्धिजननेन त्वत्कीर्तिश्चमत्करोती'ति वस्तु व्यङ्ग्यम् । तादृशवस्तुनालङ्कारध्वनिर्यथा—

जयश्रीस्तेन समरे गृहीता स्वबलात्तथा ।
यथाऽरयः कन्दराभिः स्वकण्ठे स्थापिता भृशम् ॥

अत्र 'अरयः कन्दराभिः कण्ठे स्थापिता' इति कविप्रौढोक्तिसिद्धवस्तुना 'कन्दरा न मुञ्चन्ती'त्युत्प्रेक्षा, 'अरयः पलाय्य न गताः किन्तु कन्दरा न मुञ्चन्ती'त्यपह्नुतिर्वा व्यङ्ग्या । तादृशालङ्कारेण वस्तुध्वनिर्यथा—

मानिन्या हृदयान्मानो गाढमालिङ्गति प्रिये ।
स्वपीडनाद्भीतरिव न निर्याति बहिर्लघु ॥

अत्र 'पीडनाद्भीत इवे'त्युत्प्रेक्षालङ्कारेण कव्युक्तिसिद्धेन प्रियालिङ्गनादिवस्तुध्वनिः । तादृशालङ्कारेणालङ्कारध्वनिर्यथा—

स्थविरं या हसन्तीव स्थिता कविमुखाम्बुजे ।
निर्मिमीतेऽन्यदिव या वाणी जयति सा जगत् ॥

अत्र 'हसन्तीवे'त्युत्प्रेक्षया 'अन्यदिवे'त्युत्प्रेक्षया वा, वाण्याः कवेर्वा व्यतिरेकालङ्कारः । वाक्यगतकविनिबद्धवक्तृप्रौढोक्तिसिद्धवस्तुना वस्तुध्वनिर्यथा—

लङ्कां गता ये मलये रतेन श्रान्तोरगीभक्षणतः कृशा ये ।
वियोगिनीश्वासयुताः समीराः शिशुत्ववन्तोऽपि विभान्त्यजस्रम् ॥

अत्र कविनिबद्धवक्तृविरहिणां प्रौढोक्तिसिद्धेन 'निःश्वासमिलिता मलयवाताः पूर्णा विभान्ती'ति वस्तुना 'प्राप्तैश्वर्याः किं किं न कुर्वन्ती'ति वस्तुध्वनिः । तादृशवस्तुनालङ्कारध्वनिर्यथा—

धीरत्वेन पदं दत्तं मानस्य विरहक्षणे ।
प्रियदर्शक्षणे तेन हृदयाद् द्राग् विनिर्गतम् ॥

अत्र 'प्रियदर्शनक्षणे मानेन गत'मिति वस्तुना 'प्रार्थनं विनैवाऽपगतो मान' इति विभावनालङ्कारध्वनिः । तादृशालङ्कारेण वस्तुध्वनिर्यथा—

नखक्षतैर्नवीनार्द्रैः प्रसादो मम नेत्रयोः ।
रक्तांशुकं मद्दत्तं न तु कोपेन रक्तता ॥

अत्र 'किमिति रक्तते'ति प्रश्नोत्तरालङ्कारेणाऽपह्नुतिसहितेन 'नखक्षतानामहं प्रसादपात्रं जाते'ति वस्तु व्यज्यते । तादृशालङ्कारेणालङ्कारस्य यथा—

कान्तासहस्रभरिते हृदये सा न मात्यतः ।
तनूकरोति स्वतनुस्तनून्यङ्गान्यपि द्रुतम् ॥

अत्र हेत्वलङ्कारेण 'तनोस्तनूकरणेऽपि तव हृदये न वर्तते' इति विशेषोक्तिः । प्रबन्धगता अप्येवं द्वादश । तत्र कश्चिदुदाह्रियते, यथा गृध्रगोमायुसंवादादौ । तथा हि-

अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसङ्कुले ।
कङ्कालबहुले घोरे सर्वप्राणिभयङ्करे ॥
न चेह जीवितः कश्चित् कालधर्ममुपागतः ।
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ॥

इति दिवा प्रागल्भ्यवतो गृध्रस्य मृताऽपेक्षकविसर्जनपरं वाक्यमेतकम् ।

आदित्योऽयं स्थितो मूढाः ! स्नेहं कुरुत साम्प्रतम् ।
बहुविघ्नो मुहूर्तोऽयं जीवेदपि कथञ्चन ॥

अमुं कनकवर्णाभं बालमप्राप्तयौवनम् ।
गृध्रवाक्यात्कथं मूढास्त्यजध्वमविशङ्किताः ॥

अत्र 'न गन्तव्य'मिति वस्तु व्यज्यते । उभयशक्तिमूलो यथा—

अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा ।
तारकातरला श्यामा सानन्दं न करोति कम् ॥

अत्र चन्द्रतारकाश्यामापदानि परिवृत्त्यसहानि, अन्यानि परिवृत्तिसहानि । उभाभ्यामुपमा व्यङ्ग्या । एवमेकपञ्चाशद् भेदाः । सङ्करसंसृष्ट्यादिभेदेन उक्तभेदा ज्ञेयाः । यथा—

क्षणप्राघुणिका तेऽद्य जायया‍ऽनुचितं बत ! ।
इत्का देवर ! रुदती(?) सा वराक्यनुनीयताम् ॥

अत्रानुनय उपभोगरूपत्वलक्ष्यः, उत विवक्षित एवोपभोगव्यञ्जक इति अविवक्षितवाच्यविवक्षितान्यपरवाच्ययोः सन्देहरूपः सङ्करः । व्यङ्ग्ययोर्दुःखापनयनोपभोगयोस्तत्संशयाधीनदुःखास्पदत्वात्(?) । अनुग्राह्यानुग्राहकतारूप एकव्यञ्जकानुप्रवेशरूपश्च सङ्करः संसृष्टिश्च यथा—

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ।
कामं सन्तु, दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति ह ! हा ! हा ! देवि ! धीरा भव ॥

अत्र लिप्तपदं सम्पर्कं लक्षयदतिशयं व्यञ्जयति, सुहृत्पदमुपकारित्वं च लक्षयत्तदतिशयं प्रतिपादयतीति अत्यन्ततिरस्कृतवाच्ये । अनयोस्तु त्रिविधसङ्कराभावात् संसृष्टिमात्रम् । विरहोद्दीपकत्वं व्यङ्ग्यम् । रामपदं च सकलदुःखभाजनत्वं लक्षयत् 'तां विना जीविष्यामी'ति व्यञ्जयदेव विप्रलम्भं व्यनक्ति । एवञ्च—'राम' इति अर्थान्तरसङ्क्रमितवाच्याविवक्षितवाच्ययोः सङ्करः। एवमन्यदप्युदाहार्यम् । एतेषामेव विषयव्याप्त्यर्थमुदाहरणान्तरानि कथ्यन्ते । पदगतार्थान्तरसङ्क्रमिताविवक्षितवाच्यध्वनिर्यथा—

प्रियं च मृत्युं न लभे त्वदीप्सितं तदेव न स्यान्मम यत्त्वमिच्छसि ।
वियोगमेवेच्छ मनः ! प्रियेण मे तव प्रसादान्न भवत्वसौ मम ॥

अत्र 'ममे'तिपदं भाग्यरहिताया इत्यर्थे सङ्क्रमितम् । इदमेव वाक्यगतार्थान्तरसङ्क्रमिताविवक्षितवाच्यध्वनेरुदाहरणम् । पदगतात्यन्ततिरस्कृताविवक्षितवाच्यध्वनिर्यथा—

भुवि भ्रमित्वाऽनवलम्बमम्बरे विहर्तुमभ्यासपरम्परापरा ।
अहो ! महावंशममुं समाश्रिता सकौतुकं नृत्यति कीर्तिनर्तकी ॥

अत्र भ्रमणादिपदं स्वार्थत्यागेन व्यापकत्वलक्षकम् । इदमेव वाक्यगतात्यन्ततिर-

रक्तताविवक्षितवाच्यध्वनेरुदाहरणम्। 'अम्बरे विहर्तुमभ्यासपरम्परे'ति वाच्यस्य स्वार्थत्यागेन देवलोकव्यापकत्वलक्षकत्वम्। पदगतशब्दशक्तिमूलसंलक्ष्यक्रमवस्तुध्वनिर्यथा—

पर्यङ्कतापन्नसरस्वदङ्कां लङ्कापुरीमप्यभिलाषि चित्तम्।
कुत्रापि चेद्वस्तुनि ते प्रयाति तदप्यवेहि स्वशये शयालु॥

अत्र 'सर्वं सुलभ'मिति शब्दशक्त्या 'नललाभः सुलभ' इति वस्तु व्यज्यते। इदमेव वाक्यगततादृशध्वनेरप्युदाहरणम्। पदगतशब्दशक्तिमूलसंलक्ष्यक्रमालङ्कारध्वनिर्यथा—

बाचं तदीयां परिपीय मृद्वीं मृद्वीकया तुल्यरसां स हंसः।
तत्याज तोषं परपुष्टघुष्टे घृणां च वीणाक्वणिते वितेने॥

अत्र 'घृणामि'ति शब्दशक्त्या व्यतिरेकालङ्कारः। इदमेव वाक्यगतशब्दशक्तिमूलसंलक्ष्यक्रमालङ्कारध्वनेरुदाहरणम्। पदगतस्वतःसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिर्यथा—

कथाप्रसङ्गेन मिथः सखीमुखात्तृणेऽपि तन्व्या नलनामनि श्रुते।
द्रुतं विधूयाऽन्यदभूयताऽनया मुदा तदाकर्णनसज्जकर्णया॥

अत्र श्रवणादरवस्तुना 'ममोपभोगयोग्य' इति वस्तु व्यज्यते। पदगततादृशवस्तुनाऽलङ्कारध्वनिर्यथा—'हृयोर्द्वयी'त्यादि। अत्र स्वमुखशोभानिरीक्षणरूपवस्तुना उपमालङ्कारो व्यङ्ग्यः। अलङ्कारेण वस्तुध्वनिर्यथा—

अस्मै करं प्रवितरन्तु नृपा न कस्मा-
द्दृष्ट्यैव तत्र यदभूत् प्रतिभूः कृपाणः।
दैवाद् यदा प्रवितरन्ति न ते तदैव
नेदं कृपाऽजनि कृपाणकरग्रहाय॥

अत्र 'कृपाणः प्रतिभू'रिति रूपकेण 'सकलरिपुपराभवः क्षणात्कृत' इति वस्तु व्यज्यते। अलङ्कारेणालङ्कारध्वनिर्यथा—

शशंस दासीङ्गितविद् विदर्भजामितो ननु स्वामिनि! पश्य कौतुकम्।
यदेष सौधाग्रनटे पटाञ्चले चलेऽपि काकस्य पदार्पणग्रहः॥

अत्र अननुरूपसम्बन्धकथनरूपविषमालङ्कारेण अप्रस्तुतप्रशंसोपमा च व्यज्यते। इदमेव वाक्यगतस्याप्युदाहरणम्। अत्रार्थः स्वतःसम्भवी। कविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिर्यथा—

दूरं गौरगुणैरहङ्कृतिभृतां जैत्राङ्ककारे चर-
त्येतद्यशसि प्रयाति कुमुदं बिभ्यन्न निद्रां निशि।
धम्मिल्ले तव मल्लिकाशुमनसां माल्यं भिया लीयते
पीयूषद्रवकैतवाद् द्युतदरः शीतद्युतिः स्विद्यति॥

अत्र अचेतनानामपि भयादिजननवस्तुना 'चमत्कारं कीर्तिः करोती'ति वस्तु

व्यज्यते । इदमेव वाक्यगतस्यापि । तादृग्वस्तुनालङ्कारो यथा—

अस्मिन् दिग्विजयोद्यते पतिरयं मे स्तादिति ध्यायिनी
कम्पं सात्त्विकभावमञ्चति रिपुक्षोणीन्द्रधारा धरा ।
अस्यैवाभिमुखं निपत्य समरे यास्यद्भिरूर्ध्वं निजः
पन्था भास्वति दृश्यते बिलमयः प्रत्यर्थिभिः पार्थिवैः ॥

अत्र कम्पादिवस्तुना 'एतस्य राज्ञो दिशि रतिं दृष्ट्वा समुद्दीपितमदनेवाऽरिधरणी जायत' इत्युत्प्रेक्षा व्यज्यते । इदमेव वाक्यगतस्यापि । अत्रैवोत्तरार्धे 'निपत्योर्ध्वं यास्यद्भि'रिति विचित्रालङ्कारेण रिपूणामतिशूरत्वरूपवस्तु व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः । तादृगलङ्कारेणालङ्कारध्वनिर्यथा—

एतद्दन्तिबलैर्विलोक्य निखिलामालिङ्गिताङ्गीं भुवं
सद्ग्रामाक्रमणलीम्नि जङ्गमगिरिस्तोमभ्रमाधायिभिः ।
पृथ्वीन्द्रः पृथुरेतदुग्रसमरप्रेक्षोपनम्राऽमर-
श्रेणीमध्यचरः पुनः क्षितिपरक्षेपाय धत्ते धियम् ॥

अत्र भ्रान्तिमदलङ्कारेण चपलातिशयोक्त्यलङ्कारः । इदमेव वाक्यगतस्यापि । पदगतकविनिबद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिर्यथा—

शक्तिर्निस्त्रिंशजेयं तव भुजयुगले नाथ ! दोषाकरश्री-
र्वक्त्रे पार्श्वे तथैषा प्रतिवसति महाकुट्टनी खड्गयष्टिः ।
आज्ञेयं सर्वगा ते विलसति च पुरः किं मया वृद्धया ते
प्रोच्येवेत्थं प्रकोपाच्छशिकरसितया यस्य कीर्त्या प्रयातम् ॥

अत्र कीर्तिप्रयाणरूपवस्तुना कीर्तेर्जगद्व्यापित्वरूपं वस्तु व्यज्यते । अत्रैव परिकरालङ्कारेण 'नेदं स्थानं मम वासयोग्य'मिति वस्तु व्यज्यते । परिकरालङ्कारेणैव इतरकामिनीवृत्तान्तप्रतीतिरूपसमासोक्त्यलङ्कारोऽपि व्यज्यते । आज्ञादीनां सर्वगतत्वादिरूपवस्तुना अप्रस्तुतप्रशंसालङ्कारोऽपि व्यज्यत इति चतुर्णामपीदमेव । वाक्यगतमपीदमेव । द्वादशविधः प्रबन्धगतो यथा गृध्रगोमायुसंवादे—

अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसङ्कुले ।
कङ्कालबहुले घोरे सर्वप्राणिभयङ्करे ॥
न चेह जीवितः कश्चित्कालधर्ममुपागतः ।
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ॥

इति दिवा प्रभवतो गृध्रस्य वाक्यम् । अत्र पुरुषविसर्जनरूपवस्तु व्यङ्ग्यम् ।

आदित्योऽयं स्थितो मूढाः ! स्नेहं कुरुत साम्प्रतम् ।
बहुविघ्नो मुहूर्तोऽयं जीवेदपि कदाचन ॥
अमुं कनकवर्णाभं बालमप्राप्तयौवनम् ।
गृध्रवाक्यात्कथं मूढास्त्यजध्वमविशङ्किताः ॥

इदं रात्रौ प्रभवतो गोमायोर्वाक्यम् । रात्रौ विसर्जनं व्यङ्ग्यम् । एवमलङ्कारादि-व्यञ्जकाः प्रबन्धाः स्वयमूहनीयाः । अस्फुटक्रमः पदैकदेशगतोऽनेकविधः। प्रकृतिप्रत्ययो-पसर्गनिपातादिरूपपदैकदेशस्यानेकत्वात् । यथा—

जयति ललाटकटाक्षः शशिमौलेः पक्ष्मलः प्रियाप्रणतौ ।
धनुषि स्मरेण निहितः सकण्टकः केतकेषुरिव ॥

अत्र जिघातोः शोभा व्यङ्ग्या । यथा—

न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसभटान् जीवत्यहो ! रावणः ।
धिग् धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥

'अत्रे'ति सर्वनाम्नः (अशक्यत्वम् ?),'अरय' इति बहुवचनस्य, 'निहन्ति जीवती'ति तिङ्प्रत्ययस्य,'अहो' इत्यव्ययस्य, 'ग्रामटिके'ति कल्पतद्धितस्य,'भुजै'रिति बहुवचनस्य, 'एवे'ति निपातस्य, 'प्रबोधितवते'त्युपसर्गस्य च व्यञ्जकत्वं सहृदयैकवेद्यम्। एवमन्या-न्यप्युदाहर्तव्यानि । यत्तु काव्यप्रकाशे—'किं मन्ये विहरिष्यसे' इत्युत्तमपुरुषस्य प्रहास-व्यञ्जकत्वमुक्तम्, तत् 'प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्चे'त्यानुशासनिकशक्ति-ग्रहेण शक्त्यैव तदर्थबोधाच्चिन्त्यम् । वर्णनिष्ठं रचनानिष्ठं च रसादिव्यञ्जकत्वं रीति-निरूपणेन वृत्तिनिरूपणेन च स्पष्टम् । वाक्यमात्रनिष्ठत्वादेकविधः शब्दार्थोभयशक्ति-मूलध्वनिर्यथा—

राजन्नस्य शतेन किं कलयतो देति शतघ्नीं, कुतं
लक्षैर्लक्षभिदो, हशव जयतः पद्मानि पद्मैरलम् ।
कतु सर्वपरच्छिदस्तदपि नो शक्यं परार्धेन वा
तत्सङ्ख्यापगमं विनास्ति न गतिः काचिद् बतैतद्द्विषाम् ॥

अत्र 'सङ्ख्यापगम इव सङ्ख्यापगम' इत्युत्प्रेक्षा व्यङ्ग्या । तदेवमेकपञ्चाशद्भेदो ध्वनिः । ननु रसानां नवत्वात् शृङ्गारस्य संयोगविप्रयोगरूपतया द्विविधत्वात् संयोग-स्यालिङ्गनचुम्बनादिरूपत्वेन विप्रलम्भस्य अभिलाषादिरूपत्वेनाऽनेकविधत्वात्तयोरपि विभावानुभावव्यभिचारिवैचित्र्येण नायिकानायकयोरुत्तममध्यमाधमप्रकृतित्वेन देश-कालावस्थाविभेदेन च एकस्यैव रसस्याऽऽनन्त्यात्सर्वगणनायाः कर्तुमशक्यतया कथ-मेकपञ्चाशदिति चेन्न । रसध्वनित्वादिव्यापकरूपेण तदभिधानादिति सम्प्रदायः । संसृष्टिर्यथा—

त्वया जगत्युचितकान्तिसारे यदिन्दुनाऽशीलि शिलोञ्छवृत्तिः ।
आरोपि तन्माणवकोऽपि मौलौ स यज्वराज्येऽपि महेश्वरेण ॥

अत्र 'उचितकान्तिसार' इति 'शिलोञ्छवृत्ति'रिति चात्यन्ततिरस्कृतवाच्ययोः

संसृष्टिः । सङ्करो यथा—

संसारसिन्धावनुबिम्बमत्र जागर्ति जाने तव वैरसेनिः ।

बिम्बानुबिम्बौ हि विहाय धातुर्न जातु दृष्टाऽसिलरूपसृष्टिः ॥

अत्र रूपमालङ्कारध्वनिरसध्वन्योः सङ्करः । एवमन्यदप्यूह्यम् ॥ ३-१२ ॥

वक्तृस्यूतं बोधयितुं व्यङ्ग्यं वक्तुरभीप्सितम् ।

स्वाङ्कुरितमतद्रूपं स्वयमुच्छ्वसितं गिरा ॥ १३ ॥

वक्तृस्यूतमिति । वक्तुर्बोधयितुमभीप्सितं यद्व्यङ्ग्यं तद्वक्तृस्यूतम् । यद् वक्तृतात्पर्याविषयभूतं शब्दादेव सहृदयैः प्रतीयते तत् स्वाङ्कुरितमित्यर्थः । व्यङ्ग्यं द्विधा, वक्तृतात्पर्यविषयभूतं तदविषयभूतं च । आद्यं 'गङ्गायां घोष' इत्यादौ शैत्यादि । अन्यथा अवाचकशब्दानुपपत्तिः । द्वितीयम् 'अस्तं गतः सविते'त्यादौ सपत्नप्रत्यवस्कन्दनावसर इति, अभिसरणमुपक्रम्यतामिति, प्राप्तप्रायस्ते प्रेयानिति, कर्मकरणान्निवर्ततामिति, सान्ध्यो विधिरुपक्रम्यतामिति, दूरं मा गा इति, सुरभयो गृहं प्रवेश्यन्तामिति, सन्तापोऽधुना न भवतीति, विक्रेयवस्तूनि संह्रियन्तामिति, नागतोऽद्य प्रेयानित्यादिनानार्था अतात्पर्यभूताः स्वशब्दानभिधेया वक्तृबोद्धव्यादिविशेषेण प्रतीतिपथमवतरन्तो व्यङ्ग्या एवेति भावः ॥ १३ ॥

बोद्धृचातुर्विध्येन वक्तृस्यूतं चतुर्विधमित्याह सार्धश्लोकेन—

कश्चित्साधारणः कश्चिदामन्त्र्य प्रतिबोधितः ।

कश्चित्तटस्थः कश्चिच्च बोधितप्रतिबोधितः ॥ १४ ॥

इत्येवं बोद्धृवैचित्र्याद् वक्तृस्यूतं चतुर्विधम् ।

कश्चिदिति । साधारण आलङ्कारिकोऽनालङ्कारिकश्च । तद्बोध्यं व्यङ्ग्यम् । इदमेव च अगूढव्यङ्ग्यमिति काव्यप्रकाशेनोक्तम् । यथा—

दिशि दिशि गिरिग्रावाणः स्वां वमन्तु सरस्वतीं

तुलयतु मिथस्तामापातस्फुरद्ध्वनिडम्बराम् ।

स परमपरः क्षीरोदन्वान्, यदीयमुदीयते

मथितुरमृतं खेदच्छेदि प्रमोदनमोदनम् ॥

अत्र गर्वाविष्कारो व्यङ्ग्यः सर्वजनबोध्यः । आमन्त्र्य प्रतिबोधित इति, सम्बोध्य इत्यर्थः । तेन सम्बोध्यबोध्यं व्यङ्ग्यं द्वितीयम् । यथा—

कौमारमारभ्य गणा गुणानां हरन्ति ते भैमि ! दिशामधीशान् ।

सुराधिराजं सलिलाधिपं च हुताशनं चार्यमनन्दनं च ॥

अत्र अभिलाषो व्यङ्ग्यः सम्बोध्यदमयन्तीनिष्ठः । तटस्थ इति, सम्बोध्यातिरिक्त इत्यर्थः । तद्बोध्यं व्यङ्ग्यं तृतीयम् । यथा—

दमस्वसश्चित्तमवेत्य हासिका जगाद देवीं किमदस्य वक्ष्यसि ।

भण प्रभूतैर्जगति स्थितैर्गुणैरिहोच्यते सङ्कटवासयातना ॥

अत्र निर्गुणत्वं व्यङ्ग्यम्, तच्च सम्बोध्यातिरिक्तराजनिष्ठम् । बोधितप्रतिबोधित इति। सम्बोध्यप्रतिबोधितपुरुषनिष्ठमित्यर्थः । यथा—

दिशि दिशि परिहासगूढगर्भाः पिशुनगिरो, गुणगर्ल च तादृक् ।
सहचरि ! हरये निवेदनीयं भवदनुरोधवशादयं विपाकः ॥

अत्र उपालम्भो व्यङ्ग्यः, स च बोधितसखीप्रतिबोध्यहरिनिष्ठः ॥ १४ ॥

स्वाङ्कुरितस्य द्वैविध्यमाह—

**उपेक्षानिह्नवाभ्यां च द्विधा स्वाङ्कुरितं मतम् ॥ १५ ॥**

उपेक्षेति । वक्त्रुपेक्षाविषयं वक्तृनिह्नवविषयं चेत्यर्थः । यथा—

भम धम्मिअ वीसद्धो सो सुणओ अज्ज मारिओ देण ।
गोलाणईकच्छकुडंगवासिणा दरिअसीहेण ॥

अत्र 'गोदावरीतीरे सिंहोऽस्तीति तत्रायं मा गच्छ'त्विति व्यङ्ग्यम् । तद् यद्यपि वक्तृतात्पर्यविषयं, तथापि 'तन्मदीयं सङ्केतस्थान'मिति व्यङ्ग्यमुपेक्षाविषयं सहृदयैकवेद्यं च । निह्नवविषयं यथा—

अइ पिहुलं जलकुंभं घेत्तूण समागदम्मि सहि तुरिअं ।
समसेअसलिलणीसासणीसहा वीसमामि खणं ॥

अत्र सुरतनिह्नवो व्यङ्ग्यः । तत्र निह्नवविषयं सुरतमालङ्कारिकैकवेद्यं वक्तृतात्पर्यविषयभूतं चापह्नुतमिति । अन्ये त्वेवं व्याचक्षते—साधारणः वक्तृतात्पर्यानभिज्ञः । यथा 'गतोऽस्तमर्क' इत्यादौ वक्तृतात्पर्याविषयस्यापि बोधः ।

नरहराब्जभुवामिव यावता भवति यस्य युगं वदनेहसा ।
विरहिणामपि तद् स्तवद्युक्षणमितं न कथं गणितागमे ॥

अत्र 'क्षणविलम्बो दुःसोढ' इति व्यङ्ग्यस्य आमन्त्र्य प्रतिबोधिता सखी बोद्धा(?)। तटस्थत्वं च—प्रयोज्यभिन्नत्वे सति तात्पर्यज्ञत्वम् । यथा—

णोल्लेइ अणोल्लमना अत्ता मं घरभरम्मि सअलम्मि ॥
खणमेत्तं जइ संझाइ होइ णव होइ वीसामो ॥

अत्र सखीं प्रति वदन्त्या कयाचित् सन्ध्या सङ्केतकाल उक्त इति तटस्थो बोद्धा ।

बोधितप्रतिबोधितस्तु—

प्राणेश ! विज्ञप्तिरियं मदीया तत्रैव नेया दिवसाः कियन्तः ।
न वासयोग्यस्थितिरेष देशः करा हिमांशोरपि तापयन्ति ॥

अत्र नायिकाबोधितवक्त्रा प्रतिबोधितो नायको बोद्धा । यद्वा, साधारणः—अप्रयोज्यत्वे सति प्रतिपाद्यः । यथा—

कुम्भं गृहीत्वा विपुलं सत्वरं समुपागता ।
श्रमस्वेदनिरासाय विश्रमामि सखि ! क्षणम् ॥

अत्र सखी प्रतिपाद्यापि न प्रयोज्या । आसन्नत्व प्रतिबोधितो नीचः । यथा—

त्वं दूति ! निरगाः कुञ्जं न तु पापीयसो गृहम् ।
किंशुकाभरणं देहे दृश्यते कथमन्यथा ॥

अत्र दूत्यादिर्नीचो बोद्धा । तटस्थः समो नियोज्यः । यथा—

गृहोपकरणे सर्वं व्यापृता क्षपये दिनम् ।
सन्ध्यायां मम विश्रामः क्वचिद्भवति वा न वा ॥

अत्र सङ्केतकालबोद्धा नियोज्यः समः । बोधितप्रतिबोधितस्तु उच्चो नियोज्यः । उक्तमेवोदाहरणम् । तेन वक्तृतात्पर्यविषयीभूतव्यङ्ग्यं बोद्धृभेदेन भिन्नमित्याशयः । स्वाङ्कुरितस्यापि द्वैविध्यमाह—'उपेक्षानिह्नवाभ्यां च द्विधा स्वाङ्कुरितं मतम् ।' गूढमगूढं चेत्यर्थः । गूढत्वं काव्यार्थभावनापरिपक्व(बुद्धि)विभवमात्रवेद्यत्वम् । अगूढत्वं स्पष्टतया सर्वजनवेद्यत्वमित्यर्थः । आद्योदाहरणं 'मुखं विकसितं'त्युक्तम् । द्वितीयं यथा—

श्वश्रू सैव किल सैव हग्गृथी सैव गीरसि सैव भूमिका ।
अद्य तद्वदनुकूलयन्ति नो बालयमन्यमिलिताः प्रजा इव ॥

अत्र असम्बन्धो व्यङ्ग्यः, स स्फुट एव ॥ १९ ॥

निह्नवस्यानेकरूपतामाह—

**भूतादिकालभेदेन निह्नवः स्यादनेकधा ।**
**अनेनापि प्रभेदेन व्यक्तिवल्ली विजृम्भते ॥ १६ ॥**

भूतादीति । भूतगोपनं भाविगोपनं वर्तमानगोपनं च । त्रितयमपि यथा—

श्वश्रूः क्रुध्यतु निर्दिशन्तु सुहृदो निन्दन्तु वा यातर-
स्तस्मिन् किन्तु न मन्दिरे सखि ! पुनः स्वापो विधेयो मया ।
आखोराक्रमणाय कोणकुहरादुत्फालमातन्वती
मार्जारी नखरैः खरैः कृतवती कां कां न मे दुर्दशाम् ॥

अत्र भूतभविष्यद्वर्तमानरतगोपनं व्यङ्ग्यम् । लक्षणामूलव्यञ्जनाभेदानुपसंहरति—अनेनेति । अनेन लक्ष्यार्थव्यङ्ग्यभेदेन, व्यक्तिवल्ली लक्षणामूलव्यञ्जनाभेदा इत्यर्थः ॥ १६ ॥

शक्तिमूलव्यञ्जनामाह—

**नानाप्रभेदा नियताः क्वचित्प्रकरणादिना ।**
**अर्थेऽर्थमन्यं यद्व्यक्ति तद्वाच्यव्यङ्ग्यमिष्यते ॥ १७ ॥**

नानेति । नानाप्रभेदा नानार्थाः प्रकरणादिना क्वचिदर्थे नियता एकार्थवाचकत्वेन ज्ञाताः । तैः अन्यार्थप्रतिपत्तिः शक्तिमूलव्यञ्जनयैव । शक्तिलक्षणयोरसम्भवादिति भावः । आदिपदेन,

संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।

अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ।
सामर्थ्यमौचिती देशः कालोऽभिनय एव च ।
व्यक्तिः स्वरश्च शब्दार्थस्याऽनवच्छेदहेतवः ॥

शब्दार्थस्य नानार्थकशब्दार्थस्य अनवच्छेदे अनियमेन बाधे सति एते नियमहेतव इत्यर्थः । यथा-'सशङ्खचक्रो हरि'रिति शङ्खचक्रसंयोगेन विष्णुर्हरिपदार्थः । 'अशङ्खचक्रो हरि'रिति वियोगेनेन्द्रः । 'रामलक्ष्मणा'विति साहचर्येण दाशरथिः । 'अहिनकुल'मित्यत्र विरोधितया नकुलः पशुः । 'स्थाणुं भज भवच्छिदे' इत्यत्र सामर्थ्यात् शिवः । 'सैन्धव-मानये'त्यत्र भोजनादिप्रकरणाल्लवणादि । 'मित्रं भाती'ति नपुंसकलिङ्गात्सुहृत् । 'मित्रो भाती'ति पुंलिङ्गाद्रविः । 'पुरारातिर्देव' इत्यत्र पुरारातिसान्निध्याद्देवपदेन शिवः । 'मधुना मत्तः कोकिल' इति सामर्थ्यान्मधुर्वसन्तः । 'पातु वो दिनमुख'मित्यत्र मुखं प्रारम्भः । 'गगने भाति चित्रभानु'रिति सूर्यः । 'निशि भाति चित्रभानु'रित्यग्निः । 'एतावन्मात्रस्तनी'त्यत्र हस्तादिचेष्टया स्तनादीनां कमलकोरकाद्याकारत्वमेताव-न्मात्रपदार्थः । स्वरो द्विधा, काकुरूप उदात्तादिरूपश्च । 'जानन्ति ते किमपी'त्यादौ काका अज्ञानरूपार्थः । 'इन्द्रशत्रुर्वर्धस्वे'त्यादौ द्वितीयेन बहुव्रीह्यर्थः । द्वितीयस्तु वेदे एव न काव्ये । व्यक्तिः प्राकट्यम् । 'कुपितो मकरध्वज' इत्यत्र कुपितपदस्याभि-व्यक्तिरर्थः । अर्थसामर्थ्यौचितीनां भेदं नाकलयामः । अत्र संयोगादिनाऽभिधानिय-न्त्रणे सत्यर्थान्तरे शक्त्यसम्भवान्मुख्यार्थबाधाद्यसम्भवेन लक्षणाया अप्यसम्भवात् तत्प्रतीतिर्व्यञ्जनयैवेत्याशयः । यथा—

अथावदस्मै पुरुषोत्तमाय तां स साधु लक्ष्मीं बहुवाहिनीश्वरः ।
शिवामथ स्वस्य शिवाय नन्दनां ददे पतिः सर्वविदे महीभृताम् ॥

अत्र प्रकरणेन शक्त्या भीमबोधोत्तरं व्यञ्जनया सागरहिमालययोर्बोधः ॥१७॥

महादेवः सत्रप्रमुखमखविद्यैकचतुरः
सुमित्रा तद्भक्तिप्रणिहितमतिर्यस्य पितरौ ।
मयूखस्तेनासौ सुकविजयदेवेन रचिते
चिरं चन्द्रालोके महति मुनिसङ्ख्यः सुखयतु ॥ १८ ॥

इति श्रीपीयूषवर्षपण्डितजयदेवकृते चन्द्रालोकालङ्कारे
ध्वनिनिरूपणाख्यः सप्तमो मयूखः ।

विश्वेश्वरापराख्येन गागाभट्टेन धीमता ।
चन्द्रालोकस्य विवृतिर्मयूखे सप्तमे कृता ॥

इति मीमांसकगागाभट्टकृतचन्द्रालोकटीकायां सप्तमो मयूखः ।

## अष्टमो मयूखः ।

व्यञ्जनावृत्तिनिरूपणोपस्थितव्यङ्ग्यभेदेन व्यञ्जकध्वनिभेदं निरूप्य तत्प्रसङ्गेन ध्वनिगुणीभूतव्यङ्ग्यलक्षणपूर्वं मध्यमकाव्यभेदानाह—

**यद्व्यज्यमानं मनसः स्तैमित्याय स नो ध्वनिः ।**
**अन्यथा तु गुणीभूतव्यङ्ग्यमापतति त्रिधा ॥ १ ॥**

यदिति । येन काव्येन व्यज्यमानं व्यञ्जनया प्रत्यायितं व्यङ्ग्यं मनसः स्तैमित्याय आर्द्रीभावाय भवति । 'ष्टिम आर्द्रीभाव' इति धातुः । आर्द्रीभावाद् ध्वनिः । इदमुपलक्षणं विस्तारादीनां तज्जनकं भवति । आह्लादजनकमिति यावत् । स इति विशेषेण निर्देशः । तत्काव्यं ध्वनिः उत्तमकाव्यम् । विशेष्याभिप्रायं पुंल्लिङ्गम् । यत्र व्यङ्ग्यं वाच्यार्थापेक्षया चमत्कारजनकं स ध्वनिः । अन्यथा व्यङ्ग्यस्य चमत्कारजनकत्वाभावे गुणीभूतव्यङ्ग्यरूपं मध्यमकाव्यं वक्ष्यमाणभेदैस्त्रिधेत्यर्थः । अस्य भेदाः पूर्वमुक्ताः । अयमाशयः—सव्यङ्ग्यमेव काव्यम् , न व्यङ्ग्यरहितम् । तद्व्यङ्ग्यं प्राधान्येन प्रतीयतां वस्त्वादिगुणत्वेन वा प्रतीयतामित्यत्र नाग्रहः । परन्तु यत्र चमत्कारजनकमपि रसादिव्यङ्ग्यं प्रकरणाद्यनुरोधेन वस्त्वादिगुणत्वेन प्रतीयते, तत्र चमत्कारस्याऽस्थायितया अनास्वाद्यत्वेन मध्यमकाव्यत्वम् । यथा—

> युवतीजनमज्जनार्पितैर्घुसृणैर्यत्र कषायिताम्भसा ।
> न निशाऽखिलयापि वापिका प्रससाद ग्रहिलेव मानिनी ॥

इत्यादौ रसादेर्नगरीवृत्तान्तवस्तुमात्रेऽङ्गत्वम् । यत्र तु प्रधानभूतं, तत्रोत्तमकाव्यत्वम् । यथा वक्ष्यते । तदुक्तम्—

> प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थिते ।
> उभे काव्ये, ततोऽन्यद्यत् तच्चित्रमभिधीयते ॥

इति । काव्यप्रकाशस्तु—"सव्यङ्ग्यमेव काव्यमिति न नियमः । अव्यङ्ग्येऽपि काव्यव्यवहारात् । अतोऽव्यङ्ग्यचित्रादीनामपि काव्यतयोत्तममध्यमाधमभेदेन त्रिविधं काव्य"मित्याह । चण्डीदासस्तु—"उत्तमाधमभेदेन काव्यं द्विविधम् । प्रकरणाद्यनुरोधेनेतराङ्गत्वेन प्रतीयमानस्यापि रसादेर्व्यङ्ग्यस्य पूर्वमास्वाद्यत्वेन प्रतीतस्य बाधाऽयोगा"दित्याह । उत्तमं यथा—

> कस्याश्चिद् गुणिना चिरं हृदि सता त्वद्वक्षसः सङ्गमात्
> पाटीरद्रवपङ्किलस्य झटिति स्वीयो विमुक्तो गुणः ।
> तच्चित्रं विगुणेन तेन भवतः सर्वेऽपि ते ते गुणाः
> श्रीमद्राजबहादुरेन्द्र ! भवतः स्पष्टीक्रियन्तेऽधुना ॥

अत्र खण्डितावाक्ये त्वद्धृदयचन्दनावलग्नहारमणिबिम्बमालया व्यज्यमानसम्भो-

गस्य शशिवृत्तान्तस्य वाच्यापेक्षया चमत्कारजनकत्वात् । यथा वा—

हतमसह्निन्नुलभूभृदुज्झिता प्रियाऽथ दृष्टा वनमानवीजनैः ।
शशंस पृष्टाऽद्भुतमात्मदेशजं शशित्विषः शीतलशीलतां किल ॥

अत्र व्यज्यमानो वियोगश्चमत्कारजनकः ॥ १ ॥

तत्र व्यङ्ग्यस्याऽष्टविधत्वेन मध्यमकाव्यस्याऽष्टविधत्वस्य अगूढेत्यादिना वक्ष्यमाणत्वात्तदुपोद्घाततया अगूढत्वस्य त्रैविध्यमाह—

**व्यक्त एव क्वचिद् व्यङ्ग्यः क्वचिदर्थस्वभावतः ।**
**क्वचिच्चारुतरस्याग्रे स विमुञ्चति चारुताम् ॥ २ ॥**

व्यक्त इति । व्यक्तः प्रकटो वाच्य एव व्यङ्ग्यः । वाच्यान्यथानुपपत्तिलभ्यो द्वितीयः । वाच्योऽर्थो व्यङ्ग्यापेक्षया चमत्कारजनकस्तृतीयः । एवमगूढव्यङ्ग्यस्य त्रैविध्यमित्यर्थः । अत्र चमत्कारजनकत्वं रसव्यञ्जकत्वम् । 'यत्र व्यङ्ग्योऽर्थो वाच्यसहकारभावेन रसव्यञ्जकस्तत्र व्यङ्ग्यस्य परमुखनिरीक्षकतया वाच्यापेक्षया अचारुत्वेन गुणीभूतव्यङ्ग्यत्व'मिति काव्यप्रकाशः । एवञ्च, व्यञ्जनामूलव्यञ्जनायामेव तादृशभेदापत्त्या शक्तिलक्षणामूलव्यञ्जनायां गुणीभूतव्यङ्ग्यभेदो न स्यादिति ध्येयम् ।

एतत्सोदाहरणमाह—

**अगूढं कलयेदर्थान्तरसङ्क्रमितादिकम् ।**
**विस्मृतः किमपांनाथ ! स त्वया कुम्भसम्भवः ॥ ३ ॥**

अगूढमिति । अर्थान्तरसङ्क्रमितवाच्यमत्यन्ततिरस्कृतवाच्यं लक्षणया पदशक्तिमूलसंलक्ष्यक्रमं च व्यङ्ग्यमगूढं स्फुटं कलयेत् ज्ञापयेदित्यर्थः । त्रिविधस्याप्युदाहरणं विस्मृत इति । अत्र कुम्भसम्भवपदेनाऽत्यन्ततिरस्कृतवाच्येन समुद्रपातृमुन्यर्थकेन, 'त्वये'तिपदेन अर्थान्तरसङ्क्रमितवाच्येन तत्सामर्थ्यज्ञात्रर्थकेन, 'अपांनाथे'त्यनेन 'जडनाथे'ति शब्दशक्तिमूलानुरणनेन, 'विस्मृत' इति अर्थशक्तिमूलानुरणनेन च 'स मुनिस्त्वां पास्यति तस्माद्बिभेतव्य'मिति व्यङ्ग्यम्, तच्च स्फुटम् । यथा वा—

मन्दाकिनीनन्दनयोर्विहारे देवे वरे देवरि माधवे च ।
श्रेयः श्रियां यातरि यच्च सख्यां तच्चेतसा भाविनि ! भावयस्व ॥

अत्र व्यङ्ग्यस्येन्द्रवरणस्य 'देवे वरे' इत्यनेनोक्ततया अगूढत्वम् । वाच्यान्यथानुपपत्तिलभ्यव्यङ्ग्यं यथा—

निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि ! दूति ! बान्धवजनस्याऽज्ञातपीडागमे !
वापीं स्नातुमितो गतासि, न पुनस्तस्याधमस्यान्तिकम् ॥

अत्र जात्यधमत्वासम्भवेन दूतीसम्भोगरूपमेवाधमत्वं फलतीत्यन्यथानुपपत्ति-

लभ्यः सम्भोगः । अवाच्यङ्गं यथा—

सूक्ष्मे घने नैषधकेशपाशे निपत्य निःस्पन्दतरीभवद्भ्याम् ।
तत्रानुबन्धं न विमोच्य गन्तुमपारि तल्लोचनखञ्जनाभ्याम् ॥

अत्र सादरावलोकनं व्यङ्ग्यम्, तदू वाच्यरूपकाद्यपेक्षया अचारु ॥ ३ ॥

**अपरस्य रसादेश्चेदङ्गमन्यदू रसादिकम् ।**
**हा ! हा ! मत्कुचकाश्मीरलिप्तं भिन्नमुरः शरैः ॥ ४ ॥**

अपरस्येति । आदिना भावादिग्रहणम् । 'हाहे'ति रणे पतिते कान्ते कस्याश्चिदुक्तिः । अत्र व्यङ्ग्यशृङ्गारस्य करुणाङ्गत्वम् । एतस्योदाहरणान्तराणि रसवत्प्रेयऊर्जस्व्यलङ्कारकथने उक्तानि ।

वाच्यसिद्ध्यङ्गमाह—

**तथा वाच्यस्य सिद्ध्यङ्गं नौरर्थो वारिधेर्यथा ।**
**संश्रित्य तरणिं धीरास्तरन्ति व्याधिवारिधिं नु ॥ ५ ॥**

तथेति । वाच्यार्थप्रतीतेरङ्गमुपपादको व्यङ्ग्योऽर्थो यत्र, तदपि मध्यमकाव्यम् । उदाहरति—संश्रित्येति । अत्र प्रकरणेन सूर्ये नियतस्तरणिशब्दो न नौकावाचकः, किन्तु व्यञ्जकः । स च व्यङ्ग्यो नौकारूपोऽर्थो वाच्यस्य रूपकस्योपपादकः । इदमेव स्पष्टयति—नौरर्थ इति । नौरूपो व्यङ्ग्योऽर्थो वाच्यस्य वारिधिसम्बन्धिरूपकस्योपपादक इत्यर्थः । यथा वा—

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥

अत्र ध्वनिविकारेण काका 'मयि न योग्यः खेदस्ताद्दशक्लेशहेतुषु कुरुषु योग्यः खेद' इति व्यज्यते । तेन व्यङ्ग्येन प्रश्नरूपवाक्यार्थस्य सिद्धेर्मध्यमकाव्यत्वम् । अन्यथा प्रश्नानुपपत्तेः । एतेन काकुसहकारेण प्रश्नरूपवाक्यार्थस्य 'मयि न योग्यः खेदः कुरुषु योग्यः खेद' इत्येतादृशार्थव्यञ्जकत्वादुत्तमकाव्यत्वं काव्यप्रकाशोक्तमपास्तम्। न च धीरोदात्तनायकवाक्यस्य विपर्ययावसाननैयत्येनाऽनुचितत्वप्रतीतिरिति वाच्यम्, गुरुत्वेन तत्कार्ये तत्प्रतीत्ययोगात् ॥ ५ ॥

अस्फुटव्यङ्ग्यमाह—

**अस्फुटं स्तनयोरत्र कोकसादृश्यवन्मतम् ।**
**कुङ्कुमाक्तं स्तनद्वन्द्वं मानसं मम गाहते ॥ ६ ॥**

अस्फुटमिति । अस्फुटत्वं विलम्बेन प्रतीयमानत्वम् । तदेव स्पष्टयति—स्तनयो-

रिति। अत्र कुङ्कुमाक्तमिति काव्ये कोकसादृश्यरूपं व्यङ्ग्यमस्फुटमित्यर्थः। यथा वा—

रामचन्द्रवदनेन चन्द्रमा निर्जितः किमु कथासरोरुहाम्।
रामपादकमलेन विद्रुमः, पल्लवस्य तुलनापि कीदृशी॥

अत्र समुद्रोत्पन्नजेतुस्तडागोत्पन्नजये कियान् श्रम इति चन्द्रपदेन सागरजत्वं व्यङ्ग्यमस्फुटम्॥ ६॥

सन्दिग्धं व्यङ्ग्यमाह—

**सन्दिग्धं यदि सन्देहो दैर्ध्योत्पलयोरिव।**
**सम्प्राप्ते नयने तस्याः श्रवणोत्तंसभूमिकाम्॥ ७॥**

सन्दिग्धमिति। दैर्ध्यादि चोत्पलं चेति द्वन्द्वः। उत्पलपदेनोत्पलसादृश्यम्। तेन श्रवणोत्तंसभूमिकां गते इत्यनेन दैर्ध्योत्पलसादृश्ययोः कस्य प्राधान्येन व्यङ्ग्यत्वमिति सन्देह इत्यर्थः॥ ७॥

**तुल्यप्राधान्यमिन्दुत्वमिव वाच्येन साम्यभृत्।**
**कान्ते! त्वदाननरुचा म्लानिमेति सरोरुहम्॥ ८॥**

तुल्येति। वाच्योऽर्थो व्यङ्ग्येनार्थेन यत्र चमत्कारकारित्वात्तुल्यप्रधानः, तत्तुल्यप्रधानमित्यर्थः। कान्त इत्युदाहरणे इन्दुत्वं व्यङ्ग्यम्। तत्पङ्कजपराभवरूपवाच्येन तुल्यम्॥ ८॥

**असुन्दरं यदि व्यङ्ग्यं स्याद्वाच्यादमनोहरम्।**
**सरस्यामीलदम्भोजे चक्रः कान्तां विलोकते॥ ९॥**

असुन्दरमिति। यत्र वाच्याद् व्यङ्ग्यमचमत्कारकारि, तदसुन्दरमित्यर्थः। उदाहरणं 'सरसीति'। आमीलन्ति सङ्कुचन्त्यम्भोजानि यस्मिन्निति विग्रहः। अत्र भावी विरहो व्यङ्ग्यः, तदपेक्षया निरीक्षणमेव चमत्कारकारीति भावः॥ ९॥

काकाक्षिप्तव्यङ्ग्यमुदाहरणेनैव दर्शयति—

**काकुत्स्थं प्रणतोऽम्भोधिरद्य माद्यतु रावणः।**

काकुत्स्थमिति। 'अद्य माद्यतु रावण' इति काक्वा 'मदोऽग्रे गमिष्यती'ति व्यज्यते। अद्य मदो गमिष्यतीति व्यङ्ग्यं काक्वैवाक्षिप्तमिति भावः (१)।

मध्यमकाव्यभेदानुपसंहरति—

**इत्यष्टधा गुणीभूतव्यङ्ग्यमङ्गीकृतं बुधैः॥ १०॥**

इत्यष्टधेति। अत्रापि वस्त्वलङ्कारव्यङ्ग्यसङ्करसंसृष्ट्यादिभिरुत्तमकाव्यवद् भेदा ज्ञेयाः। तदुक्तम्—

स गुणीभूतव्यङ्ग्यैः सालङ्कारैः सह प्रभेदैः स्वैः।

(१) वाक्यमिदं ख-पुस्तके नास्ति।

सङ्करसंसृष्टिभ्यां पुनरप्युद्द्योतते बहुधा ॥

इति । अत्र यदा तु वस्तुमात्रेणालङ्कारो व्यङ्ग्यस्तत्र वस्त्वपेक्षयाऽलङ्कारस्य चमत्काराधायकत्वावश्यम्भावान्न गुणीभूतव्यङ्ग्यता, किन्तु ध्वनित्वमेवेत्यवधेयम् ॥१०॥

महादेवः सत्रप्रमुखमखविद्यैकचतुरः
सुमित्रा तद्भक्तिप्रणिहितमतिर्यस्य पितरौ।
मयूखस्तेनासौ सुकविजयदेवेन रचिते
चिरं चन्द्रालोके महति वसुसङ्ख्यः सुखयतु॥ ११ ॥

इति श्रीपीयूषवर्षपण्डितजयदेवकृते चन्द्रालोकालङ्कारे
गुणीभूतव्यङ्ग्यनिरूपणनामाष्टमो मयूखः ।

विश्वेश्वरापराख्येन गागाभट्टेन धीमता ।
चन्द्रालोकस्य विवृतिर्मयूखेऽष्टमिते कृता ॥

इति मीमांसकगागाभट्टविरचितचन्द्रालोकटीकायां राकागमाख्यायाम्
अष्टमो मयूखः ।

## नवमो मयूखः ।

शब्दवृत्तिव्यञ्जनानिरूपणेन स्मृतध्वनिगुणीभूतव्यङ्ग्यभेदान्निरूप्य, यत्प्रसक्त्या यो विचारस्तत्समाप्तौ स एव बुद्धिस्थो भवतीति स्मृतशब्दवृत्तिप्रसङ्गेन लक्षणां निरूपयति—

मुख्यार्थस्याविवक्षायां पूर्वाऽर्वाची च रूढितः ।
प्रयोजनाच्च सम्बन्धं वदन्ती लक्षणा मता ॥ १ ॥

मुख्यार्थस्येति। मुख्यार्थस्याविवक्षां लक्षणाबीजं वदता मुख्यार्थबाधस्य लक्षणाबीजत्वं निरस्तम् । अर्थान्तरसङ्क्रमितवाच्येऽन्वयानुपपत्तिरूपमुख्यार्थबाधाभावेऽपि अविवक्षारूपतात्पर्यानुपपत्तिसम्भवात् । एवञ्च वेदे न्यायानुगृहीतेश्वरतात्पर्यानुपपत्तिर्लक्षणाबीजम् । अत एव न शाब्दबोधमात्रे तात्पर्यज्ञानस्य हेतुता, किन्तु लाक्षणिकशाब्दबोध एवेति । इदमवधेयम्—लाक्षणिकपदं नानुभाविकम्, वाक्यार्थानुभवे शक्तिज्ञानस्यैव हेतुत्वात् । वृत्तित्वस्य शक्तिलक्षणान्यतरत्वेन गुरुतया वृत्तिज्ञानस्य हेतुत्वे गौरवात् । तादृशपदघटितवाक्यस्थले शक्तपदानामेवानुभावकत्वसम्भवात् । न च यत्र सर्वाणि लाक्षणिकानि पदानि तत्र कथं बोध इति वाच्यम्, शक्तसुब्विभक्तित एव तद्बोधात् । तदभावे तु न शाब्दबोधः, किन्तु पदार्थस्मरणमात्रमिति दिक् ।

सम्बन्धं वदन्तीति लक्षणास्वरूपम् । शक्यार्थसम्बन्धप्रतिपादिका शब्दवृत्तिर्लक्षणे-

त्यर्थः । काव्यप्रकाशे तु—'मुख्यतावच्छेदकधर्मभिन्नधर्मावच्छिन्नबोधजनिका पुरुषे-
च्छा लक्षणा, तेनेश्वरेच्छारूपशक्तितो भेद' इत्युक्तम् । सा द्विधा पूर्वा अर्वाची च ।
पूर्वा निरूढिलक्षणा प्रयोजनप्रतीत्यनुद्देश्यका । अर्वाची प्रयोजनवती तात्पर्यविषय-
प्रयोजनप्रतीत्युद्देश्यकेत्यर्थः । यथा, जातिवाचिनो घटादिपदस्य व्यक्तौ निरूढलक्षणा ।
'कलिङ्गः लिहती'त्यादौ देशवाचिनः पुरुषे, उभयत्र प्रयोजनाभावात् । 'गङ्गायां घोष'
इत्यादौ शैत्यपावनत्वादिप्रतीतिप्रयोजनिका । अत्र घटादिपदात् स्वाश्रयाकाशो-
पस्थितेस्तत्र लक्षणावारणाय रूढितः प्रयोजनाच्चेत्युक्तम् ॥ १ ॥

**लक्षणीयस्य शब्दस्य मीलनाऽमीलनाद् द्विधा ।**
**लक्षणा सा त्रिधा सिद्धसाध्यसाध्याङ्गभेदतः ॥ २ ॥**

लक्षणीयस्येति । लक्षणीयार्थवाचकशब्दस्य मीलनं समभिव्याहारः अमीलन-
मसमभिव्याहारः, तेन द्विधा । सिद्धम् उद्देश्यम्, साध्यं विधेयम्, साध्याङ्गं विधेयान्वयि,
तद्वाचकपदनिष्ठत्वेन द्विधापि त्रिधेत्यर्थः । पूर्वोक्ता द्विविधापि लक्षणा लक्ष्यार्थवाचक-
पदसमभिव्याहृततदसमभिव्याहृतपदनिष्ठत्वेन द्विधा । 'अग्निर्माणवकः' 'शुक्ला घट'
इत्यादावाद्या । 'मञ्चाः क्रोशन्ती'त्यादौ द्वितीयेति । एवं द्विविधापि उद्देश्यवाचक-
पदनिष्ठा विधेयवाचकपदनिष्ठा विधेयान्वयिवाचकपदनिष्ठेति त्रिधा । यथा—'भो वृष !
न बुध्यसे' इत्यादौ वृषपदस्योद्देश्यवाचिनो मूर्खत्वे, 'कामिनीवचोऽमृत'मिति विधेय-
वाचिनोऽमृतपदस्याऽऽनन्दजनकत्वे, 'गङ्गायां घोष' इत्यादावुद्देश्यविधेयाऽवाचिविधेय-
घोषान्वयिवाचिनि गङ्गापदे इति भावः ॥ २ ॥

निरूढिलक्षणाया अव्यङ्ग्यतयाऽर्वाचीभेदान् व्यङ्ग्यभेदेनाह—

**स्फुटाऽस्फुटप्रभेदेन प्रयोजनमपि द्विधा ।**
**विदुः स्फुटं तटस्थत्वादर्थगत्वाद् द्विधा बुधाः ॥ ३ ॥**
**अस्फुटं चार्थनिष्ठत्वात्तटस्थत्वादपि द्विधा ।**
**लक्ष्यलक्षकनिष्ठत्वादर्थसंस्थमपि द्विधा ॥ ४ ॥**
**लक्षकस्थं स्फुटं यत्र सा विचक्षणलक्षणा ।**
**अर्थगत्वतटस्थत्वभेदाभ्यामस्फुटस्य च ॥ ५ ॥**
**अन्त्या द्विधेति विज्ञेया व्यक्तितः सा चतुर्विधा ।**

स्फुटास्फुटेति । स्फुटमगूढम् अस्फुटं गूढम् । तेन गूढव्यङ्ग्या अगढव्यङ्ग्या-
चेति द्वौ भेदौ । गूढत्वं काव्यभावनापरिपक्वबुद्धिविभवमात्रवेद्यत्वम् । अगूढत्वं
सर्वजनवेद्यत्वम् । स्फुटमपि तटस्थत्वाऽर्थगतत्वभेदेन द्विधा । तटस्थत्वं च लक्ष्य-
लक्षकेतरवृत्तित्वेन प्रतीयमानत्वम् । इदं च समासोक्तावुपयुज्यते । तथा हि—

'अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः' इत्यादौ परनायिकावृत्तान्तप्रतीतिः प्रयोजनम्, तदर्थमेव च 'मुखं चुम्बती'त्यादिलाक्षणिकप्रयोगः। 'अर्धं स्पृशती'त्यादिप्रयोगे तद्प्रतीतेः। तत्र प्रयोजनस्य लक्ष्यलक्षकेतरोदासीननिष्ठतया प्रतीयमानत्वमस्ति। एवम्—

मन्दाक्षमन्दाक्षरमुद्रमुक्त्वा तस्यां समाकुञ्चितवाचि हंसः।
तच्छंसिते किञ्चन संशयालुर्गिरा मुखाम्भोजमयं युयोज॥

इत्यादौ स्फुटमेव तटस्थं व्यङ्ग्यम्। अत्र नपुंसकमुखाम्भोजस्त्रीरूपवाण्या योजनकर्तृत्वोक्त्या नलदमयन्तीयोजने सौलभ्यं प्रतीयते। तत्प्रतीत्यर्थमेव 'युयोजे'त्यादिलाक्षणिकप्रयोगः। 'उवाचे'ति पदात्तद्प्रतीतेः। 'उपदिशति कामिनीनां यौवनमद एव ललितानि।' इत्यादौ हेत्वन्तराऽनपेक्षत्वप्रतीतिः प्रयोजनम्, तच्चार्थनिष्ठम्। तदर्थं च 'उपदिशती'त्यस्य उत्पादकत्वे लक्षणा। तत्रापि तटस्थमेव प्रयाजनम्। तेन गूढव्यङ्ग्या द्विविधा। तटस्थप्रयोजना अर्थगतप्रयोजना चेति। अर्थनिष्ठप्रयोजनवती अगूढव्यङ्ग्यापि द्वेधा। लक्ष्येति। लक्ष्यलक्षकपदार्थनिष्ठप्रयोजनकत्वादित्यर्थः। अस्य च प्रयोजनं रूपके। 'इन्दुर्मुख'मित्यत्रेन्दुपदेन इन्दुतादात्म्यवन्मुखस्य लक्ष्यत्वेन मुखनिष्ठोत्कर्षप्रतीतिः प्रयाजनम्। सा च लक्ष्यनिष्ठैव। एवं 'मुखमिन्दु'रित्यादौ मुखपदेन मुखतादात्म्यापन्न इन्दुर्लक्ष्यते। तत्र लक्षकं मुखपदम्, तदर्थनिष्ठैवोत्कर्षप्रतीतिः। इयमेव विचक्षणलक्षणेत्युच्यते। मुखनिष्ठोत्कर्षप्रतीतये मुखपदमिन्दौ लाक्षणिकं विचक्षणैः प्रयुज्यत इति। गूढव्यङ्ग्याया भेदद्वयमाह—अर्थगत्वेति। अर्थगत्वं लक्षकाऽन्यतरनिष्ठत्वम्। तटस्थत्वेति। तटस्थवृत्तित्वमित्यर्थः। गूढव्यङ्ग्यस्य तटस्थवृत्तितया लक्ष्यलक्षकपदार्थवृत्तितया च गूढव्यङ्ग्या लक्षणा द्विधेत्यर्थः। तत्र तटस्थगूढव्यङ्ग्या यथा—

लताऽवलालास्यकलागुरुस्तरुप्रसूनगन्धोत्करपश्यतोहरः।
असेवताऽमुं मधुगन्धवारिणि प्रणीतलीलाप्लवनो वनाऽनिलः॥

अत्र महतः स्वल्पचौर्ये स्नानमात्रेण शुद्धेः, तया च राजसेवायोग्यतायाः प्रतीतिः प्रयोजनम्। तदर्थमेव गुरुगन्धप्लवनपदानां लाक्षणिकानां प्रयोगः। तच्च तटस्थमेव। लक्ष्यलक्षकस्थं गूढव्यङ्ग्यं 'मुखं विकसितस्मित'मित्यादावुक्तम्। इयमपि लक्ष्यलक्षकान्यतरपदनिष्ठत्वेन द्वेधाऽवसेया। उपसंहरति—इति अनेन प्रकारेण, व्यक्तितः प्राकट्येन, सा प्रयोजनवती लक्षणा चतुर्विधेत्यक्षरार्थः। गूढव्यङ्ग्याया भेदद्वयमगूढव्यङ्ग्याया भेदद्वयं चेत्याशयः। लक्ष्यलक्षकनिष्ठत्वं तु प्रासङ्गिकमुक्तम्, न तु भेदायेति। 'विज्ञेया व्यक्तितः सा च षड्विधे'ति पाठे त्वयमर्थः—स्फुटव्यङ्ग्यावत् भेदत्रयवत्त्वेनाऽस्फुटव्यङ्ग्यात्रैविध्येन प्रयोजनवत्याः षड्विधत्वम्। एतस्मिन्पक्षे लक्ष्यलक्षककृतोऽपि भेदः। तेन गूढव्यङ्ग्या त्रिधा, अगूढव्यङ्ग्या च त्रिधेति ॥३-५॥

क्रमेणोदाहरणान्याह—

**इन्दुरेवैष तद्वक्त्रमुत्कर्षो लक्ष्यते मुखे ॥ ६ ॥**
**प्रदीपं वर्धयेत्यत्र तटस्थं मङ्गलोदयः।**

**पटोऽयं दग्ध इत्यादौ स्फुटं नास्ति प्रयोजनम् ॥ ७ ॥**

**अमृतं सूक्तमित्यादौ लक्ष्यस्थमतिहृद्यता ॥**

इन्दुरिति । इदं च लक्ष्यलक्षकनिष्ठस्फुटव्यङ्ग्याया उदाहरणम् । यदा चन्द्रपदं
मुखे लाक्षणिकं, तदा लक्ष्यमुखनिष्ठं प्रयोजनम् । यदा तु मुखपदं चन्द्रे लाक्षणिकं, तदा
लक्षकमुखपदार्थनिष्ठम् । तटस्थप्रयोजनवत्या उदाहरणं 'प्रदीप'मिति । इदं च वृद्ध्य-
र्थकवृधुधातोर्व्यतिरेकसम्बन्धेन नाशे लक्षणया प्रयोगे बोध्यम् । (१)नाशार्थकवृधधातो-
वृद्धौ लक्षणया प्रयोगेऽत्र प्रयोजनस्य वक्तृश्रोतृनिष्ठत्वात्तटस्थत्वम् । इदं च द्विविधाया
अप्युदाहरणम् । लक्षकनिष्ठस्फुटप्रयोजनवत्या उदाहरणमाह—पटोऽयमिति । अत्र
पटपदेन दग्धपदसमभिव्याहृतेन दग्धैकदेशः पटो लक्ष्यते । कर्माऽनर्हताप्रतीतिः प्रयो-
जनम् । तच्च लक्षकपटपदार्थनिष्ठम् । दग्धपदेन वा दग्धैकदेशपटलक्षणे लक्ष्यार्थनिष्ठ-
प्रयोजनकत्वमपि बोध्यम् । लक्ष्यस्थाऽस्फुटप्रयोजनवत्या उदाहरणम्—अमृतमिति ।
अमृतपदेन रसवल्लक्ष्यते । अतिहृद्यता च प्रयोजनं काव्यनिष्ठमेवेति ॥ ६–७ ॥

लक्षणाबीजसम्बन्धानाह—

**आभिमुख्यात् सन्निधानात्तथाऽऽकारप्रतीतितः ॥ ८ ॥**

**कार्यकारणभावाच्च वाच्यवाचकभावतः ।**

**इत्येवमादिसम्बन्धात् किञ्चान्यस्माच्चतुष्टयात् ॥ ९ ॥**

**सादृश्यात् समवायात् सा वैपरीत्यात् क्रियान्वयात् ।**

आभिमुख्यादिति । 'अङ्गुल्यग्रे करिशत'मिति अङ्गुल्यग्रशब्दस्य लक्ष्यदेशेना-
ऽऽभिमुख्यं सम्बन्धः । 'गङ्गायां घोष' इत्यादौ 'वृक्षाग्रे चन्द्र' इत्यादौ च सन्निधिः ।
एकत्र वास्तवोऽपरत्र भ्रान्तिविषयः । अत्र हेतुमाह—तथाकारेति । सान्निध्याकार-
प्रतीतित इत्यर्थः । कार्येति । 'घृतमायु'रित्यत्र घृतस्य लक्ष्ये आयुषि कार्यत्वम् ।
'आयुर्घृत'मित्यत्र आयुःपदलक्ष्ये घृते कारणत्वम् । भ्रमरपदोच्चारणे 'द्विरेफमुच्चार-
यती'ति वाक्ये द्विरेफपदस्य योगवृत्त्या लक्ष्यभ्रमरपदवाच्यत्वं सम्बन्धः । 'घटमुच्चा-
रयती'त्यत्र वाचकतासम्बन्धेन घटपदे लक्षणा । आदिपदेन कश्चित्तादर्थ्यम्—इन्द्रार्था
स्थूणा इन्द्रः। स्वस्वामिभावः—राज्ञः पुरुषो राजा । 'अग्रहस्त' इत्यत्र अग्रावयवे हस्त-
शब्दोऽवयवसम्बन्धात् । तात्कर्म्याद् अतक्षरि तक्षशब्द इति । 'गौर्वाहीक' इत्यत्र
सादृश्यम् । अत्र गोशब्दार्थगोत्वसहचारिणो धर्मा जाड्यमान्द्यादयो लक्ष्यमाणा अपि
गोशब्दस्य परार्थाभिधाने प्रवृत्तिनिमित्तं भवन्ति । यद्वा—स्वार्थसहचारिगुणाभेदेन परा-
र्थगता गुणा एव लक्ष्यन्ते न तु परार्थोऽभिधीयते । यद्वा—साधारगुणाश्रयणेन परार्थ एव

(१) 'इदं चे'त्यनन्तरं 'बोध्य'मित्यन्तः पाठः ख-पुस्तके नास्ति ।

लक्ष्यत इति। 'छत्रिणो गच्छन्ती'त्यत्र समवायः। स च समुदायान्तःपातित्वम्। अकुशले कुशलपदप्रयोगे वैपरीत्यं सम्बन्धः। 'युधिष्ठिरो राजे'त्यादौ तत्कार्यकारित्वमिति ॥ ८-९ ॥

प्रकारान्तरेण प्रयोजनवत्या भेदचतुष्टयमाह—

सारोपाध्यवसानाख्ये गौणशुद्धे पृथक् पृथक् ॥ १० ॥
गौणं सारोपमुद्दिष्टमिन्दुर्मुखमितीदृशम्।
गौणं साध्यवसानं स्यादिन्दुरेवेदमीदृशम् ॥ ११ ॥
शुद्धं सारोपमुद्दिष्टमायुर्घृतमितीदृशम्।
शुद्धं साध्यवसानं स्यादायुरेवेदमीदृशम् ॥ १२ ॥

सारोपेति। आरोप्यमाणारोपविषययोर्भेदेनोक्तौ सारोपा। यत्रारोपविषय आरोप्यमाणस्वरूपेणैवोक्तो न भिन्नरूपेण, तत्र साध्यवसाना। सा द्विधा, सादृश्यसम्बन्धघटिता गौणी, तदतिरिक्तसम्बन्धघटिता शुद्धेति भेदः। केचित्तु—'लक्षकपदार्थस्य लक्ष्यस्य चाभेदेन भाने गौणी, तदभावे शुद्धे'ति भेदमाहुः। तन्न, 'गङ्गायां घोष' इत्यत्र गङ्गातीरभेदभानाभावे गङ्गानिष्ठशैत्यपावनत्वादेर्घोषे प्रतीतिः कथं स्यात्। गङ्गासम्बन्धमात्रप्रतीतौ 'गङ्गायां घोषः' 'गङ्गातीरे घोषः' इत्यनयोर्भेदो न स्यात्। अतः शुद्धायामपि लक्ष्यलक्षकयोरभेदो भासत इति काव्यप्रकाशादयः। उदाहरणान्याह—गौणं सारोपमिति। 'इन्दुर्मुख'मित्यत्र सादृश्यसम्बन्धादारोप्यारोपविषययोर्भेदोक्तेश्च गौणसारोपेत्यर्थः। 'इन्दुरेवेद'मित्यत्र आरोप्यस्वरूपेणैवारोपविषयस्योक्तेः सादृश्यसम्बन्धाच्च गौणसाध्यवसानेत्यर्थः। शुद्धं सारोपमिति। 'आयुर्घृत'मित्यत्र कारणत्वसम्बन्धाद् भेदोपादानाच्च शुद्धेत्यर्थः। शुद्धं साध्यवसानमिति। 'आयुरेवेद'मित्यत्र कारणत्वसम्बन्धादारोप्यस्वरूपेणैवारोपविषयस्योक्तेः शुद्धं साध्यवसानमित्यर्थः। एतेषां सारोपाभेदानां रूपके उपयोगः, साध्यवसानाभेदानां चातिशयोक्तौ। इन्दुपदस्य तादात्म्यसम्बन्धेन मुखे लाक्षणिकत्वाच्छुद्धसारोपादिसम्भवात्। एतेन—'सादृश्यस्य सम्बन्धत्वे रूपकत्वबाधः' इत्यादि परास्तम्। सादृश्यस्य तादात्म्यघटकत्वात्तादात्म्यस्याहार्यत्वाच्च। अत्र केचित्—"गौणसारोपसाध्यवसानयोर्यदा सादृश्यसम्बन्धत्वेन भानं, तदास्तु लक्षणा। यदा सिंहनिष्ठगुणानां क्रौर्यादीनां सिंहनिष्ठगुणसजातीयगुणानां वा तत्प्रकारतया भानं, तदा सादृश्यस्य सम्बन्धत्वानुपपत्तेर्गौणी वृत्तिरेव भिन्ने"त्याहुः ॥ १०-१२ ॥

शुद्धसारोपसाध्यवसानयोर्भेदद्वयमाह—

उपादानार्पणद्वारे द्वे चान्ये इति षड्विधा।
कुन्ता विशन्ति गङ्गायां घोषो निवसतीति च ॥ १३ ॥

उपादानेति। स्वार्थमुपादायाऽत्यागेन लक्षणा स्वार्थार्पणम। त्रेण तद्विवक्षयेत्यर्थः। तेन अजहत्स्वार्था जहत्स्वार्थेति भेदद्वयम्। शक्यार्थस्य क्रियान्वये अजहत्स्वार्था, शक्यार्थस्य क्रियान्वयाभावे जहत्स्वार्थेति तात्पर्यम्। उदाहरणमाह—'कुन्ता विश-न्ती'त्यत्र कुन्तानां प्रवेशान्वयसिद्ध्यर्थं तद्वन्तः पुरुषा लक्ष्यन्ते। 'गङ्गायां घोष' इत्यत्र तु गङ्गापदार्थप्रवाहस्य न क्रियान्वयः। किन्तु तीरलक्षणार्थतदुपस्थितिमात्रमित्यर्थः। केचित्तु—'जहदजहत्स्वार्थरूपं तृतीयं भेद'माहुः। इयमेव भागत्यागलक्षणा ॥१३॥

भेदद्वयमन्यदाह—

**लक्ष्यलक्षकवैशिष्ट्यवैशिष्ट्याद् द्विविधा पुनः।**
**सरसं काव्यममृतं विद्या स्थिरतरं धनम् ॥ १४ ॥**

लक्ष्येति। तत्कार्यकारित्वसम्बन्धेनाऽमृतपदेन विशिष्टकाव्ये सुखजनकत्वं लक्ष्यते। 'स्थिरतरं धन'मिति पदद्वयेन च विशिष्टधनकार्यकारित्वसम्बन्धेन सुखजनकत्वं विद्या-याम्। तत्र विशिष्टं लक्ष्यम्, अत्र विशिष्टं लक्षकमिति भेदः। विशिष्टलक्ष्ये वैशिष्ट्यं सम्बन्धः, विशिष्टलक्षके न वैशिष्ट्यं सम्बन्धस्तत्कृतलक्षणाभेद इत्यक्षरार्थः। सरसमिति। अत्र विशिष्टकाव्योद्देशेनामृतत्वं विधेयम्। द्वितीये विद्योद्देशेन विशिष्ट-धनत्वं विधेयम्। एकत्र विशिष्टकाव्येऽन्यत्र पदद्वयेन सुखजनकत्वं लक्ष्यत इत्याशयः। केचित्तु—'गभीरायां नद्यां घोष' इत्यादौ नदीपदमेव विशिष्टनदीतीरे लाक्षणिकं गभीर-प' तात्पर्यग्राहकं यथा, तथात्रापी'त्याहुः ॥ १४ ॥

सहेतुनिर्हेतुभेदेन भेदद्वयमन्यदाह—

**तथा सहेतुरतथाभेदाभिन्ना च कुत्रचित्।**
**सौन्दर्येणैव कन्दर्पः सा च मूर्तिमती रतिः ॥ १५ ॥**

तथेति। उदाहरणे सौन्दर्येणेति हेतुः। सा चेति द्वितीयोदाहरणम् ॥ १५ ॥

**शब्दे पदार्थे वाक्यार्थे सङ्ख्यायां कारके तथा।**
**लिङ्गे चेयमलङ्काराङ्कुरबीजतया स्थिता ॥ १६ ॥**

शब्द इति। शब्दे 'अग्नेरग्निर्नष्ट' इत्यत्र अग्निशब्देनाऽर्चिर्लक्ष्यते। अर्थे 'मुखं चन्द्र' इत्यत्र इत्यत्र मुखपदार्थेन तादात्म्यं लक्ष्यते। 'यद् गुरुवचनमाकर्णयन्ति तदमृतं पिबन्ता'ति वाक्यार्थे। अत्र वाक्यार्थयोरैक्यारोपात्। 'त्वन्नेत्रयुगलं धत्ते लीलां नीलाम्बुजन्मनोः' इति वाक्येन शोभाविशेषो लक्ष्यते। 'यावन्तो युद्धप्रियास्तावन्तो-ऽर्जुना' इत्यत्र बहुत्वसङ्ख्यया पूज्यत्वम्। 'स्थाली पचती'त्यधिकरणकारके। 'हस्तिन्यां हस्ती'ति लिङ्गे। रसादेर्बीजत्वेनाऽलङ्कारादेरङ्कुरत्वेन स्थिता, अङ्गीकृतेत्यर्थः ॥१६॥

**महादेवः सत्रप्रमुखमखविद्यैकचतुरः**
**सुमित्रा तद्भक्तिप्रणिहितमतिर्यस्य पितरौ।**

मयूखस्तेनासौ सुकविजयदेवेन रचिते
चिरं चन्द्रालोके महति नवसङ्ख्यः सुखयतु ॥ १७ ॥

इति श्रीपीयूषवर्षपण्डितजयदेवकृते चन्द्रालोकालङ्कारे लक्षणानिरूपणाख्यो नवमो मयूखः ।

विश्वेश्वरापराख्येन गागाभट्टेन धीमता ।
चन्द्रालोकप्रकाशोऽयं मयूखे नवमे कृतः ॥

इति मीमांसकगागाभट्टविरचितचन्द्रालोकटीकायां राकागमाख्यायां नवमो मयूखः ।

## दशमो मयूखः ।

लक्षणां निरूप्य तद्धेतुभूतां शक्तिं निरूपयति—

धर्मं कञ्चित् पुरस्कृत्य प्रायः शब्दः प्रवर्तते ।
यथार्थं स्पष्टमाचष्टे शब्दस्तामभिधां विदुः ॥ १ ॥

धर्ममिति । यया वृत्त्या शब्दः साक्षादर्थमाचष्टे साऽभिधा । अव्यवधानेन शब्दजन्यार्थप्रतीत्यनुकूला वृत्तिरभिधेति लक्षणम् । साक्षात्त्वं च अर्थान्तरप्रतीत्यद्वारकत्वम् । इदं च लक्षणावारणाय । तादृशचेष्टादिवारणायाऽवच्छिष्टम् । सा च 'अस्मात्पदादयमर्थो बोद्धव्य' इत्याकारिका ईश्वरेच्छेति न्यायविदः । पदार्थान्तरमिति मीमांसकाः । अस्या एव सङ्केत इति व्यवहारः । साक्षाच्छब्दजन्यार्थप्रतीतिसहकारिज्ञानविषयत्वं वा । ननु शक्तिज्ञानस्य सहकारित्वे किं बीजम् ? अगृहीतशक्तिकशब्दादर्थप्रत्ययाभाव एवेति गृहाण ॥ १ ॥

स धर्मः षड्विधस्तेन षोढा शब्दप्रवृत्तिरित्याह—

जात्या गुणेन क्रियया वस्तुयोगेन संज्ञया ।
निर्देशेन च मन्यन्ते षड्विधामभिधां बुधाः ॥ २ ॥
गौः शुक्लः पाचको दण्डी डित्थः कंस इति क्रमात् ।
कं संहिनस्ति कंसारिर्नरं कं च समाश्रितम् (१) ॥ ३ ॥

(१) 'कृष्णः कं हन्ती'ति प्रश्नस्योत्तरम्—'नरमिति । 'समाश्रित'मित्यत्र 'सम् आश्रितम्' इति पदच्छेदः । कम् आश्रितं ककारेण युक्तं, नरं नरकासुरम् अथ च सम् आश्रितं सकारेण युक्तं, कं सानुस्वारं ककारं, कंसमिति यावत् । श्रीकृष्णो नरकासुरं कंसञ्च हतवानित्यर्थः ।

जात्येति। जातिः समानेष्वनुगतो व्यावर्तकश्च धर्म इत्युच्यते। अयमाशयः-षड्विधः शब्दः, जातिशब्दो गुणशब्दः क्रियाशब्दो यदृच्छाशब्दो वस्तुशब्दो निर्देशशब्द इति। सर्वेषु द्रव्यवाचकघटादिपदेषु जातिरेव वाच्या वाच्यतावच्छेदिका वा। इदं चाग्रे स्फुटीकरिष्यते। नीलशुक्लादिपदेषु गुणपदसमानाधिकरणेषु गुणिवाचिसमानाधिकरणेष्वपि गुण एव वाच्यो न नीलत्वादिजातिः, तदभावात्। नापि गुणी, गौरवात् लक्षणया सामानाधिकरण्याद्युपपत्तेश्च। वाच्यतावच्छेदको वा गुणः। एवं पाचकादिपदे पाकक्रियैव वाच्या, तस्या एव प्रतीतेः। तस्याश्चैकत्वाद् वाच्यत्वं वाच्यतावच्छेदकत्वं वा। एवं 'दण्डी'त्यादौ दण्डसम्बन्धो वाच्यो वाच्यतावच्छेदको वा। पाचकादिपदे पाकस्य विशेषणत्वेन भानादिह दण्डसम्बन्धस्य विशेषणत्वेन भानाद् भेदः। डित्थादियदृच्छाशब्देषु शब्द एव वाच्यो वाच्यतावच्छेदको वा। एवं कंसपरीक्षिच्चामुण्डादिपदेषु निर्देश एव वाच्यः शक्यतावच्छेदको वा। निर्देशश्च वाचकवर्णानां स्वपरत्वम्। यथा 'कंस'मित्यत्र कंकारसंकारावेव कंसपदे प्रतीयेते। तत्र नरकपदान्तर्गतसानुस्वारककारेण नरकप्रतीतिः, समाश्रितपदान्तर्गतसानुस्वारसकारेण च समाश्रितप्रतीतिः (?)। तेन स्वोपस्थाप्यसानुस्वारककारसकारवत्पदवत्त्वसम्बन्धेन कंकारसंकारवत्त्वैव वाच्या वाच्यतावच्छेदिका वेति। एवं चामुण्डादिपदेऽपि चण्डमुण्डानयनवत्त्वादिसम्बन्धेन वर्णत्रयमेव शक्यम्। एवं परीक्षिदादिपदे 'परिक्षीणे कुले जात' इत्यादिसम्बन्धेन(१) तद्वर्णवत्त्वं बोध्यम्। एतेषु च जातिगुणक्रियासम्बन्धासिद्धेर्न जात्यादिशब्दत्वं नापि यदृच्छाशब्दत्वम्, सम्बन्धप्रदर्शनात्। नापि यौगिकत्वम्, शुद्धतन्मूल(संभिन्नेति)-योगत्रयासम्भवात्। नापि लक्षणा, सम्बन्धाग्रहात्। द्विरेफपदस्य भ्रमरपदादौ रेफद्वयसम्बन्धज्ञानसत्त्वाद् युक्ता लक्षणा। नापि लक्षितलक्षणा, लक्षणाया अभावात्। अतस्ते वर्णा एव शक्यतावच्छेदकाः शक्या वेति। निर्देशमेव प्रदर्शयति-कंसमिति। कंसारिः कंसं हिनस्ति। कंकारसंकारयोर्व्युत्पत्तिः-नरं कं च समाश्रितमिति ॥२-३॥

एतदेवोपपादयति—

**न योगादेरायतनं न सङ्केतनिकेतनम्।**
**वृत्त्या निर्देशशब्दोऽयं मुख्यया स्वाभिधेयया ॥ ४ ॥**

नेति। स्वाभिधेयया वृत्त्या, स्वं वर्णद्वयमेवाऽभिधेयं यस्यामिति बहुव्रीहिः। मुख्यया वृत्त्या, शक्त्येत्यर्थः। अत्र केचित्—व्यक्तिसङ्केतपक्षे सर्वासु व्यक्तिषु सङ्केत एकस्यां वा। नाद्यः, आनन्त्यात्। नान्त्यः, व्यभिचारापत्तेः। 'गौः शुक्लश्चल' इत्यादिपदानां व्यक्त्यैक्येनाऽर्थभेदाभावात्सहप्रयोगाद्युपपत्तेश्च। अतो धर्म एव शक्तिः। हेतुतापि शक्तिग्रहस्य पदत्वधर्मितावच्छेदकगोत्वप्रकारकनिश्चयत्वेन। जातौ च निरवच्छिन्नैव प्रकारतेति लाघवम्। अन्यथा गोत्वधर्मितावच्छेदकपदप्रकारक-

(१) 'वर्णत्रयमेव' इत्यारभ्य एतदन्तः पाठः ख-पुस्तके न दृश्यते।

निश्चयत्वेन हेतुतायां पदत्वस्य प्रकारतावच्छेदकतया गौरवमिति । आकाशादिपदे-ऽनन्तव्यक्तिकल्पनाभावेन न धर्मे शक्तिः । एवञ्च—सर्वत्र नानानीलपीतरूपव्यक्तिषु नीलत्वपीतत्वादिजातिर्नीलपीतादिपदवाच्या । 'चल' इत्यत्रापि चलनक्रियानिष्ठा जातिरेव । डित्थादिशब्दानामपि बालाद्यवस्थापरिणतनानापरिमाणरूपविरुद्धधर्मा-ध्यासाद् भिन्नडित्थाद्यर्थनिष्ठडित्थत्वजातिरेव वाच्येति । 'बालवृद्धशुकोदीरितशब्द-भेदेन शब्दनिष्ठैव जातिर्वाच्ये'त्यपि केचित् । तत्राप्ययं विभागः—जातिरेव नामार्थः । उक्तयुक्त्या आक्षेपाच्च व्यक्तिलाभः । अर्थापत्तिः समानवित्तिवेद्यत्वं वाऽऽक्षेपः, निरूढ-लक्षणा वा । तेन वृत्त्या प्रकृत्युपस्थाप्यत्वस्य प्रकृत्यर्थत्वान्न प्रत्ययार्थान्वयाद्यनुपपत्तिः । 'शक्यादन्येन रूपेण भाने भवति लक्षणा' इति नियमस्याऽप्रयोजकत्वादिति । एवञ्च-घटशाब्दबोधे घटत्वशक्तिज्ञानत्वेन कारणतायां लाघवम् । अन्ये तु—सर्वत्र व्यक्तिरेव पदार्थः । अशक्याया अपि जातेरुपलक्षणतया तदुपलक्षितव्यक्तिशक्त्यङ्गीकारेण न व्यभिचाराऽऽनन्त्यशक्तिकल्पनादिदोषः । तदुक्तम्—

आनन्त्येऽपि हि भावानामेकं कृत्वोपलक्षणम् ।
शब्दः सुकरसम्बन्धो न च व्यभिचरिष्यति ॥

परे तु—जातिविशिष्टा व्यक्तिर्वाच्या । अन्यथा घटत्वांशे शक्त्यभावेन घटत्वादेः शाब्दविषयत्वासम्भवात् । न च घटविशेष्यकघटत्वप्रकारकबोधे जातिशक्तिज्ञानत्वेन व्यक्तिशक्तिज्ञानत्वेन वा हेतुत्वान्नायं दोष इति वाच्यम् । द्रव्यादिपदानामप्येव-मापत्तौ घटादिपदाद् द्रव्यत्वप्रकारकबोधापत्तेः । न च पदज्ञानस्य सम्बन्धिज्ञानविधया हेतुत्वेन येन रूपेणोपस्थितयोः सम्बन्धस्तेन रूपेणोपस्थापकत्वनियमः । एवञ्च—घटत्वांशे शक्त्यग्रहेऽपि तेनैव रूपेणोपस्थितिरिति वाच्यम् । उपस्थितस्याऽऽकाशादेरन्व-यापत्तेरिति । एवञ्च—द्विकं प्रातिपदिकार्थं इति । यद्वा—जातिव्यक्तिलिङ्गानीति त्रिकमर्थः । लिङ्गं द्वेधा, शास्त्रीयव्यवहारहेतुर्लौकिकं च । अवयवसंस्थानविशेषवत्त्व-मन्त्यं तत्तद्व्यक्तिविशेषनिष्ठं व्यवस्थितम् । 'इयं व्यक्तिरयं पदार्थ इदं वस्त्वि'ति सर्वत्र व्यवहारादव्यवस्थितं लिङ्गत्रितयनिबन्धनकार्योपयुक्तमाद्यम् । तच्च सत्त्वरजस्तमोगुणानां वृद्ध्यपचयस्थितिरूपमिति पतञ्जलिस्वामिनः । 'स्त्रीत्वपुंस्त्वनपुंसकत्वादिजाति-रेवे'त्यन्ये । तत्र लौकिके लिङ्गे शक्तिः, अलौकिके गौण्या प्रयोग आरोपात् । 'पशुना यजेते'त्यादौ मुख्यपुंस्त्वविवक्षणान्न स्त्रीपशुना यागप्रसङ्ग इत्याहुः । अन्ये तु—'पशु-शब्दस्य लिङ्गत्रयसाधारण्येन दोष(१)प्रसङ्गेऽपि मान्त्रवर्णिकछागपदस्य पदव्यवस्थित-प्रयोगेण लौकिकपुंस्त्वे शक्तिमादाय दोषोद्धार' इत्याहुः । यद्वा—शास्त्रीयं लिङ्गं शब्द-निष्ठमेव, लौकिकं त्वर्थनिष्ठम् । तत्रार्थनिष्ठे शक्तिः । कुमारब्राह्मणछागादिपदानां तत्रैव प्रयोगात् । अत एव 'प्राग्मा अग्निं भरते'त्यत्रोपस्थितव्यक्तिगतपुंस्त्वे शक्तिस्वीका-रात् केवलमेष्यामूहो न । शब्दगते च लक्षणेति । अत्र टाबादीनां ङीबादीनां स्त्रीप्रभृतीनां

(१) दोष—इति ख—पुस्तके नास्ति ।

द्योतकत्वमस्मिन्मते बोध्यम् । 'डीबादीनामेव वाचकत्व'मित्यपि केचित् । यद्वा–जातिव्यक्तिलिङ्गसंख्या इति चतुष्कं प्रातिपदिकार्थः । यद्वा–कारकमपि प्रातिपदिकार्थं इति पञ्चकं प्रातिपदिकार्थः । 'दधि पश्ये'त्यादौ प्रातिपदिकादेव तत्प्रत्ययात् । एवञ्च—विभक्तेर्द्योतकत्वमात्रम् । तेनैव च नामार्थप्रकारकशाब्दबोधे सुबादिजन्योपस्थिते-र्हेतुत्वनिर्वाह इति दिक् । एतच्च सर्वं महाभाष्ये 'सरूपाणामेकशेष' इति सूत्रे स्पष्टम् ।

आलङ्कारिकास्तु–षट्कं प्रातिपदिकार्थः । 'विषयत्वमनादृत्य शब्दैर्नार्थः प्रकाश्यते ।' इति मतावष्टम्भेन पञ्चकं प्रातिपदिकार्थः, परन्तु शब्दस्यापि प्रातिपदिकार्थत्वात् षट्कं प्रातिपदिकार्थः । तथा हि–'गामुच्चारये'त्यादिलौकिकप्रयोगे 'कवतीषु रथन्तरं गायती'त्यादिवैदिकप्रयोगे च शब्दोऽपि भासत इति निर्विवादम् । वृत्तिविषय एव शाब्दबोधे विषय इति च नियमः । तथा च–शब्दस्यापि शब्दशक्तिविषयतया भानमङ्गीकार्यम् । 'तत्र घटादिपदे शब्दनिरूपितापि शक्तिर्भिन्ना कल्प्यत' इति केचित् । अन्ये तु–शक्तिविषयोऽर्थो भासते । शक्तिविषयत्वं च–आश्रयतानिरूपकतासम्बन्धेन शक्तिमत्त्वम् । तथा च–अर्थशक्तिज्ञानेनैव पदस्यापि भानम् । तेन घटादिपदानां शक्तिसम्बन्धेन घटत्वादिवत् पदमपि शक्यम् । एतावांस्तु विशेषः यत् सम्बन्धस्योभयनिरूप्यत्वेन सम्बन्धिद्वयोपस्थापकत्वाविशेषाद् घटत्वाद्यवच्छिन्नशक्त्यैव घटत्वादिवच्छब्दस्यापि तयैव वृत्त्योपस्थितौ सत्यामर्थबोधे तात्पर्ये सति तत्र विशेषणतया स शब्दो भासते । तत्रापि घटत्वादिरूपेण विशिष्यशक्तिग्रहवतो घटजात्युभयप्रकारको बोधः । नलयुधिष्ठिरादिपदवद् विशिष्यशक्तिग्रहाभावे तु शब्दव्यक्तिविशेष्यकः केवलं पदप्रकारको नलपदवाच्यः कश्चिदित्याकारको बोधः । यत्र तूक्तोदाहरणेषु शब्दमात्रे तात्पर्यम् , तदा तयैव शक्त्या शब्दस्वरूपस्य प्राधान्येन भानमिति । एवञ्च—क्वचित्तात्पर्यवशात् शब्द एव प्राधान्येन भासते क्वचित्तदभावेऽर्थविषयत्वेनेति सिद्धम् । अत एव 'अग्निहोत्रं जुहोती'त्यादौ नामार्थविशेषणत्वेनाऽन्वयादग्निहोत्रनामकेनेति बोधः । एतेना'ऽग्निहोत्रनामके निरूढलक्षणे'ति निरस्तम् । अनुपपत्त्यभावात् । मत्वर्थे लक्षणातौल्येन सिद्धान्ताऽनुदयाच्च । अतः शब्दोऽपि वाच्यः । एवञ्च—

"उदेति सविता ताम्रस्ताम्र एवास्तमेति च ।
सम्पत्तौ च विपत्तौ च महतामेकरूपता ॥

इत्यादौ 'रक्त एवास्तमेति' इति यदा क्रियते तदा पदान्तरप्रतिपादितः स एवार्थोऽर्थान्तरतयेव प्रतिभासत" इति काव्यप्रकाशोक्तिः सङ्गच्छते । अतः षट्कं प्रातिपदिकार्थं इति दिक् । तदुक्तम्—

ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा ।
तथैव सर्वशब्दानामेते पृथगवस्थिते ॥

इति । 'सुब्विभक्तीनामव्यभिहितकर्तृकर्माभिधायिनी प्रथमे'ति केचित् । 'प्रातिपदिकार्थ प्रथमा' इत्यन्ये । कर्तृत्वं च यत्नाश्रयत्वम् । यत्नवाचिक्तनाऽऽश्रयवाचितृचा च

कर्तृपदनिष्पत्तेः । 'रथो गच्छति नश्यति जानती'त्यादौ रथादौ कर्तृपदप्रयोगो भाक्तः । यद्वा—कारकान्तराप्रयोज्यत्वे सति कारकान्तरप्रयोजकत्वं तत्त्वम् । 'धातूपात्तव्यापाराश्रयत्वं तत्त्व'मिति वैयाकरणाः । एवञ्च—रथादावपि मुख्य एव प्रयोगः । तच्चानुकूलव्यापारसम्बन्धेन, क्वचित्प्रतियोगित्वादिसम्बन्धेन । 'कूलं पिपतिषती'त्यादौ तु भाक्तः प्रयोगः । द्वितीयायाः कर्मत्वमर्थः, तच्च—कर्तुरीप्सिततमत्वम् । 'दुःखमनुभवति' 'शत्रुं द्वेष्टि' इत्यादौ भाक्तः प्रयोगो द्वितीयायाः । यद्वा—परसमवेतक्रियाजन्यफलशालित्वं धात्वर्थतावच्छेदकफलशालित्वं वा । तेन 'नदी वर्धते नश्यती'त्यादौ कूलादौ न कर्मत्वम् । वृद्धेरवयवोपचयमात्रवाचित्वात् । गमियुजिपतीनां च संयोगविभागावच्छिन्नक्रियावाचितया न पूर्वोत्तरप्रदेशयोः । पतेर्गुरुत्वासमवायिकारणकक्रियामात्रवाचितयाऽधःसंयोगावच्छिन्नक्रियावाचित्वाभावेन न भूमेः कर्मत्वम् । 'नरकं पतती'त्यत्र पतिः प्राप्तौ भाक्तः। करणत्वं तृतीयार्थः । तच्च—कर्तृव्यापार्यत्वं व्यापारवदसाधारणकारणत्वम् , फलायोगव्यवच्छिन्नकारणत्वं वा । पूर्वलक्षणे दण्डेन्द्रियादीनां घटचाक्षुषादौ करणत्वम्, द्वितीये तु तत्संयोगस्य । 'चैत्रेण पच्यते' इत्यादावाधेयत्वे तृतीया भाक्ता । 'जटाभिस्तापस' इत्यादौ विशेषणत्वे । 'गोत्रेण गार्ग्य' इत्यादावभेदे । सम्प्रदानत्वं चतुर्थ्यर्थः । तच्च—त्यागजन्यफलभागित्वेनोद्देश्यत्वविशिष्टप्रतिग्रहीतृत्वम् । न तु त्यागोद्देश्यत्वमात्रम् । देवतायामतिव्याप्तेः । अत्रोद्देश्यत्वे प्रतिग्रहीतृत्वे च शक्तिः। अन्यद् धातुसमभिव्याहारादिलभ्यम्। 'रजकाय ददाती'त्यादौ लक्षणा । अपादानत्वं पञ्चम्यर्थः । तच्च—परसमवेतक्रियाजन्यविभागाश्रयत्वम् । यथा 'वृक्षात् पर्णं पतती'त्यत्र वृक्षः । पर्णस्यापादानत्ववारणाय परसमवेतेति । 'व्याघ्राद् बिभेती'त्यादौ लक्षणा । सम्बन्धमात्रं षष्ठ्यर्थः । स द्विविधः, साक्षात् परम्पराक्रूपश्च । लक्षणया योग्यताबलेन वा लभ्यः। सप्तम्या अधिकरणत्वमर्थः। तच्च 'स्थाल्यां पचति, गृहे पचति, मध्याह्ने पचती'त्यादिप्रयोगात् साक्षात्परम्परासाधारणं व्यापारतत्कारकद्वारकम् । 'चर्मणि द्वीपिनं हन्ती'त्यादौ निमित्ते लक्षणा । निमित्तत्वं चाननुगतं कार्यत्वोपलक्षणत्वादि । निमित्तेऽपि शक्तिरित्यन्ये । कर्मत्वकरणत्वादीनां साक्षात् क्रियान्वयः । 'जटाभिस्तापस' इत्यादावित्थंभूतलक्षणे तृतीयायाः क्रियान्तरसम्बन्ध (१) इति लाक्षणिकत्वमेव ।

एवं समासेष्वपि क्वचित् शक्त्या बोधः, क्वचिल्लक्षणया । तथा हि—समासश्चतुर्विधः, अव्ययीभावतत्पुरुषबहुव्रीहिद्वन्द्वभेदात् । समासत्वं च—अव्ययीभावादिचतुष्कान्यतमत्वम् । अव्ययीभावत्वं च अव्ययार्थविशेष्यकसमासत्वम् । यथा 'सूपप्रती'त्यादौ सूपलेश इति बोधात् । एवम् 'उपकुम्भ'मित्यादावपि कुम्भसामीप्यबोधात् । 'उन्मत्तगङ्ग'मित्यादिनित्यसमासेऽपि अव्ययार्थदेशस्य प्राधान्याल्लक्षणसमन्वयः । नित्यसमासत्वं च—अविग्रहत्वस्वमस्वपदविग्रहत्वं च । तत्रैतस्याऽविग्रहसमासतया देशे

(१) अत्र 'द्वारकत्वच्युतक्रियासम्बन्ध' इत्यधिकं क-पुस्तके ।

रूढत्वादव्ययार्थप्राधान्यमव्याहतम् । एवं 'तिष्ठद्गु दोहनकालः' 'त्रिमुनि व्याकरण'-मित्यादावप्यव्ययार्थप्राधान्यं बोध्यम् । एतेन 'पूर्वपदार्थप्रधानोऽव्ययीभाव'इति प्राचीनोक्तिरपास्ता । 'सूपप्रति' 'उन्मत्तगङ्ग'मित्यादावव्याप्तेः । यद्वा, अन्यपदार्थप्राधान्ये 'उन्मत्तगङ्ग'मित्यादौ 'अन्यपदार्थे च संज्ञाया'मिति सूत्रविहिताव्ययीभावेऽवयवार्थयोगाभावेन मुख्यसमासत्वाभावात् । तदधिकारपाठस्य तन्निमित्तकाऽमादेशस्वरादिप्रयोजनकत्वात् । 'तिष्ठद्गुप्रभृतीनि चे'तिगणपाठपठितसंज्ञानां तत्कार्यव्याप्त्यर्थमव्ययीभावत्वे विहिते तदपठितानामव्यव्ययीभावत्वविधानात् । एवं 'पारेगङ्ग'मित्यत्रापि अव्ययरूपपारेपदार्थप्राधान्यात् । 'त्रिमुनि व्याकरणम्' 'एकविंशति भारद्वाज'-मित्यादावुभयपदलक्ष्यविद्याजन्मसम्भवे प्राधान्यात्समासस्य चाव्ययत्वादत्र लक्षणसमन्वयः । उत्तरपदार्थप्रधानसमासत्वं तत्पुरुषत्वमिति जीर्णाः । तत्र 'अर्धपिप्पली'त्यादावव्याप्तेः । अतो विग्रहकालीनप्रथमान्तपदार्थोत्तरपदार्थान्यतरप्रधानकसमासत्वं तत्पुरुषत्वम् । 'प्राप्तजीविकः' 'पूर्वकाय' इत्यादावपि । 'स्नातानुलिप्तः' 'कृताकृत'मित्यादौ । अनुलेपनपूर्वकालीनस्नानवान् स्नानोत्तरकालीनानुलेपनवानिति बोधेन लक्षणनिवेशः । 'कृताकृत'मित्यत्राप्यकृतविशिष्टस्यैव प्राधान्याभावात् । अस्ति चेदं त्रिविधेऽपि तत्पुरुषे । 'राजपुरुष'इत्यादिव्यधिकरणे, 'नीलोत्पल'मित्यादिसमानाधिकरणे, 'पञ्चाग्नि'-रित्यादौ द्विगुरूपे च । उक्तस्थलेऽप्यर्धपदार्थे प्राधान्यान्नाव्याप्तिः । 'एवम् 'अतिप्रज्ञो' 'निष्कौशाम्बि'रित्यादावपि प्रथमान्ताऽत्यादिपदानामतिक्रान्तनिष्क्रान्तादिपुरुषे लाक्षणिकानामर्थस्य प्राधान्याल्लक्षणसमन्वयः । एवम् 'उच्चावचनिश्चितापचित'मित्यादावपि उच्चमेवाऽवचं निश्चितमेवापचितमिति बोधादुत्तरपदार्थप्राधान्योपपत्तिः । एवमन्यत्राप्यवधेयम् । अत्र प्राधान्यं सुब्विभक्त्यर्थान्वयद्वारा क्रियान्वयित्वम् । समस्यमानपदार्थातिरिक्तपदार्थप्रधानकबोधजनकसमासत्वं बहुव्रीहित्वम् । वर्तते चेदं चित्रग्वादिपदे । न च 'द्वित्रा' इति बहुव्रीहौ 'सङ्ख्ययाऽव्यये'ति सूत्रविहिते 'द्वौ वा त्रयो वे'त्यर्थकेऽव्याप्तिः । 'द्वित्रा गच्छन्ती'ति वाक्येन 'अल्पे गच्छन्ती'ति बोधादन्यपदार्थप्रधानत्वस्य व्याहते रूपान्तरेण सङ्ख्येयप्राधान्ये बहुव्रीहिरिति सूत्रार्थः । अत्र चाल्पत्वेन बोधाद् रूपान्तरेण बोधः । 'उपदशा' इत्यादावेकादशत्वादिना । एवं 'केशाकेशि' 'मुष्टीमुष्टी'-त्यादावन्यपदार्थयुद्धत्वेन प्राधान्यमिति लक्षणसमन्वयः । एवं 'सपुत्र' इत्यादौ तुल्यवदेकक्रियान्वयित्वेन रूपेणाऽन्यपदार्थस्य पित्रादेः प्राधान्यमिति । अयं च द्विविधः, तद्गुणसंविज्ञानोऽतद्गुणसंविज्ञानश्चेति । 'लम्बकर्णमानये'त्यादावाद्यः । ( 'दृष्टसागरमानये'त्यादावन्त्यः । )(१)

एवं दशलकाराणां तत्त्वेन कृतौ व्यापारे वा शक्तिः । न च 'लः कर्मणि च भावे चे'ति पाणिनिस्मृतेरनभिहिताधिकारकर्तृकर्मवाचिद्वितीयातृतीययोः 'चैत्रः पचति

( १ ) नाम्ना निर्दिष्टपूर्वः प्राप्तावसरोऽपि द्वन्द्वसमासो नात्र किञ्चित्प्रपञ्चितो दृश्यते, अतोऽत्रत्यः कश्चिदंशो लेखकप्रमादेन त्रुटितोऽस्तीति प्रतीयते ।

तण्डुलम्' 'चैत्रेण पच्यते तण्डुल' इत्यादावव्यवस्थापत्तिवारणाय च कर्तृकर्मणी वाच्ये । लादेशतिबादिभिः कर्तृकर्मसङ्ख्याऽनभिधानस्य द्वितीयातृतीयानियामकत्वात् । 'लः कर्मणि च भावे चाकर्मकेभ्यः' 'तङानावात्मनेपदम्' 'शेषात्कर्तरि परस्मैपदम्' 'तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः' 'तान्येकवचनद्विवचनबहुवचनान्येकशः' 'द्व्येकयोर्द्विवचनैकवचने' 'बहुषु बहुवचनम्' इत्येतेषां सूत्राणां वाक्यैकवाक्यतया तथार्थलाभात् । कृतित्वजातेर्वाच्यतावच्छेदकतया लाघवानुरोधाच्च । एवं लडादेशशानचोऽपि आदेशिस्मरणद्वारा कृत्यभिधायकत्वमेव । कर्तृकर्मणोस्तु निरूढलक्षणा । न च 'कर्तरि कृ'दिति स्मृतिविरोधः, तस्या ण्वुलादिविषयत्वस्य त्वयाऽपि वाच्यत्वात् । अन्यथा 'पच्यमान' इति कर्मणि शानचोऽनुपपत्तेः । जक्षस्य-मानाधिकरणं तु निरूढलाक्षणिककर्त्रभिप्रायं व्याख्येयम् । 'कारक' इत्यादिण्वुलादीनां 'पच'न्नित्यादिशतृकृतां च (१)कर्ता वाच्यः । न च तत्र लाघवात्कृतिर्वाच्या । लाघवस्य स्मृतितो दुर्बलत्वात् , स्मृतेरन्यथाव्याख्यानानुपपत्तेश्च । लट्त्वादिविशेषाणां तु वर्तमानत्वादौ शक्तिः । तथा हि—'वर्तमाने लट्' । 'परोक्षे लिट्' । भूतानद्यतनपरोक्ष इत्यर्थः । 'अनद्यतने लुट्' । भविष्यत्यनद्यतन इत्यर्थः । 'लृट् शेषे च' । क्रियार्थायां क्रियायां शुद्धे भविष्यति चेत्यर्थः । 'लिङर्थे लेट्' । 'लोट् च' । भवतु । 'अनद्यतने लङ्' । भूतानद्यतनपरोक्षे लङ् । अभवत् । 'विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्' । प्रवर्तनायां लिङ् इत्यर्थः । यजेत । 'लुङ्' । अद्यतनानद्यतनपरोक्षापरोक्षे साधारणे भूत इत्यर्थः । अभूत् । 'हेतुहेतुमतोर्लिङ्', 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' । अभविष्यत् । अनुप्रयोगादौ 'यजति स्म युधिष्ठिर' इत्यादौ तु लक्षणा ।

एवं क्त्वाणमुल्तुमुनादीनां धातुसम्बन्धाधिकारविहितसामान्यशक्त्या क्रियार्थत्वं विशेषशक्त्या तूत्तरकालत्वादि वाच्यम् । धातूनां फले फलव्यापारयोर्वा शक्तिः । 'पचती'त्यादौ विक्लित्तितदनुकूलव्यापारयोर्बोधात् । अनुकूलत्वं च संसर्गलभ्यम् । एवं यजतेर्द्रव्ये त्यागे देवतायामुद्देश्ये च शक्तिचतुष्टयम् । देवताया उद्देश्ये द्रव्यस्य त्यागे विशेषणत्वं व्युत्पत्तिलभ्यम् । उद्देश्यत्यागयोस्तु समप्राधान्यम् । एवं जुहोतेरधिका प्रक्षेपे शक्तिरिति पञ्च शक्तयः । उद्देश्यत्यागप्रक्षेपाणां समप्राधान्यम् । एवं ददातेः स्वत्वे ध्वंसे परस्मिन् स्वत्वे उत्पत्तौ व्यापारे च शक्तिरिति षट् शक्तयः । स्वत्वध्वंसपरस्वत्वोत्पादनयोः प्राधान्यम् । एवमन्यदप्यूह्यम् । इमानि च फलानि । धातोः फले शक्तिर्व्यापार आख्यातार्थ इति मण्डनः । अव्ययतद्धितानां 'पचतितरां' 'पचतिकल्प'मित्यादीनाम् अतिशयत्वेषदसमाप्तत्वादौ शक्तिः । नञः संसर्गाभावाऽन्योन्याभावयोः शक्तिः । अन्वयितावच्छेदकमेवाऽभावप्रतियोगितावच्छेदकतयाऽन्वेति, व्युत्पत्तिबलात् । 'भूतले घटो नास्ति' 'घटो न पट' इत्यादौ तथैव बोधात् । बोधव्यवस्थायां च सप्तम्यन्तपदसमभिव्याहारस्यात्यन्ताभावबोधे समानविभक्तिकत्वस्य चाऽन्योन्याभावबोधे कारणत्वम् ।

(१) 'पचन्नित्यादिशतृकृतां चे'ति ख–पुस्तके नास्ति ।

अत एव 'नानुयाजे'ष्वित्यत्र पर्युदासे लक्षणा । अत्यन्ताभावबोधसामर्थ्यः सत्त्वेना-ऽन्योन्याभावस्य लक्षणया बोधादिति केचित् । तत्तुच्छम् । 'न पचति चत्रः' 'चत्रस्य न धन'मित्यादावत्यन्ताभावबोधो न स्यात् । अतो नञ्विनिर्मोके अभेदान्वयाकाङ्क्षा तदनाकाङ्क्षा च अन्योन्यात्यन्ताभावबोधसामग्रीति युक्तम् । 'नानुयाजे'ष्वित्यत्र पर्युदासे लक्षणेति ग्रन्थस्त्वनादरणीयः । त्वतलादिभावप्रत्ययस्य 'घटत्वं पटत्व'-मित्यादौ घटत्वत्वादिकमर्थः । घटत्वत्वं च–घटेतरासमवेतत्वे सति घटनिष्ठान्योन्या-भावप्रतियोगितानवच्छेदकत्वे सति समवेतत्वम् । अत्रेतरसमवेताभावसकलनिष्ठान्योन्या-भावावच्छेदकसमवेतत्वेषु सन्त शक्तयः । संसर्गबोधो व्युत्पत्त्या । 'सत्त्व'मित्यादावेक-देशे लक्षणा । अत्र सदितरासमवेतत्वस्याप्रसिद्धेः । एवं 'प्रमेयत्व'मित्यत्रापि । एवमन्य-दूह्यम् । केचित्तु–धर्मे शक्तिः । कृत्तद्धितसमासोत्तरभावप्रत्ययस्य पदार्थतावच्छेदक-सामानाधिकरण्ये शक्तिः । 'नीलोत्पलत्वमौपगवत्वं पाचकत्व'मित्यादौ नीलत्व-समानाधिकरणोत्पलत्वम्, उपगुसमानाधिकरणापत्यत्वम्, पाकसमानाधिकरणकर्तृत्व-मिति बोधः । तदादिसर्वनाम्नां बुद्धिस्थत्वेन बुद्धिस्थघटादौ शक्तिः ।

**महाभाष्यकारस्तु**–'गौः शुक्लश्चलो डित्थ' इत्यादिशब्दानां जातिगुणक्रियाशब्द-वाचित्वेन चतुष्टयी शब्दप्रवृत्ति'रित्याह । तस्यायमाशयः–गुणक्रियादीनामक्येन तद्वृत्ति-जात्यभावाद् व्यक्तिरेव वाच्येति । तत्रापि प्रयुज्यमानपदसमभिव्याहृततिबादिवर्णनिष्ठा शक्तिः । कर्त्रादिबोधजनको वर्णस्फोटः । तत्र युक्तिः—व्याकरणभेदेन आदेशिनामननु-गतत्वेन तत्र शक्तिग्रहासम्भवात्, 'पचमानः पच्यमान' इत्यादौ कर्तृकर्मबोधासम्भ-वाच्चेति । 'घटेन घट'मित्यादौ तृतीयान्तद्वितीयान्तयोः करणत्वकर्मत्वविशिष्टे घटे शक्तिः । विशिष्टबोधजनकः पदस्फोटः । तत्र युक्तिः–प्रकृतिभागस्य घटे प्रत्ययभागस्य कर्मत्वादौ शक्तिपक्षे घटनिष्ठकर्मत्वबोधो न स्यात् । न च संसर्गमर्यादया तद्बोधः । क्रमस्य च व्यवधानाभावरूपस्य वृत्त्या क्रमापेक्षया भिन्नायास्तस्या अलीकत्वात् । क्रमस्य च व्यवधानाभावरूपस्य वृत्त्या बोधकत्वासम्भवेन तद्बोधस्य वृत्तिजन्यत्वाभावेनाऽशाब्दत्वापत्तेः । तस्मात् पदस्यैव शक्तिरावश्यकीति पदस्फोटः । अत्र च द्वयी गतिः । वर्णसमुदायात्मकः पदरूपोऽवयवी, एकं पदमिति प्रतीतेः । एवं सेनावनादावप्येकोऽवयवी । स च वर्णैरभिव्यज्यते । वर्णानां मेलनं च संस्कारकल्पनयैवोपपादनीयम् । तदभिव्यङ्ग्यः स्फोटः । अयं च सखण्डपदस्फोट इत्युच्यते । यद्वा–वर्णसमुदायो न पदम्, किन्तु विजातीयध्वन्यभि-व्यङ्ग्यमेव पदम् । तत्र च वर्णा न सन्ति । विजातीयध्वन्यभिव्यङ्ग्या या जातिः, सा पदम् । तत्रार्थबोधानुकूला शक्तिः पदस्फोटः । अयं चाऽखण्डपदस्फोट इत्युच्यते । एवं 'हरे'त्यादौ । 'घटमानये'त्यादौ घटकर्मकानयने वाक्यस्य शक्तिः । अन्यथा घटकर्मत्व-रूपसंसर्गस्य पूर्वोक्तनयेनाऽशाब्दत्वापत्तेः । संसर्गमर्यादायाश्च दत्तोत्तरत्वात् । अतो वाक्यस्य पदजन्यतया वर्णपदाभिव्यञ्जकध्वनिविजातीयध्वन्यभिव्यज्यमानतया वा सखण्डवाक्यस्फोट इति । अखण्डवाक्यपक्षे ध्वन्यभिव्यङ्ग्यजातिस्फोट एव वाक्यमिति

पदवाक्ययोर्वर्णपदाभिव्यङ्ग्यत्वम् । वर्णाभिव्यङ्ग्यं पदं पदाभिव्यङ्ग्यं वाक्यमिति पक्षे सखण्डाखण्डौ पदवाक्यस्फोटौ । एवं वर्णाभिव्यञ्जकध्वन्यभिव्यङ्ग्यो जातिस्फोटश्च वर्णस्फोट इति । सोऽपि द्विविधो विभावनीयः । एवञ्च—वर्णपदवाक्याभिव्यञ्जकध्वन्यभिव्यङ्ग्यजातिस्फोटत्रयं वर्णशक्तिपदशक्तिवाक्यशक्तिरूपार्थस्फोटत्रयमिति षट् स्फोटाः । तत्र त्रयस्य शब्दस्फोट इति संज्ञा त्रयस्य चार्थस्फोट इति वैयाकरणमतनिष्कर्षः ।

तत्रेदं विभावनीयम्—ध्वन्यभिव्यङ्ग्यवर्णजातिस्फोटो नास्मन्मतं विरुणद्धि, वर्णानां ध्वन्यभिव्यङ्ग्यत्वात् । शब्दमात्रं तु भिद्यते । अर्थाभिव्यञ्जकवर्णस्फोटस्तु अनेकलिङ्गत्वादेर्वाचकतावच्छेदकत्वकल्पनागौरवापादकः । तदपेक्षया तत्त्वस्यैव तत्त्वौचित्यात् । तदन्तस्यार्थप्रत्ययस्तु शक्तिभ्रमात्(१) । 'पचते' इत्यादौ वर्णस्य कर्तरि सम्प्रदाने च शक्तौ सन्देहापत्तेश्च । एवं 'यात'मित्यादौ निष्ठात्वसंशयापत्तिः । एवं पदस्फोटेऽपि 'अमू घटयति पचे'त्यादावपि बोधापत्तिः । ननु च तव कथं संसर्गबोधः संसर्गमर्यादा च केयमिति चेत्, सम्बन्धत्वनियम आनुपूर्वीविशेष इति विवक्षितविवेकेन गृहाण । यदि च तव तत्तदानुपूर्वीज्ञानानां कारणताकल्पनं मम शक्तिकल्पनमिति तुल्यता विभाव्यते, तदा आनुपूर्व्या लौकिकदृष्टत्वाददृष्टशक्तिकल्पनापेक्षया लाघवमपि विभावय । विभावयान्यत्र 'प्रविश पिण्डीं गृहं भक्षये'त्यादौ तादृशानुपूर्वीस्मरणेन बोधम् । एतेन वाक्यस्फोटोऽपि प्रत्युक्तः । किञ्च—'घटः कर्मत्वमानयनं कृति'रिति निराकाङ्क्षवाक्यस्य कुतो न शक्तिरित्यादौ इच्छां विना न किञ्चिदुत्तरम् । मम तु आनुपूर्व्यभावान्न बोध इति सुलभम् । किञ्चास्तु नाम वर्णस्फोटः । पदवाक्यस्फोटयोरङ्गीकारे, तौ किं नित्यावनित्यौ वा ? आद्ये, किमानुपूर्व्यभिव्यङ्ग्यौ न वा ? । ध्वन्यानुपूर्व्या वर्णानुपूर्व्या वा पदानुपूर्व्या वाऽभिव्यञ्जकत्वे 'तद्धेतो'रिति नयेन(२)आनुपूर्व्या एव संसर्गज्ञाने हेतुताऽस्तु, कृतं शशशृङ्गरूपेण स्फोटेन । अतो नाद्यः । अन्त्ये, किं तज्ज्ञानम् ? वर्णमात्रं पदमात्रं न वा तत्, 'घटः कर्मत्व'मित्यादावपि तदुत्पत्त्यापत्तेः । अतः आनुपूर्वीविशिष्टादीनामेव तदुत्पादकत्वं वाच्यम् । तत्र चोक्तो दोषः । न च सर्वानुपपत्तिपरिहारायैको ध्वनिः पदवाक्याभिव्यङ्ग्य इति वाच्यम् । अनेकतत्तत्पदवाक्याभिव्यञ्जकाऽनन्तध्वनिव्यक्तितद्विशिष्टवैजात्यानन्तस्फोटकल्पनमपेक्ष्य लोकप्रसिद्धानुपूर्वीज्ञानस्य हेतुतामात्रकल्पने लाघवात् । यदि नित्यापेक्ष्य(३)लोकप्रसिद्धानुपूर्वीतावादिनयेऽपि शक्तपदस्यैव नित्यत्वात् साधुत्वाच्च । घटकर्मत्वयोः संसर्गस्याऽऽनुपूर्वीविशेषलभ्यत्वाङ्गीकारे बाधकाभावात् । एतेन वाक्यशक्तिरूपवाक्यस्फोटनिरासेऽन्विताभिधानवादो लक्षणावादश्च परास्तः । विवृतं चैतत् प्रथममयूखे, स्पष्टीकृतं चात्रेति न पौनरुक्त्यमिति चेतव्यं सूरिभिः ॥४॥

(१) 'ते भ्रमात्' इति ख-पुस्तके ।

(२) 'तद्धेतोरेव तदस्तु, किं तेन' इति न्यायेनेत्यर्थः ।

(३) अत्र ग्रन्थस्य कश्चिदंशस्त्रुटित इव प्रतिभाति ।

